भागः ३. Vol 3. | १३२६ मिताब्दस्य ३ यांशे JANUARY-MARCH 1920. | संख्या १ No. 1.

# संस्कृत-भारती ।

## आंगल-भाषा-परिशिष्ट-समेता ।

### त्रैमासिकी साहित्य-पुराण-दर्शन-विज्ञानात्मिका



**WITH AN ENGLISH SUPPLEMENT,**

A QUARTERLY ANGLO-SANSKRIT MAGAZINE
OF LITERATURE, SCIENCE AND ARTS.



वंग-मद्र-विहार-उत्कल-युक्तप्रदेश-आसाम-मध्यप्रदेश-विदर्भ-
बरदा-काश्मीराख्य-जनपदानां महात्मभिः शासकसङ्घैः
कृपयाऽनुमोदिता कृतसाहाय्यका च,
मुंबई-पञ्चाम्बु-हयदरावाद-भवनगर-जनपदानां महात्मभिः
राजकीयशिक्षाधिकारिभिः कृपयाऽनुमोदिता,
कलिकाता-मुंबइ-महीसुर-विश्वविद्यावेश्माधिकारिभिः महात्मभिः
कृपयाऽनुमोदिता च

Patronised by the Governments of Bengal, Madras,
U. Provinces and Oudh, Behar and Orissa,
" by the Administrations of Assam, C. P. and Berar,
" " Governments of Baroda, Kashmir and Jammu.
Approved " " Education Departments of Bombay, Punjab,
Hyderabad and Bhavanagar.
and " " Universities of Calcutta, Bombay and Mysore.

# संस्कृतभारती

सम्पादक–संघः ।

महामहोपाध्यायश्रीयुक्तकालीप्रसन्नभट्टाचार्य्यविद्यारत्नः एम्० ए०

महामहोपाध्यायश्रीयुक्तलक्ष्मणशास्त्री द्राविडः ।

श्रीयुक्तरमेशचन्द्रविद्याभूषण-काव्य-व्याकरण-सांख्य-वेदान्ततीर्थः

श्रीयुक्तउमाचरणवन्द्योपाध्यायः शास्त्री एम्० ए० ।

---

1. Rai Bahadur Kumudini Kanta Banerjee, M. A.,
Ex-Principal, Rajshahi College.
2. Mahamahopadhyaya Dr. Satish Chandra Vidyabhushan,
M. A., Ph. D., Principal, Govt. Sanskrit College, Calcutta.
3. Srijut Umacharan Banerjee, M. A.,
Principal, Raj College, Burdwan.

---

## "সংস্কৃত ভারতী"

( ইংরাজী পরিশিষ্ট সমেত )

সাহিত্য, পুরাণ, দর্শন ও বিজ্ঞান বিষয়ক ত্রৈমাসিক সংস্কৃত পত্রিকা।

বাঙ্গলা-মান্দ্রাজ-বিহার ও উড়িষ্যা-যুক্তপ্রদেশ ও অযোধ্যা-আসাম-মধ্যদেশ ও বেরার-বরদা এবং কাশ্মীর প্রভৃতি রাজ্যগুলির মহামান্য গবর্ণমেণ্ট সমূহ-কর্ত্তৃক অনুমোদিত ও কৃতসাহায্যক।

বোম্বাই, পঞ্জাব, হায়দরাবাদ ও ভবনগর প্রদেশসমূহের রাজকীয় শিক্ষাবিভাগ কর্ত্তৃক অনুমোদিত।

কলিকাতা, বোম্বাই ও মহীশূর প্রদেশত্রয়ের বিশ্ববিদ্যালয় কর্ত্তৃক অনুমোদিত।

বার্ষিক মূল্য ( প্রেরণ ব্যয় সমেত )--৫৲

প্রাপ্তিস্থান—পোষ্ট অফিস ও সহর বর্দ্ধমান, বঙ্গদেশ।

---

## संस्कृतभारती-सेवकाः ।

अध्यापक श्रीयुक्त अक्षयकुमारशास्त्रि-काव्य-सांख्य-वेदान्त-मीमांसा-सर्वदर्शनतीर्थः
( कलिकाता )

श्रीयुक्ततारा कण्ठभट्टाचार्य्यः, एम्, ए, बि, एल्, ( ,, )

पण्डित श्रीयुक्त जगन्नाथमिश्रतर्क-सांख्य-न्यायतीर्थः ( कटक )

,, ,, सुरेन्द्रमोहनभट्टाचार्य्यकाव्य-व्याकरण-पुराणतीर्थः ( ढाका )

,, ,, आशुतोषसेनगुप्तः एम्, ए, ( बाँकिपुर )

,, ,, हेमचन्द्ररायकविभूषणः एम्, ए०, ( पाबना )

,, ,, वीरेश्वरकाव्य-तर्कतीर्थः ( वर्द्धमान )

कार्य्यगृहम्—बंगदेशान्तर्गतवर्धमाननगरम् ।

मूल्यम् वार्षिकमग्रिम प्रेषणव्ययसमेतं आंगलपरिशिष्टसमेतायाः संस्कृतभारत्याः ···
राजतमुद्रापञ्चकमेव ।

,, ,, ,, ,, ,, संस्कृत-भारत्याः···सार्द्धराजतमुद्राद्वयमेव ।

,, ,, ,, ,, ,, आंगलपरिशिष्टस्य···सार्द्धराजतमुद्रैका ।


---

### विज्ञप्तिः ।

संस्कृतभारतीपत्रिकाग्राहकाणां संग्रहणाय कलिकाता-ढाका-सिलेट-पाटना-पुरी-वाराणसी-आलहाबाद-लक्ष्णौ-लाहोर-नागपुर-पुना-बोम्बे-माद्राज-दिल्ली-नामधेयनगरेषु श्रमशीला आंगलसंस्कृतविदः केचन चरित्र-वन्तो युवानोऽपेक्ष्यन्ते । प्रशंसापत्राणामनुलिपिभिः सह वर्धमाननगरे कर्म्माध्यक्षसकाशमावेदनपत्रं प्रेषणीयम् । भृतिनिर्द्देशस्तु आवेदकैरेव करणीयः ।


**मुद्रणस्थानम्—वाराणसीधाम ।**

**प्रचारकाः—महामण्डलमुद्रणयन्त्राध्यक्षाः ।**


प्रबन्धेषु व्यक्तानां मतानां भावानां च गुणदोषभागित्वं यथार्थं प्रबन्धकृतामेव, न तु पत्रिकासम्पादकानाम् ।

---

विशेषतो द्रष्टव्यम्—संस्कृतभारत्यां प्रकाशितानां प्रबन्धानां आंगलपरिशिष्टे, विपरीतरीत्या वा अनुवादो न प्रकाश्यते ।

पत्रिकां ग्रहीतुकामाः स्वं स्वं नाम, वासस्थानं, 'डाक गृहं' मण्डलं प्रदेशञ्च विस्पष्टैः अक्षरैः लिखेयुरिति । पूर्व्वखण्डे—अलब्धे उत्तरखण्डे लभ्यते चेत् तत् त्वरया कर्म्माध्यक्षसकाशं विज्ञाप्यम् ।

श्रीप्रफुल्लचन्द्रबन्द्योपाध्यायः, बि· ए·
कर्म्माध्यक्षः ।

## नीतिवाक्यानि।

चण्डालोऽपि द्विजश्रेष्ठः हरिभक्तिपरायणः।
हरिभक्तिविहीनस्तु द्विजोऽपि श्वपचाधमः॥ ( महानिर्वाणतन्त्रम् )

अयं निजः परो वेति गणना लघुचेतसाम्।
उदारचरितानान्तु वसुधैव कुटुम्बकम्॥ ( हितोपदेशः )

उत्थानवीरः पुरुषः वाग्वीरानधितिष्ठति।
उत्थानवीरान् वाग्वीरा रमयन्त उपासते॥ ( महाभारत-शान्तिपर्व )

शोकं विसृज्याद्य धृतिं भजस्व, सोत्साहता चास्तु विमार्गणेऽस्याः।
उत्साहवन्तो हि नरा न लोके, सीदन्ति कर्मस्वतिदुष्करेषु॥
( रामायण-आरण्यकाण्डम् )

तुल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येन केनचित्।
अनिकेतः स्थिरमतिर्भक्तिमान् मे प्रियो नरः॥ ( गीता-१२श अध्यायः )

न हायनैर्न पलितैर्न वित्तेन न बन्धुभिः।
ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान्॥ ( मनु-२य अध्यायः )

बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः।
महती देवता ह्येषा नररूपेण तिष्ठति॥ ( मनु-७म अध्यायः )

---

## पत्रिकानियमाः।

( १ ) इदं पत्रकं ग्रहीतुकामाः स्वानि नामानि धामानि च स्पष्टं कर्माध्यक्षाय वर्धमाननगरे विज्ञापयेयुः। मूल्यादिकं सर्वं तत्सकाशं प्रेष्येत। ग्रहीतुः स्थानपरिवर्त्तनादिकमपि तस्मै ज्ञाप्येत।

( २ ) पत्राणां उत्तरं प्रेप्सुभिः प्रेषणव्ययः प्रेरणीयः। शुल्कहीनम् अल्पशुल्कं वा पत्रं न गृह्यते।

( ३ ) पत्रिकायाः यश्च खण्डः यस्य प्रबन्धेनालङ्क्रियते स च खण्डः तस्मै मूल्यं विनैव दीयते॥

( ४ ) अस्मिन् पत्रके विज्ञापनप्रचारनियमादिकं कर्माध्यक्षसकाशात् ज्ञेयम्।

( ५ ) अत्र पत्रके आधुनिकराजनीतिं विहाय विषयान्तराणि अधिकृत्य प्रबन्धाः प्रकटीभविष्यन्ति। जनगतः साम्प्रदायिकः वर्णाश्रमसंश्रितः धर्मसम्पृक्त जातिविषयको वा विद्वेषः यत्र प्रबन्धे प्रकटीभविष्यति न स पत्रकेऽस्मिन् प्रकाशयिष्यते।

( ६ ) प्रबन्धाः पुस्तकानि पत्रकाणि च वर्धमाननगरे श्रीयुक्त उमाचरण बन्द्योपाध्यायस्य समीपं प्रेषयितव्यानि ।

( ७ ) काव्यालङ्कारादीनां धर्मशास्त्राणां पुराणेतिहासानां वेदवेदाङ्गादीनां च अंशविशेषाः अतिसरलव्याख्यया समेताः तदाश्रिताः प्रबन्धाः च अत्र ग्रथिष्यन्ते । अप्रकाशितानि काव्यानि विशदव्याख्यया समलङ्कृतानि मुद्रयिष्यन्ते । प्रकाशितानां प्रसिद्धानां ग्रन्थानां बालकैरपि सुखेन अवगन्तुं शक्यं भाष्यटीकादिकं अत्यादरेण मुद्रयिष्यते । अख्यातेभ्यः पुस्तकेभ्यः उद्धृतानाम् अंशानां यथायथम् ऋजुव्याख्यानेन प्रकटनम् अत्र भविष्यति ।

( ८ ) यूरोपवास्तव्यैः प्रवर्त्तिताः आधुनिकीः शिल्पविद्याः विज्ञानादिविद्याश्च आश्रित्य प्रबन्धा ग्रन्थनमेष्यन्ति ।

( ९ ) महात्मनाम् अस्मद्देशेषु जातानां प्रथितयशसां चरितानि आख्यानमायास्यन्ति

(१०) इतिहासेभ्यः पुराणेभ्यः धर्मशास्त्रेभ्यश्च नीतिमूलकं आख्यानजातं अत्र ऋजुपदविन्यासेन सङ्कलनीयम् ।

(११) ये सन्तः पत्रकेऽस्मिन् प्रबन्धादिकं प्रचारयितुम् ईहिष्यन्ते, ते प्रबन्धादिकं विस्पष्टैः सुखपठनार्हैः अक्षरैः पत्राणां एकस्मिन्नेव पृष्ठे ( न तु उभयोः पृष्ठयोः ) अवनरुन्निवेशतया लिपिबद्धं कुर्युः । अन्यथा तन्नैव मुद्रयिष्यते ।

(१२) मुद्रणायोग्यानां प्रबन्धानां प्रतिप्रेषणकारो न भविष्यति । 'पणद्वय'-मितप्रेरणव्यये लब्धे च ते प्रबन्धाः प्रतिप्रेषयिष्यन्ते ।

(१३) 'आङ्गल'भाषायां वङ्गभाषायाञ्च प्रायशः प्रयुक्तं, पदानां वाक्यांशानां वाक्यानाञ्च छेदक, चिह्नादिकं यथार्हं प्रयोक्तव्यम् ।

(१४) 'यूरोप' भूखण्डजातानां प्रत्नतत्त्वविदां भारतवर्षाश्रयाणि गवेषणाकार्याणि अत्र उद्घोषमेष्यन्ति ।

(१५) उपकथाः, कथाः संकथाः काश्चित्, आख्यानानि उपाख्यानानि कानिचित्, संवादाः आभाणकाश्च केवल, अन्तरा अन्तरा अत्र सन्निवेशं गमिष्यन्ति ।

(१६) श्रुतिस्मृत्युक्तानि भाषान्तरनिबद्धानि वचनानि उद्धर्त्तव्यानि चेत् तर्हि संस्कृतभाषयैव तेषां सरलं विशुद्धं व्याख्यानम् अधस्तात् योजनीयम् ॥

## अनुशासकाः पोषकाश्च ।

श्रीश्रीजगद्गुरु श्रीमद् अनन्ताचार्य्यस्वामिजी महाराजः काञ्चीपुरस्थ-प्रतिवादिभयङ्करमठाध्यक्षः ।

आचार्य्य श्रीश्रीगोस्वामि-गोवर्द्धनलालजिः जयपुरस्थ-श्रीनाथद्वारस्य महाराजः ।

श्रीयुक्तगदाधररामानुजदासमहान्तमहाराजः श्रीक्षेत्रस्य राजगोपालमठस्य अध्यक्षः

,, गोविन्दरामानुजदासः ,, ,, जगन्नाथपार्श्वमठस्य अध्यक्षः ।

,, परमहंसपरिव्राजकाचार्य्यरामकृष्णानन्दसरस्वतीस्वामी श्रीक्षेत्रस्य शङ्करानन्दमठस्य अध्यक्षः ।

,, रामकृष्णदासगोस्वामी अधिकारी श्रीक्षेत्रस्थ-सनकलमठस्य अध्यक्षः ।

,, पंडितदामोदररामानुजदासवैयाकरणभूषणः श्रीक्षेत्रस्य कदलिमठस्य अध्यक्षः ।

---

## अनुशासकाः प्रबन्धकृतश्च ।

महामहोपाध्यायश्रीयुक्तप्रमथनाथतर्कभूषणः ।

,, ,, गुरुचरणतर्कदर्शनतीर्थः ।

,, ,, विन्ध्येश्वरीप्रसाद द्विवेदी ।

,, ,, आद्यनाथन्यायभूषणः ।

,, ,, सदाशिवमिश्रः ।

,, ,, सुब्रह्मण्यशास्त्री ।

,, पण्डितराज यादवेश्वरतर्करत्नः ।

,, श्रीयुक्तविश्वधरमिश्रः ।

,, ,, वांके रायनवकगोस्वामि विद्यासागरः ।

पण्डित कविराज,, गणनाथसेनः एम० ए०, एल० एम० एस् ।

,, श्रीयुक्त एन्. एस्. अनन्तकृष्णशास्त्री ।

,, ,, कुञ्जविहारि तर्कसिद्धान्तः ।

अध्यापक ,, जानकीनाथभट्टाचार्य्यः एम्० ए०, बि० एल्० पि० आर० एस् ।

,, ,, ब्रजलालचक्रवर्त्ती एम्० ए०, बि० एल्० ।

,, श्रीयुक्त आशुतोषशास्त्री एम्० ए० ।

,, ,, भागवतकुमार शास्त्री एम्० ए० ।

,, ,, रायसाहेब विधुभूषणगोस्वामी विद्याम्बुधिः एम्० ए० ।

,, ,, पाण्डेयरामावतारशर्म्मा साहित्याचार्य्यः एम्० ए० ।

वैद्यरत्नः कविराज श्रीयुक्त योगेन्द्रचन्द्रसेनः विद्याभूषणः एम्० ए०

,, ,, यामिनीभूषणरायः एम् ए० एम्० बि० ।

,, ,, हेमचन्द्रसेनः कविरत्नः ।

* * * * *

# सांख्यसारः ।

## 'सांख्यसार-विवेकप्रदीपा'ख्येन विस्तृत-विशद-व्याख्यानग्रन्थेन सहितः ।

सांख्यशास्त्रे प्रवेशमभिलषतां सरणिभूतोऽयं सांख्यसारः प्रथममालम्बनं, प्रथमपरीक्षायाम् उपाधिपरीक्षायाञ्च पाठ्यतया निर्दिष्टत्वेन तत्तत्परीक्षार्थिभिः सर्वैरवश्यमध्येतव्यञ्च । ग्रन्थस्यास्यातिसंक्षिप्ततया दुर्बहतर्कजालसङ्कीर्णतया च सरणिरियं सर्वतः कण्टकाकीर्णेव, अतिदुरूहतया घनतमसाच्छन्नेव च प्रतिभाति कोमलमतीनां बालकानाम् । अपेक्ष्यते चास्य अध्ययनाध्यापनादौ प्रदीप इव सुविशदतया अवभासकः कण्टकानामिव तर्काणां परिष्कारकः कश्चिद् व्याख्यानग्रन्थः । नास्त्येव च प्राचीनः आधुनिको वा तादृशः कश्चिद् ग्रन्थः अस्माकं श्रुतिपथमागतः । अतो बहुप्रयत्नेन सांख्यशास्त्रे व्युत्पित्सूनां बालकानां सुखबोधाय प्रकाश्यते 'संस्कृतभारती' पत्रिकायां तादृशेन सांख्यसारविवेकप्रदीपनामधेयेन प्रतिपदमर्थप्रकाशकेन सविचारं युक्तितर्काणां परिष्कारकेण च व्याख्यानपुस्तकेन सनाथोऽयं सांख्यसाराख्यः ग्रन्थः । ग्रन्थश्चायं प्रतिखण्डं पत्रिकायामस्यां षोडशपृष्ठात्मकः खण्डशः प्रकाश्यते । अधुना द्वात्रिंशत्पृष्ठात्मकः ग्रन्थः प्रकाशं गतः । पत्रिकाशरीरात् पृथग्भूतश्चायं विद्यार्थिनामुपादानसौकर्य्याय मुद्र्यते । ये खलु ग्रन्थमिमं खण्डशो ग्रहीतुमिच्छन्ति तैरिदानीं चतुःषष्टिपृष्ठात्मकः खण्डः ग्रहीतुं शक्यते । ततश्च यदा यदा यो यः खण्डः मुद्रितो भविष्यति तदा स स खण्डः लभ्येत । प्रति षोडशपृष्ठात्मकभागस्य (फर्म्माद्वयस्य) मूल्यं =) आनकद्वयम् ।

श्रीप्रफुल्लचरण बन्द्योपाध्यायः,
संस्कृत-भारती आफिस, वर्द्धमान, वङ्गदेश ।

## संस्कृत-भारती-कार्य्यालयः ।

## बङ्गदेशान्तर्गत-वर्द्धमान-नगरे ।



**विशेषतो द्रष्टव्यम्**—वंग-मद्र-विहार-युक्तप्रदेश उत्कल-आसाम-मध्यप्रदेश-विदर्भ-बरोदा-काश्मीराख्यानां विश्रुतानां जनपदानां पुण्यश्लोकाः महानुभवाः संस्कृतविद्योत्साहिनः शासकसंघाः प्रातिस्विक 'कालेज'ख्योच्चविद्यामन्दिरेषु क्वचित् क्वचित् निम्नतरविद्यामन्दिरेषु चतुष्पाठीषु च विद्यार्थिनां पठनार्थं प्रति-पत्रं इमां पत्रिकां गृह्णन्तः साहाय्यकं च कुर्व्वाणाः [illegible] परिचालकान् यथार्थं आप्यायितवन्तः । अतः एते शासकसंघान् प्रति कृतज्ञता प्रकटय्य भूरिशो धन्यवादान् प्रकर्षेण प्रयुञ्जते । कलिकाता बोम्बाइ-महीशूर-विश्वविद्यालयेश्वराधि[illegible] बोम्बाइ-पञ्जाब-हयदराबाद-भवनगर-जनपदानां शिक्षाधिकारिणश्च महात्मानः राजपुरुषा कृपया उत्साहप्रदानेन पत्रिकापरिचालकानां कृतज्ञताभाजनानि संवृत्ता इति ।

---

### इदं पत्रकं ग्रहीतुकामानां भद्रमुख्यानामावेदनपत्रम् ।

महाशय,

पत्रकस्य, पत्रकयोः / पत्रकाणां वा ——— ग्राहकत्वेन मम नाम लिपिबद्धं कुर्य्याः । वार्षिक-मूल्यम् ——— रूप्यकाः ——— आणकाः मया प्रेष्यन्ते इति ।

आवेदकस्य

| | |
|---|---|
| संस्कृतभारत्याः कार्य्याध्यक्षस्य | श्री ——— |
| सकाशम् | विषय-पद-संज्ञा ——— |
| बङ्गदेशान्तर्गत-वर्द्धमाननगरे | धाम (ग्रामस्य, नगरस्य वा 'डाक'गृहस्य, |
| अब्दे मासि दिवसे | 'जिला'ख्यमण्डलस्य, प्रदेशस्य च) निर्द्देशः |

बङ्गाब्दस्य मासि दिने

बङ्गदेशस्य वर्द्धमाननगरे संस्कृतभारती कार्य्यालयः ।

| | | | |
|---|---|---|---|
| परिशिष्टसमेतायाः संस्कृतभारत्याः | ... | वार्षिकं मूल्यम् ५) | रूप्यकाः |
| संस्कृतभारत्याः | ... | ३॥) | ,, |
| आंगलपरिशिष्टस्य | ... | १॥) | ,, |

वंग-मद्र-विहार-युक्तप्रदेश-आसाम-मध्यदेश-वरदा-काश्मीरादि-जनपदानां महात्मभिः शासकसंघैःकृतसाहाय्यका ।

'कालेजाख्येषु'-उच्च-आंगलेषु-अपरेषु विद्यालयेषु चतुष्पाठीषु, पुस्तकालयेषु अन्यत्र च व्यवहारार्थम् । संस्कृत-समिति-परीक्षा-ग्रन्थादीनां शास्त्रोक्त-प्रवन्धानां विषयान्तराणाञ्च विस्तृत-प्रचारार्थम्,-

संस्कृतभारती त्रैमासिकी-काव्यदर्शन-विज्ञानादिविषयाश्रिता पत्रिका । ससम्मानमावेदनमिदम्-

भवतां साहाय्यमूलकोऽयमुद्यमः । उपायनिर्देशस्तु अधः क्रियते । यथारुचि उपायान् अवलम्ब्य संस्कृतविद्याप्रसारं साधयन्तु, अस्मांश्चानुगृह्णन्तु भवन्तः महात्मानः संस्कृतानुरागिणः ।

( क ) प्रबन्धानां नानाविषयाश्रितानां प्रेषणम् ।

( ख ) ग्रन्थपत्रिकादीनां प्रेरणं, मुद्रण-विनिमय-समालोचनार्थम् ।

( ग ) सुद्ध-सरस-भाषाग्रन्थानां संस्कृतानुवादः ।

( घ ) संस्कृत-समिति-चतुष्पाठी-कालेजादीनां विवरणसंग्रहः ।

( ङ ) विविधपत्रादि-प्रेषणम् ।

( च ) श्रीमतां निवास-ग्राम-नगरेषु स्थितानां संस्कृतानुरागिणां विदुषां धनिनां च नाम-धाम-निर्देशः ।

( छ ) उपायान्तरैर्वा पत्रिकाप्रचारवर्धनम् ।

विनयावनतस्य-

श्रीप्रफुल्लचरणवन्द्योपाध्यायस्य ।

विशेषतो द्रष्टव्यम्-

अध्यापकैः स्वव्ययेन भृतासु संस्कृतपाठशालासु द्वादश अधिका वा उपाधिपरीक्षार्थिनः पाठकाः सन्ति चेत्, तर्हि मूल्यं विनैव पत्रिका प्रेष्यते ।

उच्च-आङ्गल-संस्कृत-पाठशालायास्तु विद्यार्थिनां कृते अर्द्धमूल्यं निर्धारितम्, अतस्त्वरया आवेदनपत्रं प्रेषणीयम् ।

## ग्रन्थ-पत्रिका-सन्दर्भादीनां- प्राप्तिस्वीकारः समालोचनम्।

स्वीक्रियतेऽस्माभिरेतासामधोलिखितानामनवद्यानां मूलनिम-प्रबन्धनि-बद्धपुष्ट-कलेवराणां ग्रन्थ-पत्रिकाणामधिगमः। याचामहे च एतासां सम्पादक-प्रमुखात् कार्य्यदर्शिनः सततं निरामयम्। आङ्गलभाषामय-ग्रन्थपत्रिकादीनां प्राप्तिस्वीकारः आङ्गलपरिशिष्टे द्रष्टव्यः। सं० भा, सम्पादकाः:—

**आर्य्यप्रभा**—संस्कृतमासिकपत्रिका। सम्पादकः—श्रीकुञ्जविहारी तर्कसिद्धान्त-काव्यतीर्थः। सहकारी सम्पादकः—श्रीनगेन्द्रनाथ सिद्धान्तरत्नः। अस्या अग्रिमवार्षिकमूल्यं सार्द्धैकरूपकम्। प्रतिखण्डमानकत्रयम्। प्राप्तिस्थानम् वेड़ोविलतोरा मानभूम।

२—**मञ्जुभाषिणी**—संस्कृतसाप्ताहिकसमाचारपत्रिका। प्रतिशुक्रवारं प्रकाश्यते। सम्पादकाः—श्रीकाञ्चीप्रतिवादिभयङ्करमठाध्यक्षानन्ताचार्य्याः। वार्षिकमस्या अग्रिममूल्यं रूप्यकत्रयम्। प्राप्तिस्थानं काञ्चीनगरं मद्रदेशान्तर्गतम्।

३—**संस्कृतसाहित्यपरिषत् पत्रम्**—संस्कृतपरिषदो मासिकं मुखपत्रम्। सम्पादकः—श्रीदुर्गाचरण सांख्यवेदान्ततीर्थः। सहकारिसम्पादकौ—श्रीकालीपद-तर्काचार्य्यः। श्रीसुरेन्द्रनाथ मजुमदारशास्त्री च। वार्षिकमूल्यं रूप्यकत्रयम्। प्रतिखण्डमूल्यमानकचतुष्टयम्। प्राप्तिस्थानम्—कलिकाता—नगर्य्यां श्यामबाजार ब्रीजरोडस्थं संस्कृत-साहित्य-परिषद्-भवनम्।

४—**अमृतभारती**—मासिकं प्रकाश्यमाना संस्कृतपत्रिका। वर्षस्यैकस्य मूल्यमस्या रूप्यकद्वय, मासषट्कस्य मूल्यम्—एकरूप्यकम्। प्राप्तिस्थानम् त्रिप्पुनिथोर—कोचिनराज्ये।

५—**विद्योदयः**—संस्कृतमासिकपत्रम्। सम्पादकौ श्रीभवविभूति विद्याभूषणः एम्. ए. श्रीभवभूति विद्यारत्नश्च। वार्षिकमूल्यम् छात्राणामसमर्थानां पक्षे सपादैकरूप्यकम्। तदन्येषान्तु रूप्यकद्वयम्। प्राप्तिस्थानम्—विद्योदयकार्य्यालयः, भाटपाड़ा, २४ परगणा।

६ **ब्राह्मण-समाजः**—बङ्गभाषामयं मासिकपत्रम्। सम्पादकाः—श्रीयुक्तभवभूति विद्याभूषणः, श्रीयुक्तवसन्तकुमारतर्कनिधिः, कुमारश्रीयुक्त पञ्चाननमुखोपाध्यायबाहादुरः, कुमारश्रीयुक्तशरच्चन्द्र सिंहशर्म्मा एम्, ए, बाहादुरश्च। वार्षिकमूल्यमस्य रूप्यकद्वयं, प्रतिखण्डमाणक-चतुष्टयम्। प्राप्तिस्थानम्—कलिकातामहानगर्य्यां ८८ नं आमहार्ष्ट ष्ट्रीट् स्थितभवनम्।

७—प्रतिभा—ढाका-साहित्यपरिषत्पालिता वङ्गभाषामयी मासिक—पत्रिका । सम्पादकः—अध्यापक श्रीअनुकूल चन्द्र सरकारः, एम्, ए, पि, एच्, डि, एफ्, सी, एस् । वार्षिकमूल्यम् २॥) । प्राप्तिस्थानम—प्रतिभा-कार्य्यालयः, ढाका ।

८—साहित्यपरिषत्पत्रिका—वङ्गभाषामयी त्रैमासिकपत्रिका । पत्रिकाध्यक्षः—श्रीखगेन्द्रनाथ मित्र एम्, ए । प्राप्तिस्थानम्—कलिकातानगर्यां २४३।१ अपार सार्कुलार-रोडस्थित—वङ्गीय—साहित्य—परिषत्—मन्दिरम् । अस्याः प्रतिसंख्याया मूल्यम्—द्वादशानकाः ।

९—श्रीश्रीनित्यधर्म्मः—सर्व्वधर्म्म-समन्वयो वा वङ्गभाषामय—मासिक—पत्रम् । वार्षिक—मूल्यम् रूप्यकद्वयम्, प्रतिसंख्या—मूल्यम् आनक-चतुष्टयम् । प्राप्तिस्थानम्—कालीघट्टस्थ—महानिर्व्वाण-मठम् कलिकाता, २६ नं० मनोहरपुकुर—रोड ।

१०—सांख्यसूत्रम् अनिरुद्धवृत्तिसहितम्—आर्य्यप्रभासम्पादकेन वेदान्तवेदान्ता-दर्शनविद्यालयाध्यापकेन काव्य-तर्कतीर्थोपनामक-श्री-कुञ्जविहारि-तर्कसिद्धान्तेन स्वमर्यादया तत्त्वबोधिनीसमा-ख्यटीकया बङ्गानुवादेन समलङ्कृत्य प्रकाशितम् । मूल्यं रूप्यकद्वयम् ।

सत्यपि प्रवचनभाष्यादौ महति निबन्धे महर्षिकपिलकृतसांख्यसूत्रे प्रथम-प्रवेशमभिलषतां बालकानां संक्षिप्तत्वादियमनिरुद्धवृत्तिः परमावलम्बनम् । वृत्ति-रियं स्वल्पाक्षराऽपि अर्थतो गरीयसीति नास्ति कस्यापि विमतिः ।

सांख्यसूत्रे व्युत्पत्तिमभिलाषुकाः सुकुमारमतयो बालकाः सुगमाया अन्य-स्याः कस्याश्चित् सरणेरभावेन इमामेव वृत्तिरूपां सरणिमवलम्बन्ते प्रथमतः । अथेयमल्पाक्षरतया दुरूहार्थवन्धुरतया पदे पदे परिस्खलन्ति, पाठवैषम्यकण्टक-परिक्षताः परमावहन्ति रुजम् । गिरिकूटैरिव दुर्लङ्घ्यपदार्थजातैः प्रतिहताः पतन्ति वाऽपथे । एवं कृच्छ्रेण अतिक्रम्यापि इमां नाधिगच्छन्ति स्वाभिल-षितमर्थम्, यतः प्रायेणास्याः अर्थजातमन्तर्गतमेव वर्त्तते । तत्र दीपा-लोकैरिव भित्तितिरोहितार्थानां स्वल्पाक्षरैरस्या गूढार्थानां प्रकाशो न सम्भ-वति । अतः उपरिष्टात् परिभ्रमन्तः अपि विद्यार्थिनः नासादयन्ति गुरूनन्तर्नीतार्थान् ।

अस्मत्सुहृत्तमेन बहुदर्शनमर्म्मज्ञेन विद्वद्वर्य्येण श्रीमता कुञ्जविहारि तर्क-सिद्धान्तमहोदयेन सुकुमारमतीनां सुखबोधाय विरचिता अस्याः तत्त्वबोधिनीस-माख्या यथार्थबोधिका काचित् टीका, उपहृताच सा अस्मभ्यम्; टीकेयं सरला,

सूत्रार्थप्रकाशिका, क्लिष्टेषु व्याख्येयानां दुर्लभतया प्रसिद्धानामंशानां सुखबोधिका, नातिविस्तरा चेति महदुपकरिष्यति बालकानाम् । लेखकादिप्रमादात् कालपरम्परया वैषम्यप्राप्तानामपि अंशानां सुष्ठुकृतमत्र विवेचनमिति प्रहृष्यन्ति नो मनांसि अत्यादरेण । आशास्महे आयुष्मन्तः श्रीमन्तः बालका अनया सुखेन सांख्यसूत्रार्थान् संग्रहीतुं शक्ष्यन्तीति शम् ।

१२ । **पाण्डवविजयं महाकाव्यम्**—मूल्यं रूप्यकमात्रम् । महाकाव्यमिदं रुक्मिणीहरण-सुभद्राहरण—सत्यभामापरिग्रह—प्रभृतिकाव्यरत्नखचितं एम्, ए, कविभूषणोपाधिना श्रीमता हेमचन्द्ररायेण कृतम् । सरसालङ्कारकमनीयमेतत् श्रावयमाणं स्मारयति नो महाकवीनां माघभारविप्रभृतीनां रचनापद्धतिम् । अतिमात्रहृदयङ्गममेतत् सकृदपि तावत् पठनीयमेव नवनवरसास्वादलुब्धैरसिकमहोदयै रिति परमाशंमहे । हृदयहारि किल मुद्रणसौष्ठवमप्येतस्य । गतिप्रायं चास्य प्रबन्धनाम्नैव स्फुटमभिव्यक्तमितिविस्तराद्विरम्यते ।

१३ । **संस्कृतशब्दशिक्षा**—संस्कृतभाषोपनिबद्धा । श्रीयुक्तशरच्चन्द्रकाव्यतीर्थमहोदयेन प्रणीता प्रकाशिता च । प्राप्तिस्थानम्—बोयाड़ी, राजसाही । मूल्यम्—षडानकानि ।

१४ । **देवर्षिसम्वादः**—संस्कृतपद्यमयोऽयं ग्रन्थः । श्रीयुक्तयज्ञेश्वरशास्त्रि-विरचित—काव्यविशेषः ॥

१५ । **सविशेषनिर्विशेष श्रीकृष्णस्तवः**-संस्कृतभाषामयः बांगलभाषया अनूदितश्च । श्रीयुक्तभगवच्चिम्वाकाचार्य्यप्रणीतः ॥

१६ । **सरलपाठपाठः**—पुस्तकमिदं बङ्गभाषामयं प्रथमद्वितीयभागसहितम् । श्रीयुक्तशरच्चन्द्रचक्रवर्त्ति-महाशयेन प्रणीतम् । 'सिटी-लाइब्रेरी'तः प्रकाशितम् । मूल्यम् सार्द्धैकआनकम् ।

१७ । **स्वास्थ्यविज्ञानम्**—तृतीयचतुर्थमानोपयोगिनी. बङ्गभाषानिबद्धेयं पुस्तिका । श्रीबहरलाल दास एल्, एम्, एस्, श्रीशरच्चन्द्रब्रह्मचारी एम्, ए, बि, टि, च महाशयाभ्यां रचितम् । प्राप्तिस्थानम् ६० नं कालेजष्ट्रीट्, ष्टुडेन्टसलाइब्रेरी, कलिकाता । मूल्यम्—पञ्चानकानि ।

१८ । दूरीकुर्वन्नमेतं दुतकनकाति बङ्गभाषामयः प्रथमभागः । प्रणेता चास्य देव स्वकीयांघ्रिसरोजपूजाप्राप्तिस्थानम्—ष्टाण्डार्डलाइब्रेरी, ढाका । त्रिनान्तरायं निखिलेष्टदं [illegible]

श्रीश्रीसरस्वत्यै नमः ।

# संस्कृतभारती

भागः ३, ३यवर्षम् ] १६२०-तमखृष्टीयाब्दस्य १मांघे [ संख्या १

## स्तोत्रस्तबकम् ।

### श्रीश्रीगणेशस्तवः ।

पुष्पस्रजं चूतफलं च पक्कं नवेक्षुदण्डं तिलमोदकं च ।
परश्वधञ्चापि करैर्दधानं भजामि सिद्धाभिधविघ्नराजम् ॥ २१ ॥
चन्द्रखण्डधरमर्यमशीतद्योतपावकदृशं गणनाथम् ।
सर्वकर्मसु पुरस्कृतमार्यैं श्शर्वनन्दनमिभाननमीडे ॥ २२ ॥
ओजस्करञ्चौषधिनाथचूड मोङ्कारगम्यं कलभेन्द्रवक्त्रम् ।
ओजायिताधानविचक्षणंतमोघैस्सुराणां विनुतं प्रपद्ये ॥ २३ ॥
इन्दीवरं दाडिमशालिवीणागुञ्जाक्षसूत्राणि च हस्तपद्मैः ।
दधानमानील-निजाङ्गशोभं भजे सदोच्छिष्टगणाधिनाथम् ॥ २४ ॥
सुन्दरीमदनमन्दिरमाध्वी-पानलोलुपनिजाशय-भृङ्गम् ।
सत्तृतीयपुरुषार्थसकामोच्छिष्टनामकमहं कलये त्वाम् ॥ २५ ॥
श्रीवराहपुर भूमिसुरौघ-प्रेत्यमाणविभवं प्रतिवारम् ।
निर्मलाशयनिषेवितपादं कल्मषच्छिदमिमं कलयेऽहम् ॥ २६ ॥
इतिप्रमाथिस्तुतिमीशितारमीक्षावलाविष्कृतसर्वलोकम् ।
ईप्सार्थविश्राणनकल्पवृक्षमीशानसूनुं शरणं प्रपद्ये ॥ २७ ॥
चक्रं चापं कुठारं शरमपि रदनं पुष्पशालीक्षुदण्डान्
शंखं पाशं शिताग्रां कुशमपि सततं बिभ्रतं हस्तपद्मैः ।
नित्यं संसेवकानामभिमतविषये विघ्नपूगान् स्वशक्त्या ।
दूरीकुर्वन्तमेतं द्रुतकनकनिभं विघ्नराजं भजेऽहम् ॥ २८ ॥
देव त्वदीयांघ्रिसरोजपूजास्तोत्रादिकं त्वद्भजनं च पुंसाम् ।
विनान्तरायं निखिलेष्टदं हि बाभाति तं त्वां शरणं प्रपद्ये ॥ २९ ॥

सर्वविघ्न-विनिवारण-दक्षं शर्वतोषणकरं कमलाक्षम् ।
गर्वदुष्टजननिग्रहलीलं रचिताखिलमिभानन-मीडे ॥ ३० ॥
पाशदन्तमणिकुंभवरांश्च हेमकल्पलतिकां च कराब्जैः ।
बिभ्रतं घुसृण-वर्ण-सवर्णं द्विपदन्तिमुखमाकलयेऽहम् ॥ ३१ ॥
कारुण्यपाथोनिधिमाश्रितार्तिभङ्गैकलोलं घुसृणारुणाङ्गम् ।
कल्याणदं क्लिष्टविनाशदक्षं करीन्द्रवक्त्रं सततं प्रपद्ये ॥ ३२ ॥
वृत्रशत्रुमुखदेवसमीड्यं पुत्रितसुखकाङ्क्षितदन्तम् ।
शत्रुसंहृतिपरायणचित्तं सर्वविघ्नहरमीशजमीडे ॥ ३३ ॥
पाशं मोदकमुद्गराङ्कुशवरदानाक्षस्रजं चाभयं
दिव्यं चाम्रफलं परश्वधवरौ हस्तांबुजैर्बिभ्रतम् ।
सिंहारूढमभीष्टदाननिरतं भूतांकनागाननं
गौराङ्गं गणनाथमद्य कलये हेरम्ब-नामांकितम् ॥ ३४ ॥
मद्बान्धवं मत्कुलदैवतं च मदिष्टसंपूर्त्तिकरं मदीशम् ।
मदीयसर्वाघनिवारकं तं मत्तेभवक्त्रं सततं प्रपद्ये ॥ ३५ ॥
षड्वर्गदैत्यकुलनाशनलब्धवर्णं षड्ग्रन्थिभेदनपटिष्ठमुदारचित्तम् ।
स्कन्दप्रियाग्रजमुमासुतमेकदन्तं भक्तार्त्तिभञ्जनपरं कलये गणेशम् ॥ ३६ ॥
पार्श्वे हस्तलसत्सरोरुहयुते देव्यौ मुदा लोकयन्
गौराङ्गः शुकपाशरत्नकलशान् खड्गांकुशौ दाडिमम् ।
दिव्यां कल्पलतां शुभं वरमपि हेमंकरैः स्वैः करै
र्बिभ्राणोऽवतु मां समीहितददो लक्ष्मीगणेशः प्रभुः ॥ ३७ ॥
वरेण्यवृत्तं विगताभिमानं वदान्यचूडामणिमाश्रितानाम् ।
विघ्नाद्रिसंभेदनतीक्ष्णवज्रं विनायकं त्वां सततं प्रपद्ये ॥ ३८ ॥
हेरम्बलम्बोदरशूर्पकर्ण गजाननोमासुत देवदेव ।
संसारपाथोनिधिकर्णधार गणाधिपावेति सदा भजे त्वाम् ॥ ३९ ॥

महागणपतिः—

बीजापूरगदेक्षुचापकमलव्रीह्यग्रपाशोत्पल
श्रीमच्चक्रवरांश्च रत्नकलशं हस्तांबुजे बिभ्रतम् ।
रक्ताङ्गं शशिखण्डचूडममलं नेत्रत्रयोद्भासितं
स्वाङ्कारूढकलत्रगाढपरिरब्धाङ्गं गजास्यं भजे ॥ ४० ॥

स्वतातवद्भक्तगणाय भुक्तिं मुक्तिञ्च दातुं सरसी-तटान्ते ।
वटद्रुमाधोवसतिप्रियाय नमो गजास्याय गणाधिपाय ॥ ४१ ॥

स्वामिन् गजानन विभो शशिकान्तराज भव्यप्रदाम्बुजसुहृच्छिपावकाक्ष ।
विप्रप्रियाश्रितभयापह विघ्नराज पाहीश मां त्वमतिमन्दधियं गणेश ॥ ४२ ॥

पाशाङ्कुशाम्रफलनैजरदान् वहन्तं रक्ताङ्गशोभमपि मूषिकराजवाहम् ।
विघ्नान्धकारमिहिरं निखिलेप्सितानां दातारमत्र कलये विजयं गणेशम् ॥ ४३ ॥

कलमकणिशशोभिहस्तपद्मं करिवदनं कुटिलाशयातिदूरम् ।
कमलभयनिरासपाशहस्तं कलशविराजितपुष्करं भजे त्वाम् ॥ ४४ ॥

वामहस्तसरसीरुहे दधन् मोदकन्त्वभयसव्यहस्तकः ।
दीप्रपञ्चमणिदीपभासुरो बालदन्तिवदनस्तनोतु शम् ॥ ४५ ॥

अपूपपाशांकुशदन्तदीव्यत्कुठारविभ्राजितहस्तपद्मम् ।
पीताङ्गकान्तिं सुरवृक्षमूलस्थितं भजे नृत्यगणाधिनाथम् ॥ ४६ ॥

गङ्गाधरप्रियसुतं गणसंघनाथं गीतप्रियं गुरुगदापहनैजवृत्तम् ।
गण्डस्खलन्मदपयोधरगन्धलुब्धभृङ्गालंबनादसुहितं कलये गणेशम् ॥ ४७ ॥

वाराहपत्तनगतस्य पितुः पुरारेः पार्श्वस्थहेमसरसीसलिलं सलीलम् ।
नेत्रान्तपातविभवेन पुनानमाद्यं सर्वार्तिभञ्जनपटुं कलये गणेशम् ॥ ४८ ॥

ऊर्द्ध्वगणपतिः ॥—

कल्हारपंकजधनुश्शरशालिकेतुदन्तांकुरानपि गदां दधतं कराब्जैः ।
आलिङ्गितं हरितगात्रलता स्वदेव्या चामीकराभवपुषं कलये गणेशम् ॥ ४९ ॥

यद्भासा निखिलं विभाति धरणीचक्रं यदीयाज्ञया
लोकान् भासयतः स्वकीयमहसा तौ पुष्पवन्तावपि ।
यद्लीलाबलवैभवेन वपुरारोग्यादिसंपद्युताः
सर्वे भान्ति तमेकदन्तमनिशं वन्दे गणानां पतिम् ॥ ५० ॥

(क्रमशः ।)

## सारस्वतगीतिस्तोत्रम् ।

भारतनन्दनवन्दननन्दिता विहरति भारती नवघनभवने ।
चरणकमलदलपरिमलमधुरितमधुकररवमुखरितमधुपवने ॥
जनमनोरञ्जनगुञ्जनगञ्जनवीणानादनिजितसुरघनसदने ।
पिककुलकलकलकलयितकिसलयवलितचमरवृतसरसिजवदने ॥
हंसविडम्बितहंसकशिञ्जनधूनितपुञ्जितसितवनकमले ।
शशधररुचिहरमुखरुचिधवलितधवलरदनरुचिशुचिकरविमले ॥
भूषितसिततन्वङ्ग्याः श्वेतसरोजमण्डिते ।
भारत्या भारतारण्ये भारती भान्ति भा रतिः ॥ १ ॥

प्रलयाम्बुनिधौ पुरा ममौ न विरिञ्चिमुखाम्बुजोद्गता ।
तनुनादमयी च यत्तनुर्ननु साऽद्य वनेऽपि शोभते ॥ २ ॥

श्वेतहंसकमलासना सिता श्वेतवर्णपरिधानमण्डना ।
व्यज्यते मधुरवल्लकीरवै रक्तपादकमलाभया परम् ॥ ३ ॥

तरुनिषण्णप्रसन्नपिकारुतं मधुसमीरसमीरणचञ्चलम् ।
शिशिरसान्द्रप्रतन्द्रिप्रबोधितं विरचितं स्वदृशेव तया वनम् ॥ ४ ॥

क्वणद्विपञ्चीमलिमञ्जुगुञ्जने मरालनादैः पदनूपुरध्वनिम् ।
विमिश्रयन्ती पवनावधूननच्छलेन वाणी मधुरं प्रनृत्यति ॥ ५ ॥

चलकिसलयलीनाः कोकिला वीतरागा
विषयिण इव भृङ्गा माधवीगन्धमुग्धाः ।
ललितमलयवाताः प्रेमिका लोकपाला
वनभवनमुपेता भारतीवन्दनार्थम् ॥ ६ ॥

पुण्यं तत् काननं धन्यं वरेण्यं मङ्गलावहम् ।
सखीवल्लपतो लक्ष्मीभारत्यौ यत्र संस्थिते ॥ ७ ॥

का त्वं वाणी मृगय वदनं श्वेतपद्मासनाहं
नीराधारं व्रज वद रमे ! नाम ते चञ्चलाहम् ।
यत्रासि त्वं न च मम गतिः पश्य लोले ! निकुञ्जं
भाषाकान्तिस्फुरितविभवं पान्तु वाण्यो जनन्योः ॥ ८ ॥

वेदा यस्याः किरीटः कमलनयनयो रञ्जनं दर्शनानि
स्वाङ्गे पुण्यं सुशुभ्रं सुरुचिरवसनं नूपुरं नृत्यगीतम् ।
काव्यं हारश्च कण्ठे रुचिरभुजयुगे कंकणं ब्रह्मचर्य्यं
प्रोद्भासा ब्रह्मविद्या कटितटरशना भूषणैः किन्तु तस्याः ॥ ९ ॥
ध्येया नित्यं हरिहरविधिध्यातमूर्त्तिः प्रसन्ना
ज्ञेया नित्यं सकलविबुधज्ञानदात्री च धात्री ।
गेयं नाम प्रणवमधुरं सर्वशक्तिस्वरूपं
पेयं तस्याः पदकमलयोः स्यन्दनं माकरन्दम् ॥ १० ॥
हृत्कुञ्जे चेन्न वसति जननी मञ्जुकुञ्जासनैः किं
भक्तिश्चेन्न प्रसरति परमा वन्दनैर्नन्दनैः किम् ।
नीरं चेन्नो गलति नयनयोः पुण्यगङ्गोदकैः किं
प्रत्यङ्गं चेन्न लसति पुलकैः ध्यानमन्त्रादिभिः किम् ॥ ११ ॥
कारुण्यैकनिधिं विधिप्रतिनिधिं ज्ञानाम्बुधिः पुण्यधी-
र्नीतिच्छन्दविधिः समाधिमधुर स्तीव्राधिसम्बाधनः ।
यस्या नेत्रमणिप्रभाकनकितो नूनं भवेद् बालिश-
श्चित्तानन्दलसन्मरालरमणीं वन्दे जगद्वन्दिताम् ॥ १२ ॥
अज्ञानध्वान्तराशिं स्फुरदमलवपूरोचिषा नाशयन्तीं
वीणागानैर्नराणां युगशतविततां नोदयन्तीं प्रसुप्तिम् ।
भक्तालीन् श्रीपदान्ते सरसिजरजसा लासयन्तीं सलीलं
वन्देऽनिन्द्यां प्रफुल्लां त्रिभुवनजननीं भारतीमिष्टदेवीम् ॥ १३ ॥
मातः !

न जाने विधानं न मन्त्रं न योगं
न याचे विदग्धादृतं पादपद्मम् ।
त्वदुत्सङ्गलीनस्त्वहो नामगीतैः
कदा दीर्घकालं सदा यापयामि ॥ १४ ॥

---

## दशावतार-स्तोत्रम् ।

मग्ना यदा ज्या प्रलये पयोधौ, उद्धारितो येन तदा हि वेदः ।
मीनावताराय गदाधराय, तस्मै नमः श्रीमधुसूदनाय ॥ १ ॥

कल्पान्तकाले पृथिवीं दधार, पृष्ठेऽच्युतो यः सलिले निमग्नाम्।
कूर्मावताराय नमोऽस्तु तस्मै, पीताम्बराय प्रियदर्शनाय॥ २॥
रसातलस्था धरणी किलैषा, दंष्ट्राग्रभागेन धृता हि येन।
वराहरूपाय जनार्दनाय, तस्मै नमः कैटभनाशनाय॥ ३॥
स्तम्भं विदार्य्य प्रणतं हि भक्तं, ररक्ष प्रह्लादमथो विनाश्य।
दैत्यं नमो यो नरसिंहमूर्त्तिर्दीप्तानलार्कद्युतये तु तस्मै॥ ४॥
छलेन योऽजश्च बलिं निनाय, पातालदेशं ह्यतिदानशीलम्।
अनन्तरूपश्च नमस्कृतः स, मया हरिर्वामनरूपधारी॥ ५॥
पितुर्वधामर्षरयेण येन त्रिःसप्तवारान् समरे हताश्च।
क्षत्राः पितुस्तर्पणमाहितञ्च, तस्मै नमो भार्गवरूपिणे ते?॥ ६॥
दशाननं यः समरे निहत्य, बद्ध्वा पयोधिं हरिसैन्यचारी।
अयोनिजां सत्वरमुद्दधार, सीतापतिं तं प्रणमामि रामम्॥ ७॥
विलोलनेत्रं मधुसिक्तवक्त्रं, प्रसन्नमूर्त्तिं ज्वलदर्कभासम्।
कृष्णाग्रजं तं बलभद्ररूपं, नीलाम्बरं सीरकरं नमामि॥ ८॥
पद्मासनस्थः स्थिरबद्धदृष्टिर्जितेन्द्रियो निन्दितजीवघातः।
नमोऽस्तु ते मोहविनाशकाय, जिनाय बुद्धाय च केशवाय॥ ९॥
म्लेच्छान् निहन्तुं लभते तु जन्म, कलौ च कल्की दशमावतारः।
नमोऽस्तु तस्मै नरकान्तकाय, देवादिदेवाय महात्मने च॥ १०॥

---

## श्रीकालिदासीयमन्तिममैतिह्यम्।

### (अपरम्)

पूर्वं यदा स कालिदासः क-ख-ग-घ इति समस्यापूरणकाले कञ्चन विलंबमसहमानः तदाविर्भूतां बालारूपिणं वाग्देवीं रोषेण "रण्डे!" इति समबोधयत् तदा सा देवी भक्तवत्सलापि तेनैव तां समस्यां पूरयित्वा स्वयमन्तर्विमनायमाना सती "मदंशावतीर्णोऽपि भवान् मामप्यनादृत्य मद्बलेन मां त्वं यदध्यक्षिपः तस्मात्तादृशमदभङ्गाय त्वं इतः परं जन्मद्वये मूको भवितासि। तथापि स्वयमन्तस्सर्वज्ञ एव स्यास्यसी"ति जगाद। तादृशं देव्याः कोपं विज्ञाय स्वयमनुतप्यमानस्स कालिदासः भक्तिनम्रो भूत्वा "भवत्या भूमानमविज्ञाय एवम

वदम् । न कुत्रापि माता जडे दुरात्मनि वा बालके क्रोद्धुमर्हति । तद्भवती क्षन्तुमर्हती"ति अन्वनयत् । तदा च प्रसन्ना सा वाणी "मदीयवचनं नान्यथा भवितुमर्हति । तथापि एकस्मिन् जन्मनि सर्वज्ञतया बालतया च एकं वत्सरं जीवतु भवान् । अन्यस्मिन् जन्मनि पुरुषायुषं यावत् मूकः सर्वज्ञश्च भक्ष्याभक्ष्यवर्जितश्च यत्र कुत्रापि तिष्ठन् अन्ते मम सायुज्यं लप्स्यसे" इति निगद्य तत्रैव तिरोदधे ॥

तदुक्तिमनुसृत्य मृतस्स कालिदासो वाराणसीप्रदेशसन्निकृष्टैकग्रामे सर्वजनसम्मतस्य भूसुरोत्तमस्य वेदजडात्मनः केवलं कर्मठस्य कर्मैव मुक्तिप्रदं सर्वेषामिति सर्वत्र प्रसङ्गं कुर्वतो बहुशिष्यसंपन्नस्य धनिकस्य यतिजनान्वीक्षणेऽपि पापप्रचारं शङ्कमानस्य कस्यचित् प्रवयसो गृहिणः वार्धके पुत्रत्वेनाविर्भूय तेन निजसन्तानाभ्युदयप्राप्त्यतिशयेनातीव सस्नेहं लाल्यमानः तद्भार्यया चान्वहं पोष्यमाणस्तच्छिष्यैश्च तदाज्ञया ध्रियमाणः सुखेन भावत्कं तद्गृहेऽत्यवाहयत् ॥

तदा शङ्करांशतयावतीर्णः कालटिदेशे भूसुरकुलोत्पन्नः श्रीशङ्कराचार्यः परमहंसपरिव्राजकः श्रीगोविन्दभगवत्पादपरिव्राजकमुखेऽखिलविद्या अभ्यस्य वाराणसीतीरं प्राप्य हस्तामलक-पद्मपाद-सुरेश्वरादिशिष्यवरैः सह तत्र कंचन कालमध्युष्य निजकृतं द्वैपायनमुनिविरचितस्य ब्रह्मसूत्रस्य शारीरकापराभिधस्य भाष्यं कर्तुं वेदव्यासस्याभिमतानुगुणं वा नेति परिशोधयितुमनाः तदं साक्षाद्भगवन्तमन्धकमथनं भक्तवत्सलमविमुक्तेश्वरं शरणमभजत् । तदा स च भगवान् विश्वेश्वरः स्वभक्तस्याभीष्टं पूरयितुं स्वप्ने प्रादुर्भूय "त्वं निजकृतं भाष्यं गंगासोपानभुवि स्थापयन् प्रातस्तिष्ठ । तदा भैरवः समागत्य तत्परिशोधनं कुर्यात् । त्वं च तदग्रे पठ"इति जगाद ।

ततस्तदुक्तिमनुसृत्य स शङ्कराचार्यः शिष्यैस्सह गङ्गायां प्रातः स्नात्वा प्रयतमानसो निजं भाष्यं सोपानभुवि संस्थाप्य भैरवागमनं प्रतीक्षमाण आसीत् । तदा च परमशिववचनेन स वेदव्यासः शारीरकसूत्रकर्ता महामुनिः भैरवरूपेण तस्य शङ्कराचार्यस्य पुरतः समागत्य तेन च सत्कृत्याभिनन्दितः सूत्रभाष्यं पुरतः पठतः तस्य शृण्वन् तत्र स्वानभिमतं यद्यद्वचनजातमासीत् तत्तत्स्वजिह्वया विलिहन् अतिष्ठत् । एवं झटिति पठन् पुरतस्तस्य शङ्कराचार्यः तज्जिह्वालेहनेन तत्तत्स्थले वर्णानामभावेनातीवविस्मितहृदयः सभक्तिकं भाष्यं पपाठ । एवं मुहूर्ते जाते स भैरवः क्षणेन कुत्रापि पलायत ॥

भाष्ये च चतुर्थांशः परं परिशोधयितव्य आसीत् । ततश्च स जगद्गुरुः शङ्कराचार्यः पुनरपि एकांशपरिशोधनाय भगवन्तं भवानीपतिं प्रार्थयत । ततस्सोऽपि भगवान् स्वप्ने प्रादुर्भूय "मा विषीदतु भवान् । भैरवाः भुवि एकायततया न कुत्रापि चिरं तिष्ठेयुरित्यंशं शोधयित्वा स भैरवो जगाम । इतःपरमेकांशपरिशोधने तव भाष्यस्य काशीसन्निकृष्टप्रदेशस्थितः कश्चन ग्रामः भूद्भूषितो वर्त्तते; तत्र कस्यचित् वैदिकस्य धनिकस्य कर्मठस्य बहुशिष्यगणपरिवारस्य प्रवयसः यतिजनपरिपंथिनो गृहिणः पुत्रोऽस्ति; तदग्रे गत्वा चतुर्थांशं त्वं पठन् तेनैव परिशोधय" इति अनुजग्राह ॥

तदा च स शङ्कराचार्यः स्वशिष्यैः सह एतद्भाष्यं समग्रं परिशोध्यैव भुविप्रचारं कल्पयित्वाऽद्वैतमतं स्थापनीयमिति समालोच्य वाराणसीतः प्रस्थाय तद्ग्रामसन्निकर्षं प्राप्य तत्रत्यब्राह्मणमुखेन प्रवयसो द्विजातेस्वभावादिकं विज्ञाय तस्य असन्निधान एव तद्गृहे प्रवेष्टव्यमिति पर्यालोच्य स्वशिष्यान् कुत्रचित् स्थापयित्वा स्वयं परं यदा तौ तद्गृहदंपती प्रातःस्नानार्थं गृहाच्चिरयातौ तदा तं समयं ज्ञात्वा योगबलेन विहायोमार्गेण गत्वा तद्गृहान्तर्भागेऽवतीर्य तत्र कुत्रचित्स्थले खट्वायां शायितं स्वावतरणदर्शनसस्मितवदनं महातेजसं एकवर्षदेशीयं कमपि बालं निरीक्ष्य तन्मुखश्रिया स एवायं भगवता प्रोक्तोबाल इति विभाव्य क्षणादेव तदन्तिकं प्राप्य तेनापि बालेन सस्मितशिरःकम्पेन अभिनन्द्य सत्कृतः स्वभाष्यं तदग्रे पपाठ ॥

एवं भाष्यं समग्रं परिशोधितमासीत् । तेन परितुष्टमनास्स शङ्कराचार्यस्तं बालकं शिरस्याघ्राय समालिंग्य च एतादृशोपकारस्याहं भवतेऽपि कालान्तरे प्रत्युपकृतिं कुर्यामिति प्रतिश्रुत्य क्षणेन यथागतं तस्माद्गृहान्निर्गत्य स्वशिष्यान्तिकमासाद्य भाष्यपरिशोधनपूर्त्तिवृत्तं तेभ्यो निवेद्य ततः तद्भाष्यप्रचाराय हस्तामलकसुरेश्वरादिकान् द्वादशनिजशिष्यान् तत्र तत्र स्थले वासयित्वा अद्वैतमतं स्थापयन् बौद्धचार्वाकदिगम्बरकापालिकक्षपणकलोकायतिकपूर्णप्रज्ञश्रीवैष्णवपाषण्डवैशेषिकादिकदुर्मतनिरसनं स्ववाचोयुक्तिप्राबल्येन कुर्वन् तत्र तत्र सर्वान् अद्वैतमतावलम्बिनः तन्वंश्च यात्रां विदधे ॥

एवं यात्रां विदधानः तत्र तत्र क्षेत्रादिषु तत्तल्लिङ्गानि सभक्तिकं पश्यन् स्तोत्रादिकं रचयित्वा पूजयंश्च स शङ्कराचार्यः कदाचित्काञ्चीनगरीमासाद्य तत्र चैकाम्रनाथं भगवन्तं त्रिपुरहरं प्रणम्य तत्रत्यैश्शिवभक्तैस्सादरं सत्कृतः प्रणतः

पूजितस्सन् तान् सर्वानपि बुधान् स्वभाष्यप्रचारणेन समानन्दितान् कृत्वा तत्रैव नगरे कृतसान्निध्यं वरदराजनामकं लक्ष्मीपतिमपि विलोक्य स्तुत्वा प्रणम्य च तत्रत्यान् श्रीवैष्णवान् स्वभाष्यप्रवचनेनाद्वैतमतावलम्बिनः कारयितुं प्रयत्यापि स्वमतदार्ढ्यपक्षपातेन परं परमाहंकारेण स्वमतमेव विशिष्टाद्वैतमेव प्रबलमिति दुर्युक्तिवादपूर्वकं विवदमानान् अद्वैतमतमनंगीकुर्वतश्च तान् वैष्णवान् "तर्हि केन प्रकारेण यूयमस्मन्मतमाश्रयिष्यध्वे तादृशं प्रकारं ब्रूत" इति प्राभणत्। तदा च ते भगवतः शङ्कराचार्यस्य प्रवचनशक्त्या प्रमाणजालेनामानुषवैभवेन च स्वयमन्तः पराजिता अपि दुरहङ्कारभूयिष्ठतया ऽस्याचार्यवर्यस्य वैभवमपि भुवि प्रकाशयितुं किलएव "अस्त्यस्मिन् नगरे कोपि मूको मनुजः सर्वत्र पर्यटन् भक्ष्याभक्ष्यविवर्जितः स्वयं शीतोष्णादिकं सहमानो विरक्तिसम्पन्नः, तं यदि भवन्तोऽद्य वाग्मिनं कुर्युः, तर्हि वयं युष्मन्मतमाश्रयेमहो"ति त्ययदन्॥

ततस्तेषां वचनं निशम्य स शङ्कराचार्यः "तर्हि तथा क्रियते। तं मनुजमत्रानयत कामाक्षीदेवीसन्निधौ। परमस्मत्पक्ष्याः एकत्र तिष्ठन्तु। युष्मत्पक्ष्याश्चापरत्र पार्श्वे तिष्ठन्तु। स च जगन्मातुः कामाक्ष्याः दृष्टिगोचरस्थाने वसतु। तदा तं वाग्मिनं क्षणादेव कुर्यामि"ति प्रोवाच। ततश्च ते सर्वे श्रीवैष्णवाः एतादृशवचनेनातिविस्मितास्सन्तः सर्वत्रान्विष्य तं कुत्रापि स्थले शयानं जटिलं धूलीधूसरसर्वांगं मूकं फलादिवितरणेन प्रलोभ्य समानीय श्रीशङ्कराचार्यसन्निधावस्थापयन्॥

स च मूकः पूर्वं वैदिकस्य ब्राह्मणस्य पुत्रतया जनित्वा शंकराचार्यस्य सूत्रभाष्यं श्रुत्वा स्वजिह्वया विलिह्य परिशोधनं कृत्वा तत्क्षणादेव तत्र मृत्वा परस्मिन् जन्मनि तत्रैव प्रदेशे कुत्रचित्कस्यचिन्मनुजकुटुम्बकस्य पुत्रतयावतीर्य मूकत्वेन ताभ्यां पितृभ्यामनादरेण विसर्जितः स्वेच्छाविहारपरायणः भक्ष्याभक्ष्यविवेचनविरहितः सर्वज्ञः स्वयं जीवन्मुक्तदशां प्रपन्नस्सन् तत्र तत्र पुण्यनदीक्षेत्रादिस्थलावलोकनेनात्मानं पुनानो जगद्धिताय सर्वत्र सञ्चरन् कदाचित्काञ्चीनगरीं प्राप्य तत्रत्यक्षेत्रवैभवावलोकनेन विस्मितान्तरंगः तत्रैव चिरवासमंगीकुर्वन् सर्वैर्जनैः परिहस्यमानः परिभूयमानोऽपि स्वात्मनि खेदरहितः सर्वत्र समबुद्धिश्च प्रत्यवसत्॥

तादृशं श्रीवैष्णवनिकरैस्समानीतं सर्वज्ञं बहिः परं मूकतया विराजमानं तं नरं वीक्ष्य भगवान् स श्रीशंकराचार्यः स्वयं बोधदृष्ट्या स एवायं काल इति

विज्ञाय प्रहृष्टान्तरंगस्तं मूकं लोकजनन्याः कामाक्ष्याः सन्निकृष्टे स्थले पंक्तिद्वयक्रमेण श्रीवैष्णवाद्वैतमतस्थजनभूषिते समानीय स्वयं तत्समीपे स्थित्वा करसंज्ञया श्रीकामाक्षीमेतां जगज्जननीं स्तुही"ति अन्तस्तमनुगृह्य जगाद। स च एवं भगवता श्रीशंकरेणानुगृहीतः स्वयं सर्वज्ञो मूकस्तामुपक्रियां कृतज्ञतया स्मृत्वा झटित्येव स्वपुरःस्थितां कामाक्षीदेवीं प्रति प्रणम्य सभक्तिकं आर्याशतकादि-पञ्चस्तुतिशतकं निजैकैकपदप्रचारक्रमेण तां देवीं स्तुवन् सर्वेषां महाजनानां सन्निधौ तैस्समभिनन्दितः अन्तिमशतकान्तिमश्लोककारणेन भगवत्याः कामाक्ष्या बिम्ब एव देवीसायुज्यपदमवापेति पुरातनमैतिह्यम्॥

एवं च कालिदास एव तृतीये जन्मनि मूकतयावतीर्य यावत्पुरुषायुषं भुवि स्थित्वा श्रीशंकराचार्यवरानुग्रहेण दिव्यं पदं लेभे। एवं मूककृता स्तुतिपञ्चशती "मूकपञ्चशती" ति लोके विद्वज्जनादृता बहुमता सभक्तिकं पठ्यमाना सकलसाम्राज्यसुखानुभवप्रदा च वरीवर्ति॥

इति किल कालिदासीयमन्तिममैतिह्यं यथाश्रुतं यथामति लिखितम्॥
इति नारायणनामकभूसुरलिखितं पुरातनं वृत्तम्
कविवरकुलगुरुकालिदासस्य शुभप्रदं भूयात्॥

---

## उत्तरायण-संक्रान्तिः।

पुष्यानक्षत्रयुक्ता पौर्णमासी यस्मिन् मासे स एव पौषो मासः। अस्यैव सौरमासस्य पौषस्य शेषदिवस उत्तरायणसंक्रान्तिरित्याख्यायते। रवे राशितो राश्यन्तरसंक्रमणं संक्रान्तिरिति व्युत्पत्तिलभ्योऽर्थः। अस्यैव पौषमासस्य दशमदिवसादारभ्य रवेरुत्तरया दिशा अयनं भवति; अत एव खलु अस्य मासस्य समाप्ति-दिनमुत्तरायण-संक्रान्तिरिति कथ्यते। अस्मादेव समयाद् देवनिद्रावसानम्। अत आरभ्य ऋतुगणनारम्भ इति च शास्त्रविदामभिमतम्, तथा च

"माघादिमासयुग्मैस्तु ऋतवः षट्क्रमादितः।
उत्तरायणमार्कैस्ते"रिति लक्षणम्।

निद्राभ्युत्थिता देवताः क्षुत्तृट्प्रपीडिता घृताशनमभिवाञ्छन्ति। अतश्च मनुजानामपि अस्मिन्नेव समये यज्ञाङ्गीभूता घृताहुतिर्विधेया। अयमेव कालो यज्ञादिविधौ प्रकृष्टतमः। न खलु नास्ति देवतानामशनस्पृहेति वाच्यम्

हविर्भुज इति तेषां संज्ञापत्तिः। हविश्च तैर्भूलोकादेवाधिगम्यते; अधिगम्य तदुपभुज्य च ते देवा मर्त्यलोकस्थितानां मर्त्यानामुपकुर्व्वन्ति। इत्थं सुरनरयोरन्योन्यसाहाय्येन भूर्भुवःस्वःप्रभृतयः सप्तलोका अवतिष्ठन्ते। अस्ति चात्र कविभणितं किञ्चित्:—

"दुदोह गां स यज्ञाय शस्याय मघवा दिवम्।
सम्पद्विनिमयेनोभौ दधतुर्भुवनद्वयम्॥

पार्थिवो राजा देवान् सम्बर्द्धयितुं यज्ञच्छलेन भुवं दोग्धि, देवपतिश्च मघवा मर्त्यलोके शस्यं सम्बर्द्धयितुं दिवं दोग्धि, द्युलोकान्महीलोके वृष्टिमुत्पादयतीत्यर्थः। इत्थं तावुभौ राजानौ सम्पदो विनिमयेन भुवनद्वयं पालयतः। राजा यज्ञादिभिरिन्द्रलोकम्, इन्द्रश्च उदकेन भूलोकं रक्षति। उक्तञ्च दण्डनीतौ

"राजा त्वर्थान् समाहृत्य कुर्य्यादिन्द्रमहोत्सवम्।
प्रीणितो मेघवाहस्तु महतीं वृष्टिमावहेत्॥

यज्ञादीनामनुष्ठानात् पार्थिवप्राणिनां प्राणा ध्रियन्ते। सामादिवेदमन्त्रैः पवित्रीकृते खलु स्थण्डिले प्रज्वलितो यज्ञाग्निर्हविषा परिपुष्टकलेवरः सुदूरमाकाशवर्त्मना परिभ्रमन् समीरसाहाय्येन ज्योतिर्नाथस्य ज्योतिरनेकधा वर्द्धयति। ततश्च प्रदीप्ततेजा विभावसुः स्वतेजसा देदीप्यमानः पुञ्जीभूताद् यज्ञीयधूमाद् वाष्पाकारेण भूमौ वारिवर्षमभिवर्षयति। अनुकूले सति पर्जन्ये यथाकालवर्षणाद् भूमौ शस्यादिकं प्रचुरतरं जायते। ततश्च शस्यभुजां पार्थिवप्रजानां प्राणधारणम्। तथा च—

अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः॥"

अत्रादित्यशब्दो न केवलं सूर्य्यवाचकोऽपितु अदितेरपत्यं पुमानित्यर्थे सर्व्वे एवादितेया देवा उपलक्ष्यन्ते। ते ते ज्योतिर्म्मुखा देवाः सर्व्वे एव हुतहविषामुपयोगेनात्मानं परिपोषयन्ति। यज्ञीयानलसम्पर्कात्तेषां देवपदवाच्यानां तेजस्विनां या तेजो भृशं वर्द्धत इति। यातु तत्, साम्प्रतं प्रकृतमेवानुसरामि।

उत्तरायण-संक्रान्तिर्नामातीव पावनीभूता। गङ्गास्नानेनास्मिन् काले एकाधिकविंशतिकुलोद्धारः स्यात्। प्राणपरित्यागे चात्र जीवानामक्षयः स्वर्गलाभः, न पुनस्तेषां पुनः जन्मधारणं सम्भवति। यच्चोक्तं "क्षीणे पुण्ये मर्त्यलोकं

विशन्तीति" अत्रापि पुण्यानां परिपाक एव कारणं न त्वन्यः कश्चित् । कुरुवंशावतंसः सत्यव्रतो महामतिर्भीष्मः कौरवाणां पितामहो भीष्मशरासनमधिशयानः प्राणान्तिकामपि यन्त्रणां सहमानः प्राणपरित्यागाय पवित्रतम मुहूर्तमुत्तरायण-सङ्क्रान्तिमपेक्ष्य गतप्रायमपि जीवनं स्वदेहे परिपुपोष । कालस्यास्य पवित्रतया ऽस्यामुत्तरायणसंक्रान्त्यां प्रायश एव गृहस्थाः वास्तुपूजां वास्तुयागञ्च सम्पादयन्ति । वासयोग्या भूमिरेव वास्तुरित्यभिधीयते । वेश्मभूर्वास्तुरस्त्रियामिति चामरः । यत्र वयमनुदिनं प्रतिवसामः सा किल वेश्मभूर्महती देवतासमा ऽस्माभिरवश्यमेव पूजनीया । वास्तुभूमिरावासभूमिर्जन्मभूमिर्वा सर्वेषामेवातिप्रियतमा मातृस्वरूपा च । तथा हि जननी जन्मभूमिश्च स्वर्गादपि गरीयसी । मातृ-स्वरूपत्वेऽस्या हेतुर्यथाः—वास्तुभूमिरेवास्माकं पृथिवीसमा, नहि सर्व्व एव मानवा अनन्ताया अस्या अन्तमवधारयितुं समन्ततः परिभ्रमितुं वा शक्नुवन्ति । तेषां तावदेषैव वास्तुभूर्विशाला वसुमतीति प्रतीतिर्जायते । पूजास्थानीयाया अस्याः वास्तुभूमेर्यथा हस्तान्तरगतिर्न भवेत्तथैव सर्व्वैर्विधेयम् । यास्तावद् मानवानां सप्त मातरः शास्त्रेषु वर्णिताः तासु धरित्रीयमन्यतमा । उक्तञ्च

आत्ममाता गुरोः पत्नी ब्राह्मणी राजपत्निका ।
गाभी धात्री तथा पृथ्वी सप्तैता मातरः स्मृताः ।

वास्तुपूजायां मेषबलिः प्रकृष्टतया परिगण्यते । केचन पुनः कच्छपमपि बलिरूपेण परिकल्पयन्ति । स्वकीयवासभूमौ स्वाधिकारभूते प्रान्तरे वा वास्तुपूजा सम्पाद्यते । तत्र च केचित् (वङ्गदेशीयाः) भूमौ पुष्पलकशाखां कदलीतरुं वा प्रोथयित्वा स्वकीयस्वामित्वं तत्र तत्र प्रकटयन्तः पूजाविधिमनुतिष्ठन्ति । इयं हि उत्तरायणसंक्रान्तिर्वङ्गेषु कुत्रचित् स्थाने तिलसंक्रान्तिरिति कथ्यते ।-अत्रावस्मिन् तिलानामतिप्राचुर्य्यमेव कारणम् । तिलनिर्म्मितमिष्टद्रव्यं तिलसम्पृक्तशर्क्कराखण्डञ्च न केवलं बालकै र्वृद्धैरपि बहु मन्यते । मासयुगर्त्तु-परिवर्त्तनेन सह शस्यानामुपादेयत्वं निकृष्टत्वञ्च सञ्जायते । अतएव हि पौषमासादौ तिलानामत्यादरः । आश्विनसंक्रान्त्यां च चतुर्द्दश-शाकभोजनादायुर्वृद्धिः । श्रावण-संक्रान्त्यां सकदलीदुग्धपानं सर्पभय-निवारकम् । कार्त्तिकेय संक्रान्त्यां च मूलक—तिन्तिड़ी—जलपीनादि—(Oliver) भक्षणं शरीर-पोषकमित्यादि । भोजन निषेधविधौ च 'माघे न वदरी मूला ।' श्रावणे न कुमुदिनी मृणालं, भाद्रे नालावुः, प्रतिपदादि-तिथौ न कुष्माण्डादिकमभक्ष्यम् ।

अपूप-पिष्टकादीनामप्यभ्यवहारोऽस्मिन्नेव काले प्रयुज्यते । श्वोपकरणैः समिष्ट-पिष्टकैः सूर्य्योपासनं सूर्य्यसेवा च सम्पद्यते । सूर्य्यो हि स्वास्थ्य देवता मानवानाम् । ये खलु अस्मदीयाः पूर्व्वपुरुषाः पुरा सूर्य्योपासका आसन् ते सर्व्वे एव समस्तकार्य्येषु कृतिमन्तो ब्रह्मचर्य्यादिकमार्य्यजनोचितं निष्पाद्य वीर्य्य-ममोघमैश्वर्य्यञ्चालभन्त । अस्तिचात्र "आरोग्यं भास्करादिच्छे" दित्यादि सुधीवचनम् । सूर्य्यस्तवे च—

"शाम्बोऽपि स्तवराजेन स्तुत्वा सप्ताश्ववाहनम् ।
पूतरात्मा नीरुजः श्रीमान् तस्माद्रोगाद् विमुक्तवान् ॥

उत्तरायणसंक्रान्तितः परमेव माघमासः । यत्र हि मासे सूर्य्योपासनं प्रात्यहिकं कर्म्म वङ्गीय-ब्राह्मणानां वङ्गीययोषितां च । संक्रान्त्यामस्यामनेकश एव वङ्गीयगृहस्था ऊषसि स्नात्वा धौतप्रावरणाः शुचयः गोमयादिना प्राङ्गन-भूमिं परिष्कृत्य तत्र पिष्टकालिम्पनमाचरन्ति । गृहपालितानां गवामपि गात्रं पिष्टकमुद्राभिरलंकुर्वन्ति । अयमेव हि व्यापारः प्राचीनतमानामार्य्यवर्य्याणां गोसेवां, स्मारयति नः । ये तावद् वङ्गवासिनो 'हिन्दु' पुङ्गवाः पुरा गोभ्यो ग्रासमदत्वा पानीयमपि नाग्रहीषुस्ते कथं ताभ्यः पिष्टकमनिवेद्य स्वयं तत् पिष्टकमुपभुञ्जीरन् ।

उत्तरायण-संक्रान्तिमारभ्य गोसेवा, ब्राह्मणसेवा, देवसेवा, सूर्य्यसेवा च सर्व्वेव मङ्गलदायिनी; प्रातः स्नानादिकञ्च स्वास्थ्यरक्षाङ्गीभूतम् । सन्तत-मामिषाशिनोऽपि तदानीं निरामिषमश्नन्तः वीर्य्यं लभन्ते ।

साकारवादिनां तु मते आकृतिधरः कश्चिच्चतुःषष्टिपदो वास्तुरित्य-भिधीयते । तस्माच्च—

"वास्तुक्रोड़े गृहं कुर्य्याद् न पृष्ठे मानवः सदा ।
वामपार्श्वेन स्वपिति नात्र कार्य्या विचारणा ॥
भाद्राद्येर्व्वा शिरः कृत्वा नागः शेते त्रिभिस्त्रिभिः ।"

इत्यादि वचनं संगच्छते । केचित्तु "निवासात् सर्व्वदेवानां वास्तुरि त्यभिधीयते ।" इत्यामनन्ति । केचित् पुनः—

"भृगुरत्रिर्वशिष्ठश्च विश्वकर्म्मा मयस्तथा
नारदो नग्नजिच्चैव विशालाक्षः पुरन्दरः ।

ब्रह्मा कुमारो नन्दीशः शौनको गर्ग एव च
वासुदेवोऽनुरुद्धश्च तथा शुक्रवृहस्पती ।
अष्टादशैते विख्याता वास्तुशास्त्रोपदेशकाः ॥”
इत्यादि वास्तुशास्त्रविषयकं वचनमुच्चारयन्ति ।

उत्तरायणसंक्रान्तिमुपक्रम्य बहव एवावान्तरव्यापारा मया सद्यापत्र-मुद्दङ्किताः । आशास्महे च सर्व्वमेव तत् सुधीभिरुपेक्षणीयं स्यात् ।

---

## गुरुशिष्यसंवादशतकम् ।

शिष्यः–आदिशतु गुरो ! येन संशयानपनेतुं शक्नोमि ।
गुरुः–ब्रूहि वत्स !
शिष्यः–को मे बन्धुः ? (१)
गुरुः–“यः प्राणैर्मनसा वाचा हितं कामयते सदा ।
आर्त्ते आर्त्तौ सुखे हृष्टः स एव बन्धुरुच्यते ॥”
शिष्यः–को मे पुत्रः ? (२)
गुरुः–“स पुत्रो यो वशे नित्यं मातापित्रोर्हिते रतः ।
विद्याविनयसम्पन्नः सुशीलो विजितेन्द्रियः ॥”
शिष्यः–को मे प्रभुः ? (३)
गुरुः–“यथापत्यं तथा भृत्यं पश्यति यः सदाशयः ।
पोषणे पालने नित्यं स एव प्रभुरुच्यते ॥
वाचा मधुरया भृत्यं तोषयेद् यस्त्वहर्निशम् ।
सानुकम्पदृशा पश्यन् त्यक्त्वा दोषशतान्यपि ॥”
शिष्यः–को मे भृत्यः ? (४)
गुरुः–“तं हि भृत्यं विजानीयाद् य एव कार्य्ये पटुः ।
प्रभोः कार्य्यकरो नित्यं कायेन मनसा गिरा ॥
प्रभुकार्य्यं समाधातुं प्राणनाशो भवेद्यदि ।
तथापि न त्यजेत्तत्तु यो भृत्यो भृत्य एव सः ॥”
शिष्यः–को मे नृपः ? (५)
गुरुः–“व्यसने च समुत्पन्ने दुर्भिक्षे समुपस्थिते ।

महारोगात्तथापद्भ्यो रक्षति यः स ते नृपः ॥
दुष्टेभ्यो दुर्ब्बलान् नित्यं त्रायते यः प्रयत्नतः ।
स नृपो मनुजश्रेष्ठः सकलानां सुसम्मतः ॥
आत्मजेषु यथा स्नेहस्तथा सर्व्वप्रजासु च ।
जायते नृपतेर्यस्य स नृपो नृपसत्तमः ॥
प्रजानां पालने यश्च व्यग्रचेताः सदा भवेत् ।
सुखं हित्वा स्वकीयं स पृथिवीभूषणं नृपः ॥

शिष्यः—को मे शत्रुः ? (६)

गुरुः—"मूर्खः पुत्रः शठो बन्धुः शरीरस्य तथामयः ।
विकारो मनसो नित्यं चाटुवादरतो जनः ॥
दोषभागात् गुणान् त्यक्त्वा यश्च गृह्णाति केवलम् ।
तञ्च ते परमं शत्रुं विजानीहि सुनिश्चितम् ॥
छिद्रान्वेषणकारी यः कामयित्वा हितं तव ।
स एव ते परः शत्रुः सत्यमेतन्न संशयः ॥

शिष्यः—को मे भर्त्ता ? (७)

गुरुः—"देहार्द्धमदृशं ज्ञानं पत्न्यां यश्च समाचरेत् ।
दुःखे दुःखी सुखे हृष्टः स भर्त्ता कथ्यते नरैः ॥
पत्नीं न विस्मरेद् यश्च दूरदेशगतोऽपि सन् ।
अशने शयने चैव भर्त्ता स एव कथ्यते ॥
भर्त्तारं तं विजानीयाच्चञ्चलं यस्य नो मनः ।
दृष्ट्वान्यां ललनां रम्यां वराप्यामुर्व्वशीमिव ॥

शिष्यः—को नरः ? (८)

गुरुः—"धर्म्मज्ञानेन सम्पन्नो विद्या-बुद्धि-समन्वितः ।
दया-दाक्षिण्यसंयुक्तः परक्लेशनिषूदनः ॥
ईर्षा द्वेषविहीनो यः सदामर्षविवर्जितः ।
विधूतो मोहलोभाभ्यां जितकामो जितेन्द्रियः ॥
एते चान्ये गुणा यस्य विद्यन्तेऽत्र धरातले ।
स नरो हि नरो ज्ञेयः सकलानां प्रशंसितः ॥"

शिष्यः—कः पशुः ? (९)

गुरुः—धर्म्महीनो जनो लोके नरत्वे नोपकल्पते ।

पुच्छविषाणशून्यश्च पशुरेव स उच्यते ॥
विविधाद्भुतकार्य्याणि तस्य पुंसः परात्मनः ।
नालोचितानि वा येन स एव हि पशुः स्मृतः ॥
येषां हि धर्मचिन्तायां जीवनं याति केवलम् ।
ये स्मरन्ति न तद्विष्णोः पदं परं मलापहम् ॥
आत्मनो मनसश्चापि नाम्ना ते केवलं नराः ।
न दृश्यते प्रभेदस्तु तेषां हि पशुभिः सह ॥

शिष्यः—कः पण्डितः ? (१०)

गुरुः—" मातृवत् परदारेषु परद्रव्येषु लोष्ट्रवत् ।

आत्मवत् सर्व्वभूतेषु यः पश्यति स पण्डितः ॥
विद्ययाशेषया युक्तो ज्ञानरत्न-विभूषितः ।
पण्डितः कथ्यते लोके स्तत्र तत्त्वविदो विदुः ।
वदन्ति पण्डितं तं ते य एव बन्धमोक्षवित् ॥

---

## लोचनव्याख्याकौमुदी

या सा व्यञ्जकभेदेन बहुधैका विभाव्यते ।
काव्यार्थसारभूतां तामाद्रिये संविदं वराम् ॥
विश्वाविर्भावविश्राणन-निपुण-निजोन्मेषमन्तर्विचित्रान्
भेदानव्यक्तमाभासयदभिगमयद् व्यक्तभावञ्च भूयः ।
प्रत्यक्षार्थानुवेद्यप्रकटितमहिम स्पष्टमन्तःसमिद्ध-
मन्धीभावं निरुन्ध्यात् किमपि निरुपमं धाम सारस्वतं वः ॥ २ ॥

नवरसमयमन्यद्दृश्यमन्यद्व्यपेक्षाविरहितमपरोक्षं शश्वदुन्मीलयन्ती ।
कविसहृदय-संसन्मानसाम्भोजहंसी, विहरतु हृदि नित्य वाङ्मयी देवता सा ॥ ३ ॥

यत्प्रज्ञाशिल्पियत्न स्फुटघटित-विवेकात्म-सोपान-पङ्क्ति—
प्राप्तोद्वीढ्वाधिरोहा स्थितमुपरि बुधा विन्दते वस्तुतत्त्वम् ।

वाग्देवीलास्यशिक्षा-क्रमपरिकलना पूर्वरंगायमाणा-

नाद्यानाचार्य-वर्यानन्दिनमिह तान् भामहाद्यान् प्रपद्ये ॥ ४ ॥

पूर्वैरसञ्चरितमुद्धृत-कण्टकं सत्, काव्यार्थवर्त्म यदुपज्ञमदः प्रवृत्तम् ।

आनन्दवर्द्धन मनुत्तममन्वितार्थनामानमेनमहमन्वहमानतोऽस्मि ॥ ५ ॥

ध्वनि-समय-रहस्य-वस्तुतत्त्वप्रथनपटिष्ठ गरिष्ठवाक्प्रपञ्चान् ।

अभिमत-सुर-पादपान् गुरूंस्तानभिनव-गुप्त-पदाभिधानुपासे ॥ ६ ॥

विद्यास्वस्तरवे नमोस्तु गुरवे तस्मै कृपांभोधये ।

शिष्याज्ञान-निशान्धकारनिवह-प्रध्वंसतिग्मांशवे ॥

यत्कारुण्य-कटाक्ष-पातकणिकानौकाश्रितैरश्रमा ।

तीर्णोऽस्माभिरुदीर्णनीति-सलिलो-ध्वन्यर्थ-तन्त्रार्णवः ॥ ७ ॥

काव्यालोकार्थसंयोजितमभिनवगुप्ताह्वयाचार्यपादै-

रात्मीयं लोचनं यत्सुनिशित-धिषणैरप्यनामृष्टसारम् ।

तत्सारोद्ग्राहिणीं संप्रति विवृतिमहं संविधातुं समीहे ।

विद्वांस स्तत् परस्तात् परगुण-सुखिनः सन्तु सन्तोषवन्तः ॥ ८ ॥

ख्यातिं नेह प्रतिष्ठां जगति गमयितुं न प्रकृष्टां विदुष्टा

माविष्कर्तुं निजां वा विवृतिविरचना प्रस्तुता वस्तुतो नः ॥

तीर्थेनानेन काव्यामृतसरसि मनाङ् मङ्क्तुकामोऽस्मि तस्मा-

न्मन्तुम्मा मन्तुमन्तत्त्वनु दधत मनो हन्त मा मा महान्तः ॥

आशंसिता रसिकलोक-चकोर-वृन्दैराविर्भवन्त्युदयतोऽमृतगोरुदारा ।

आचन्द्र-तारकमियं नवकौमुदीव प्रीतिं दधातु जगतां विवृतिर्मदीया ॥ १० ॥ *

---

## पिकदूतम् ।

### १ मवर्षस्य २५६ पृष्ठतोऽनुवृत्तम् ।

वर्षारम्भे नवजलधरश्यामलं ते सुचित्रं

नीपप्रान्ते व्रजघनभुवो बालकाः स्थापयन्तः ।

---

* एवंरूपिकेयं ग्रन्थावलिः । ध्वनिव्याख्यानस्यालोकस्य व्याख्येयं कौमुदीति द्विशताधिक-पृष्ठात्मिका भवेत्, धनिस्त्वतमधिकृत्येयं व्याख्या प्राचीनग्रन्थसमुच्चयाल्लब्धा । एतस्या व्याख्या-तृनामादिकं न दृश्यते । कुतः परमिमां समूलं संशोध्य प्रकाशयितुं यतिष्ये ।

क्रीडाजातं पुलकरहितं त्वत्प्रणीतं स्मरन्तो
हा बन्धो हा स्तवनविकला रोदनं प्रक्रमन्ते ॥ ४७ ॥
गोपालास्ते शवलिधवलीः सान्त्वयन्तो व्रजन्ति
गोपीनां चेत् प्रबलरुदिताः सान्त्वनाभाजनत्वम् ।
श्रुत्वा तासां द्विगुणितरुजामुच्चनादं व्रजामि
सर्व्वेषां हा भृशमशरणा सान्त्वनाभाजनत्वम् ॥ ४८ ॥
प्रेतच्छायं ! रुधिरभ्रमणं ! किं स्विदये श्मशानं ।
युद्धं देहि स्मितकुसुमजो विक्रमः पुष्पबाणे !
कालश्चायं विकटवदनः ! क्वासि गुप्तो व्रजेश !
त्वय्यालम्बे खलु रसचयो नाट्यते हा नटेन्द्र ! ॥ ४९ ॥
नीपस्याराद्वहति यमुना त्वत्प्रिया या पुरासौ
वारिस्नाने तव पदयुगश्रान्तिमुत्पादयन्ती ।
तस्या गोपीनयनसलिलैः प्लावयन्त्यास्तटान्त-
मेकस्थाने रसिक ! रचितं मञ्जुलं केलिकुञ्जम् ॥ ५० ॥

४७–वर्षारम्भे-वर्षस्य आरम्भे त्वत्प्रयाणदिनात् प्रभृति गणितं नववर्षे गोपैः। क्रीडाजातम्–क्रीडासमूहम् । पुलकरहितम्–आनन्दहीनं त्वद्विरहात् । स्तवन विकलाः चित्रस्योत्तरदानाक्षमत्वात् ।

४८–शवलिधवलीः–सान्त्वयन्त इत्यस्य कर्म्म । शवलीति ङ्यापोः संज्ञाच्छन्दसोर्बहुलमिति ह्रस्वः । प्रबलरुदिताः–उच्चविलापाः गोपालाः शवलिधवलीनां सान्त्वनाप्रदानेऽक्षमा इत्यर्थः । तासाम्–गोपीनाम् । द्विगुणितरुजाम्–द्विगुणिता रुक् यासां तासाम् । शवलिधवलीः सान्त्वयितुकामाः गोपबालका अशक्ताः सन्तो रुदन्ति, गोपबालकानपि सान्त्वयितुकामा गोपिका रुदन्ति, गोपिकाः सान्त्वयितुकामा राधिका शोचनीयदशामापन्ना सर्व्वेषां सान्त्वनाभाजनं भवतीत्यर्थः ।

४९–प्रेतानां छाया इति प्रेतच्छायम्, अत्र वीभत्सरसः एवमन्यत्रापि बोद्धव्यम् । रसानां काव्यजीवितानां चयः समूहः ।

५०–आरात् दूरतः ! रसिक विदग्ध ! अहो मञ्जुलमपि केलिकुञ्जं तव विरहात् विफलतां प्रयातीति हृदयम् ।

ध्यायन्ती ते शुभवनपथं चञ्चलाक्षी यशोदा
यासौ द्वारे मधुदधिपयःपूर्णहस्ता पुरासीत्।
दीना सेयं रचयति सदा दिग्वधूवापणीयं
धूलीमिश्रैरलिकरुधिरैरञ्जलिं मातृभक्त! ॥ ५१ ॥
प्रत्यावृत्तं तपनगलितश्रीमुखं त्वां निकुञ्जा-
दङ्के धृत्वा शिशिरशिशिरं योऽभवत् स्निग्धकायः।
मुक्ताघर्म्मच्छुरितवदने बद्धदृष्टि स्तवाभूद्
यस्योद्विग्ना सपदि विफला शङ्किता चुम्बनेच्छा ॥ ५२ ॥
अन्धीभूतं तमिह जनकं लालयन् सान्ध्यवातो
धीरं धीरं प्रवहति यदा वेदनाक्लिष्टचित्तः।
कीरस्यैवं भवति विफलस्तस्य वायुं विधित्सोः
शीर्णाङ्गत्वात् प्रतिहतगतेः श्यामपक्षप्रसारः ॥ ५३ ॥

५१–मातृदशां निवेदयति। चञ्चलाक्षी-चटुलनयना उत्कण्ठावशात्। शुभवन-पथम्-गोष्ठभूमेः प्रत्यावर्त्तनस्य पन्थानमित्यर्थः। अलिकरुधिरैः-भालरक्तैः, कराभ्याम् कपालप्रघातात्। मातृभक्त! जननीवत्सल! त्वादृशस्य मातृभक्तस्येदं क्रूरमाचरणमिति व्याजनिन्दाध्वनिः।

५२–पितृदशां निवेदयति युग्मेन। अङ्के-उत्सङ्गे शिशिरशिशिरम्-हिमशीतलम् तपनतापक्लिष्टस्यापि देहस्य शीतलत्वं स्वाभाविकम्। मुक्ताघर्म्मच्छुरितवदने मुक्तावत् प्रतीयमानैः स्वेदविन्दुभिः मण्डिते-मुखमण्डले बद्धदृष्टेः मुक्तासुषमादर्शनमन्थरस्य जनकस्य दृष्टिः नान्यतो व्यापारिता। उद्विग्ना-त्रसिता। शङ्किता-मुक्तासौन्दर्य्यनाशनभीता चुम्बनेच्छा विफला अभूत्, सत्यामपि गाढ़चुम्बनेच्छायाम् मुक्ताशोभाहानिर्भवेदिति भीतेन जनकेन येन तव मुखमण्डलम् न चुम्बितमित्यर्थः।

५३–अन्धीभूतम्–अविरलाश्रुवर्षणात्। प्रवहति-प्रचलति सर्व्वत्र प्रसारकर्त्तव्यपालनाय। लालयन्-विरहवेदनाया लाघवं कुर्व्वन्। तस्य–जनकस्य सम्बन्धे वायुं विधित्सोः वीजयितुकामस्य कीरस्य शुकस्य-त्वत्प्रियतमस्य।

शीतोत्सङ्गं तव शशधर ! प्राप्य नार्यो निदाघे
यस्योत्तापै र्न खलु लुलिताः शर्व्वरीक्षणकायाः।
दीप्तश्वासो प्रखरकिरणो लब्धगन्धो दिधक्षु-
रन्तस्तापैर्विदलितमदो व्रीडयाद्य प्रयाति ॥ ५४ ॥

गोपीताप-प्रशमन-कथां चिन्तयन् कृष्णमेघो
धारासारैः प्रकटति यदा दामिनीहासयुक्तः।
दाहः कश्चिद्भ्रमविलसितो वर्द्धते चाङ्गनानां
लज्जाधिक्यात् प्रसरति तदा दुर्द्दिनं दूयमानम् ॥ ५५ ॥

काशैर्हासैः शरदमधुनाप्यागतां वीक्ष्य कान्ता-
स्तत्कालीनं प्रणयमधुरं रासकेलिं स्मरन्त्यः।
वल्लीं पुष्पं मुकुलिततरुं संलुनन्ति प्रकोपाद्
दूरं तावत् प्रचलति शरद्विप्रलम्भप्रलापैः ॥ ५६ ॥

---

श्यामपक्षप्रसारः विफलो भवति–सत्यामपि वीजनेच्छायाम् निद्राभोजनादिराहित्यात् चलनाक्षमः शीर्णकलेवरः शुकः मुधैव स्वपक्षं प्रसारयति। श्यामपक्ष" प्रसार इत्यनेन कृष्णपक्षावलम्बनं व्यज्यते।

५४–पितृदशानिवेदनानन्तरं ऋतुप्रभावं निवेदयति। यस्य–निदाघस्य इत्यर्थः। लुलिताः–पीड़िताः, न अभवन्नित्युह्यम्। लब्धगन्धः–प्रागेव निदाघतापितानां गोपिकानामङ्गशैत्यविधानात् श्रीकृष्णो निदाघस्य शत्रुत्वमुपागतः, अधुनातदनुपस्थितौ प्राप्तगर्व्व इत्यर्थः। दिधक्षुः दग्धुमिच्छुः। अन्तस्तापैः–विरहदहनदाहैः। निदाघवर्णनम्।

५५–वर्षावर्णनम्। भ्रमविलसितः-भ्रमात्मकः कृष्णमेघदर्शनात् कृष्ण इति भ्रान्तिर्गोपिकानाम्। लज्जाधिक्यात्–गोपीतापाप्रशमनात् पराजितं लज्जामन्थरं दुर्दिनमित्यर्थः। दूयमानं दुःखितं सत्।

५६ शरद्वर्णनम्। प्रकोपात्–क्रोधात् विरहसमये सौन्दर्य्यप्रसारिणीं शरदं प्रति। विप्रलम्भप्रलापैः विरहस्य प्रलापवचनैः हेतु भिरित्यर्थः।

अस्याकीर्णान् शिशिरपृषतान् वीक्ष्य हेमन्तदत्ता-
न्नासामूलप्रणयसुभगान् योषितो मौक्तिकाभान् ।
स्पृष्ट्वा हस्तैर्विफलमनसश्चन्द्रबाष्पाणि बुद्ध्वा
तस्याङ्के ते प्रतिकृति महो दुर्गता लोकयन्ति ॥ ५७ ॥

विश्वाधारप्रलयनपटुर्जाड्यशक्तिर्द्वितीयः
कान्तानां ते मलयजरजो वक्षसि प्रेक्ष्य शीतः ।
शक्तिं पूर्णां विकिरति यदा चन्दनं स्पर्द्धमानो
ध्यानैकान्तस्तिमितविभवो भावयेद्वा भवन्तम् ॥ ५८ ॥

वृन्दारण्ये सुचिरनृपतिः पुष्पकालः प्रियस्ते
तूर्णं चासौ मधुपुरमितः पञ्चबाणं नियुज्य ।
सर्व्वेषां हा दहति हृदयं मन्मथः प्राप्तकालो
राज्ञो नूनं प्रतिनिधिजनः प्रायशो रुद्रमूर्त्तिः ॥ ५९ ॥

मृत्युच्छायाकवलितमुखां स्रस्तकेशां कृशाङ्गीं
रोमोद्भिन्नागलितरुधिरां तूर्णमुत्फेनकण्ठाम् ।
मामालोक्य व्रजयुवतयो नित्यमुन्मत्तमूर्त्तिं
भीता भीता मलिनयमुनातीरमारोपयन्ति ॥ ६० ॥

---

५७—हेमन्तवर्णनम् । विफलमनसः—नासिकामण्डने विफलमनोरथाः प्रथमं शिशिरेषु मुक्ताप्रतीतिः, पश्चात् करस्पर्शेन शिशिरत्वबोधः । चन्द्रबाष्पाणि सुधाकराश्रूणि समवेदनाजनितानीत्यर्थः । प्रतिकृतिम्—छविम् । शशांकस्य कृष्णांकः श्रीकृष्णभ्रान्तिं जनयति ।

५८—शीतवर्णनम् । चन्दनम् स्पर्द्धमानः—गोपीनामङ्गशैत्यविधाने चन्दनेन सह प्रतियोगितामुपगच्छन् ।

५९—वसन्तवर्णनम् । राज्ञः अपेक्षार्थे पञ्चमी । मधुपुरमितः गतः । प्राप्तकालः-लब्धावसरः ।

६०—स्वदशां निवेदयति । भीता भीता-मत्प्राणनाशचिन्तनादत्यन्तशङ्किताः । सात्विकविकारलक्षणानि मृत्युच्छाया इत्यादिभिः सूच्यन्ते ।

धीरालापां विकटहसितां बहुमौनां कदाचिद्
नृत्याकम्पास्खलितरशनां शान्तनेत्रां विलोक्य
शीतामुष्णां पिहितनयनां गोपिका वर्णयन्ति
वैचित्र्यं श्रीहरिरतिभवं यत्र राधा प्रमाणम् ॥ ६१ ॥

शय्याकण्ठौ कमलललितौ वीजनं पद्मपत्रै-
र्मुक्ताहारप्रतिहतमुरश्चन्दनोशीरलिप्तम्
नैतत् सर्व्वं प्रभवति सखे वेदनां मेऽपहर्त्तुं-
मन्तर्व्याधिप्रसरशमनं केवलं कृष्णनाम ॥ ६२ ॥

रूपालोकं चकितनयने नासिका चाङ्गगन्धं
कर्णौ नामश्रवणरभसं स्पर्शशानि शरीरम् ।
चित्ताकर्षिन् विवशरसना कीर्त्तनं कामयन्ते ।
त्वत्प्रेमाब्धौ स्नपितवपुषामीदृशी देहवृत्तिः ॥ ६३ ॥

---

६१–श्रीराधायाः अंगवैचित्र्येण श्रीकृष्णस्य प्रेमवैचित्र्यं गम्यते । कदाचित् शीताम्, कदाचित् उष्णाम्, कदाचित् शान्तनेत्रां, कदाचित् पिहितनयनामित्यादिभिः भाववैचित्र्यं । गोपिकाः श्रीहरिरतिभवं श्रीकृष्णप्रणयात् जातम् वैचित्र्यम् विचित्रतां वर्णयन्ति । यत्र यस्मिन् वैचित्र्यविषये राधा अंगभाववैचित्र्योपलक्षिता राधिका एव प्रमाणम् ।

६२–अन्तर्व्याधिप्रसरशमनम्-अन्तर्व्याधिः देहमध्यस्थ चिन्तारूपाद्व्याधिः तस्य प्रसरः विस्तार स्तस्य शमनम् । कमलशयन-चन्दनलेपनादीनां बहिर्व्याधि प्रशमनक्षमत्वम् अन्तर्व्याधिस्तु कृष्णनामप्रसङ्गेनैव गच्छतीति साधकानां नामरूप-भेषजनिर्देशश्लेषः ।

६३–इन्द्रियगतां दशां निवेदयति । कामयन्ते-अभिलषन्ति । रभसम् पुलकम् । त्वत्प्रेमाब्धौ तव प्रेमसिन्धौ, स्नपितवपुषाम् अभिषिक्त-देहानाम् । ईदृशी देहवृत्तिः त्वत्प्रेमभाजनानां जनानामीदृशं सौभाग्यं यत्तेषां नेत्र-कर्ण-स्पर्श-रसना-नासिकेन्द्रियाणां त्वदभिमुखत्वं भवति । अत्र साधकस्य प्रतिनिधित्वमुपगताया राधिकाया आत्मदशानिवेदनम्, श्रीकृष्ण-भक्तानां भजनविधिमपि सूचयति । एवमन्यत्रापि बोद्धव्यम् ।

कामः प्रेमा विगतकलुषो धैर्य्यमूर्त्तिर्द्वितीयो
लोभो रागस्त्वयि विनिहितो मोह उग्रः समाधिः ।
भावावेशो विषमयमदः शेष आनन्दरूपः
संवृत्ता मे पिशुनरिपवः बन्धवः स्पर्शरत्न ! ॥ ६४ ॥

शय्या धूलीमलिनसिकता स्त्वत्पदस्पर्शपूता-
स्त्वन्नामाङ्कक्रमितविलकं त्यक्तभूषं शरीरम् ।
स्नानं गोपीनयनसलिलैः साम्प्रतं त्वत्प्रियायाः
क्षुत्तृष्णेच्छाप्रशमकरणं नाम ते दीनबन्धो ! ॥ ६५ ॥

नासाकण्ठे हृतभुजयुगे वक्षसि भ्रान्तभाले
वापीपङ्कप्रततनुतिलका भूषणत्वं प्रयान्ति
हन्तेदानीं दमितविभवां त्यक्तसर्व्वाभिमानां
दासीभूतां न गणयसि मां किं न्विदं दर्पहारिन् ॥ ६६ ॥

---

## संस्कृतभारतीं प्रति पाश्चात्यविदुषाम् आशंसावाणी ।

'श्रीमत्संस्कृतभारती' विजयतां तन्वेतृपोष्टीवकैः
त्रैलोक्ये त्रिविधैर्जनैः स्त्रिपथगा या पूजिता सेवकैः ।

---

६४—स्पर्शरत्न ! स्पर्शमणेः, यथाहि स्पर्शमणि-प्रभावेन द्रव्याणि स्वर्णत्वमापद्यन्ते तथा रिपुषट्कमपि त्वन्मूर्त्तिध्यानप्रभावेन प्रेमधैर्य्यादिरूपमात्मानुकूलं जातम् । स्पर्शमणेस्तु स्पर्शप्रभावः, तव पुनः ध्यानप्रभाव इति व्यतिरेकध्वनिः ।

६५—शय्यास्नानाहारान् निवेदयति ।

६६—त्यक्तसर्व्वाभिमानाम् प्रोज्झितसकलगर्व्वाम् । सगर्व्वमानवेषु श्रीहरिर्न प्रसीदति इति राधिकायाः प्राकृत-जीववत् कातरोक्तिः ।

या नित्यं हरते भवोद्भवभयं सत्तत्त्वचर्चागुणै-
र्व्याख्यानैः सुगमैः श्रुतेरमृतदैः पुण्योदकैर्निर्मलैः ॥ १ ॥
दूरादेत्य "सुवाचकान्" निजसुतान् माता यथा सोत्सुकान्
प्रीत्यालिंग्य, करद्वयेन वदनं स्पृष्ट्वा ब्रवीति क्रमात्।
बाला रक्षत संविभागमनिशं धर्मार्थकामेप्सवो
धर्मस्तेषु सुसंचितो हि जनयेत् तावर्थकामौ सदा ॥ २ ॥

आर्या आर्यं धर्ममातिष्ठत स्वम्
न त्याज्योऽयं मोक्षदो निश्चयेन।
आपत्काले प्राणनाशेऽपि जाते
धीरास्ते वै ये न धर्मं त्यजन्ति ॥ ३ ॥

मोक्षस्तु शश्वत्सुखरूप आस्ते तं प्राप्य धीराः परिपूर्णकामाः ॥
नेच्छन्ति राज्यं नच विष्णुलोकम् संपत्तिमन्यां किमुतासुरीन्ताम् ॥ ४ ॥
स्वस्त्यस्तु बालाः पुनरागमाय गच्छामि वंगात् विदुषां निषंगात् ॥
षड्भिश्च पक्षैः पुनरेत्य यूष्मान् वक्ष्यामि सर्वं भवदीयकृत्यम् ॥ ५ ॥
तस्यां गतायामिव चन्द्रिकायाम् खिन्नाश्चकोरा इव वाचकास्ते ॥
चिन्तापरास्तद्विरहेण मूढाः कष्टेन मासानतिवाहयन्ति ॥ ६ ॥
आगत्य प्रतिमासं पायय पीयूषमधुरवचनानि।
तारय संसृतिदुःखाद्वारति मातस्त्वदीयपददासान् ॥ ७ ॥

---

## दर्शन-परीक्षा।

### द्वितीयखण्डस्य २०१ पृष्ठतोऽनुवृत्ता।

अत्रैवं सांख्यकारिका:—
'पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य।
पंग्वन्धवदुभयोरपि सम्बन्धस्तत्कृतः सर्गः' इति। प्रकृतिनिवृत्तिरपि

कृतप्रयोजनाश्च नर्तक्या इव संभवन्ति । सर्वथा च प्रधानपरिणाम-कारणतावादो युक्त इति निरूपयन्ति ।

इदमेव पातञ्जल पाशुपत वैष्णवादीनामपि मतम् । इयांस्तु विशेषः यत्सांख्याः चेतनानधिष्ठितं प्रधानं कारणमिति वदन्ति । अन्ये तु ईश्वराधिष्ठितं प्रधानं कारणमिति वदन्ति । अपरोऽयं विशेषो यत्सांख्यपातंजलयोः प्रकृति-प्रधानपदाभ्यां कारणस्य व्यवहारः । पाशुपतवैष्णवादीनां तु प्रकृति-भगवच्छक्त्यादिपदैर्व्यवहार इति ।

एतत्सांख्यादिमतमपि न युक्तम्:—'आत्मन आकाशः सम्भूत' इति आकाशादीनाम् आत्मादिविजातीयानामुत्पत्तिर्या श्रुतौ प्रतिपादिता न सा परिणामवादे युज्यते । नहि मृत्परिणामो घटादिकं मृदो विलक्षणम् । यदि तदर्थं सत्कार्यं परित्यज्य असत्कार्यवादः स्वीक्रियते तर्हि पूर्वोक्तदोषाः सम्भवन्ति । एवञ्च न सतः कार्यस्याभिव्यक्तिर्नाप्यसतः किन्त्वाविद्यक एव सर्वोऽपि प्रपञ्चः । सत एव कार्यस्योत्पत्तौ कारकव्यापारो निष्प्रयोजनः स्यात् । अभिव्यक्तिर्नाम वर्त्तमानोऽवस्थाविशेषः येन सदिति व्यवहारः । अनभिव्यक्तिश्चानागतावस्थाविशेषः येन नास्तीति व्यवहारः । एवञ्च अवस्थाद्वयापन्नः प्रपञ्चः सदसदात्मकमिति कल्पनन्तु न युक्तम् येन धर्मेण अनागतत्वं येन च धर्मेण वर्त्तमानत्वं तयोरप्येवं सदसदात्मकत्वमङ्गीकरणीयमित्यनवस्थाप्रसङ्गात् । किञ्च केन सम्बन्धेन धर्मसत्ता ? न तावत् स्वव्यापारेण किन्तु सम्बन्धान्तरेण । सम्बन्धान्तरेण धर्मसत्ता च सम्बन्धान्तरेण इत्यपरोऽनवस्थेत्यनवस्थाद्वैविध्यम् । एवं च सदसद्रूपत्ववादो न युज्यते, येन सामग्रीणामनागतावस्थाविशेषसम्पादनेन साफल्यं कल्प्येत ।

अस्तु वा कथंचिदपि कारकव्यापारसार्थक्यम् । एवमपि प्रधान-परिणामत्ववादो न सङ्गतः । नहि प्रधानं सावयवम् अनित्यत्वापत्तेः । निरवयवन्तु प्रधानं सर्वात्मना परिणममानं विनश्वरं स्यात् । ब्रह्मणस्तु प्रपञ्चो विवर्त्तो न परिणाम इति न ब्रह्मानित्यत्वापातः । असत्त्वाज्ञानेन यद् यदात्मना भासते

यत्तत्त्वज्ञानेन च यद्बुद्धावनुवर्त्तमानायामेव यद्बाध्यते—यथा रज्जुज्ञानबाध्यं रज्जुज्ञानबाध्यश्च सर्पादि, स तस्य विवर्त्तो यथा रज्जुविवर्त्तः सर्प इति न दोषः ।

अस्तु वा कथंचिदपि प्रधानपरिणाम-सम्भवस्तथापि न प्रधानमिदं केवलं प्रवर्त्तते । नह्यचेतनं कुत्रापि स्वयं प्रवर्त्तते । जलादीनां निम्नाभिमुखी प्रवृत्तिरपि तदधिष्ठानदेवताप्रयुक्तैव । ईश्वराधिष्ठितमेव प्रधानं प्रवर्त्तते इति यात-ञ्चलमतेऽपि तत्प्रधानं मायैव नातिरिक्तं किञ्चित् । सा च माया न सती नाप्यसती किन्त्वनिर्वचनीयैव । अनिर्वचनीयायाञ्च मायायां प्रत्यक्षमनुमानमर्थापत्तिः श्रुतिश्च प्रमाणमित्यद्वैतसिद्ध्यादिषु विस्तरेण प्रपञ्चितम् । इयमेव माया भगवतः शरीरमिति गीतादिषु व्यक्तम् । सर्वथा च मायिकत्वमेव सर्वस्य प्रपञ्चस्य युक्तम् ।

एतेन प्रधानपुरुषसंयोगः पुरुषार्थं प्रधानव्यापारे कारणमिति प्रत्युक्तम् । अन्धो वाचा पङ्गुं प्रवर्त्तयति, अयस्कान्तोऽपि सांनिध्येन लोहं व्यापारयति, पुरुषस्तु निर्लेपो वागादिरहितो नित्यसंनिहितश्च कथं कादाचित्कं प्रधानव्यापारं प्रयोजयेत् । एतेन स्वयं प्रधानं परिणमत इति शङ्कापि परास्ता प्रयोजनाभावात् । न निर्लेपः पुरुषो भोक्ता येन तद्भोगः प्रधानपरिणामस्य प्रयोजनं स्यात् । कैवल्यार्थं प्रधानपुरुषविवेकोऽपेक्षितः प्रधानपुरुषाविवेकेन हि कर्तृत्वादिमान् पुरुषो भासत इति चेत् कोऽयं प्रधानपुरुषाविवेको येन बन्धः । न तावत् विवेकात्यन्ताभावोऽभावस्याकारणत्वात् । किन्त्वज्ञानमित्याविद्यकत्वमेव बन्धस्योपपादितं भवति । नहि प्रधानपुरुषविवेको विशेषरूपेण सम्भवति, सामान्यरूपेण तु स न मोक्षं जनयितुमीष्टे । आत्मज्ञानं खलु मोक्षसाधनमिति श्रुतिस्मृतीतिहासादिसिद्धम् । नहि नैयायिकादिसम्मतमात्मज्ञानं मोक्षजननसमर्थं भवति । अहमिति ज्ञानं खलु तेषां मते आत्मज्ञानं तत्तु सर्वदा सर्वस्य विद्यते इति न कोऽपि बद्धः स्यात् । नहीदानीन्त्वेनाऽऽत्मज्ञाने नापरोक्षत्वं नापि प्रमात्वमिति कल्पनं सम्भवति प्राभाकराणां मते सर्वमपि ज्ञानं प्रमात्मकमेव नतु भ्रमज्ञानं नाम किञ्चिद् ज्ञानं विद्यते इति तत्संमतमात्मज्ञानमपि न भ्रम इति न मोक्षसाधनम् ।

सांख्यपातञ्जलयोश्चात्मनो नित्यपरोक्षतयाऽऽत्मसाक्षात्कारो न भविष्यत्येव । योगजधर्मोऽपि पदार्थानुरोधेनैवातिशये हेतुः न परोक्षमपि विषयमपरो-

क्षयेत् । अत अद्वैतवादिसम्मत आत्मसाक्षात्कार एव मोक्षसाधनम् । तत्सम्मता ऽऽत्माश्रिताविद्याप्रयुक्तमेव ब्रह्मव्यतिरिक्तं सर्वमपि जगत् इति नासत्कार्यवादो नापि सत्कार्यवादो युक्तः । किन्तु सद्रूपब्रह्मविवर्त्तवाद एव युक्तः ॥

द्वैतदर्शनानामपि सर्वेषां ब्रह्मविवर्त्तवाद एव परमतात्पर्यम् । तत्तद्दर्शन-प्रवर्त्तका मुनयः सर्वज्ञाः न भ्रान्ता इति युज्यते । यदि भ्रान्तास्तर्हि के भ्रान्ता इति निर्णयो न भविता । एवञ्च सर्वमपि दर्शनं निर्विषयं स्यात् । बहिर्मुख-प्रवणाः पुरुषाः परमपुरुषार्थेऽद्वैतमार्गे न स्वरसतः श्रद्दधीरन् ।

“ साप्तं प्रयच्छति न पक्षचतुष्टये ताम्
तल्लाभशंसिनि न पञ्चमकोटिमात्रे ॥
श्रद्धां दधे निषधराड्विमतौ मताना
मद्वैततत्त्व इव सत्यतरेऽपि लोकः ॥ ”

इति श्रीहर्षवाक्यमप्यत एवोपपन्नम् । न च जानीयुरद्वैतदर्शनं यथावद्वे-त्यद्वैतमतस्यान्यथाग्रहणेन प्रपञ्चमिथ्यात्वं व्यवहारकालेऽपि गृहीत्वा सर्वे नास्तिका भवेयुरिति नास्तिकमतनिराकरणेनाद्वैतमतप्रवर्त्तनं कामयमानाः तत्ता-दृशान् दर्शनभेदान् प्रदर्शयामासुर्न वस्तुतस्तेषामद्वैतमतनिरासोऽभिमतः । तदुक्तम्:—

‘ आरम्भपरिणामाभ्यां पूर्वं सम्भावितं जगत् ।
पश्चात् काणादसांख्याभ्यां युक्त्या मिथ्येति निश्चितम् ’ ॥

‘ स्वप्नविषयाभिमानवदयं प्रमाण-प्रमेयाभिमान ’ इति ‘ मायागन्धर्वनगर-मृगतृष्णिकावद्वा ’ इति गौतमसूत्रद्वयमप्यत एवोपपद्यते । ‘ कणादकपदाक्षपादकमिदं शास्त्रं तत्त्वन्तु बादरायणात् ’ इत्युक्तिरप्यद्वैतपारमार्थ्यं सम्यगेव बोधयति । उदयनाचार्या अपि विज्ञानवादिमतदूषणप्रस्तावे ‘ आगतोऽसि सन्मार्गे अद्वैत-मतप्रवेशात् । नन्वद्वैतवादस्यापि वैशेषिकादिप्रतिपक्षत्वात्तदपि त्वया निराकर-णीयमिति चेत् किमार्द्रकवणिजो वहित्रचिन्तया, इति वदन्त अद्वैतमेव तत्त्वम् । तत्तूत्तमाधिकारिणाम् । वैशेषिकादिकन्त्वधमाधिकारिणामिति गम-यन्ति । सांख्यभाष्यकारा अप्यक्षपाद-प्रणीते च काणादे सांख्य-योगयोः । त्याज्यः श्रुतिविरुद्धोंऽशः श्रुत्येकशरणैर्नृभिरिति वदन्त इदमनुमन्यन्ते । एतेन नारदपाञ्चरात्रमीमांसकादिमतमपि व्याख्यातम् । अयमत्र नारदपाञ्चरात्रगतः श्लोकः—

'अयं प्रपञ्चो मिथ्येति सत्यं ब्रह्माहमद्वयम्
तत्र प्रमाणं वेदान्ता गुरुः स्वानुभवस्तथा ' इति ।
मीमांसकमूर्धन्याः कुमारिलपादास्तु—
"इत्याह नास्तिक्यनिराकरिष्णु—
रात्मास्तितां भाष्यकृदत्र युक्त्या ।
दृढत्वमेतद्विषयप्रबोधः
प्रयाति वेदान्तनिषेवणेन ॥ "

इत्यात्मतत्त्वनिर्णये वेदान्तानामेव स्वातन्त्र्यमिति ज्ञापयन्ति । एवं च कर्मादिसक्तानां बुद्धिभेदमजनयितुं मीमांसाशास्त्रं सिद्धमिति । उक्तं हि गीताशास्त्रे 'न बुद्धिभेदं जनयेदज्ञानां कर्मसंगिनाम् ' इति । गौतमादिशास्त्रं केवलयुक्त्यनुसारि श्रुतिविरोधे न वस्तुतत्त्वं गमयति । अतएव 'तर्काप्रतिष्ठानात्' इति वैयासिकं सूत्रम् । श्रुत्यनुसारी तु तर्कोऽद्वैतिनामेव विद्यते नान्येषाम् । अन्यथा नास्तिक-शास्त्रमप्यादरणीयं स्यात् ।

अत्राद्वैतब्रह्मसिद्धिकाराश्चार्वाकादिमतमत्यन्तं हेयं मन्यन्ते । वयन्तु तेषामपि दर्शनानामधिकारिविशेषमुद्दिश्य तैत्तिरीयोपनिषद्गतान्नमयात्मसमर्थनार्थमेव प्रवृत्तिः, एवं सौगतादि-मतानामपि प्रपञ्च-मिथ्यात्व निरूपणार्थमेव प्रवृत्तिरित्यद्वैत-दर्शनस्य प्रथमादि-सोपानमेव चार्वाकादिदर्शनं जानीमः ।

एवञ्च सर्वेषामपि दर्शनानामद्वैत-दर्शनेनाविरोधात् तत्सम्मतो ब्रह्मविवर्त्तवाद एव युक्तः, न प्रधानपरिणामवादः सांख्यानां पातञ्जलानाञ्चेति सिद्धम् ।

तत्रेश्वरो न निमित्तकारणमत्र किन्तूपादानकारणं, तच्चं च मायापेक्षयैव न तु परमाण्वपेक्षयेति पूर्वमेव निरूपितम् । 'अपाणिपादो जवनो ग्रहीता, इति श्रुतिश्चात्रानुकूला । 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति ' इति श्रुतिर्लयाधारत्वं स्थितिकारणत्वमपि द्योतयन्ती ब्रह्मणोऽभिन्ननिमित्तोपादानत्वं गमयति । एकविज्ञानेन सर्व-विज्ञानप्रतिज्ञादिकं, 'प्रकृतिश्च प्रतिज्ञा दृष्टान्तानुपरोधात्' इति सूत्रञ्चात्रानुकूलम् । यत्तु वैशेषिकनैयायिकपातञ्जलपाशुपतवैष्णवानां केवलं निमित्तमात्रं कुलाल इवेश्वर इति मतं तदेतेन पराहतम् । ब्रह्मव्यतिरिक्तञ्च सर्वं मिथ्यैवेति सिद्धम् ॥

इदञ्च प्रपञ्चमिथ्यात्वं केवलं श्रुत्येकसमधिगम्यं श्रुत्यनुसारिसत्तर्कसमधिगम्यञ्च । ये तु श्रुतिं प्रमाणं नाभ्युपयन्ति तेऽपि प्रपञ्चमिथ्यात्वं कथमपि

स्वीकर्त्तुमेवाहंन्तीति प्रपञ्चोऽयं सवित्यनुभवगम्योऽपि न वस्तुतः सन्नेव नापि वस्तुतोऽसन्निति सप्तभङ्गीनयेन प्रपञ्चस्यास्याव्यवस्थितत्वं—प्रतिपादयन्त्यर्हंतमतानुसारिणः, तथाहिः——

जैनाचार्याः सप्तपदार्थानङ्गीकुर्वन्ति—(१) जीवः (२) अजीवः (३) आस्रवः (४) सम्वरः (५) निर्जरः (६) बन्धः (७) मोक्षश्चेति सप्तपदार्थाःसन्ति। अयं विभागो विस्तरेण, संक्षेपतस्तु जैनमते द्वौ पदार्थौ जीवोऽजीवश्चेति। जीवाजीवयोः पञ्चास्तिकायशब्दैः व्यवह्रियते यथा—जीवास्तिकायः, पुद्गलास्तिकायः धर्मास्तिकायः, अधर्मास्तिकायः, आकाशास्तिकायश्चेति। अत्रास्तिकायशब्दस्यानियतपदार्थे इत्यर्थः। जीवश्चासावस्तिकायश्चेति कर्मधारयः। एतेषां हि मते सर्वेषु पदर्थेषु सप्तभङ्गीनयं स्वीकृत्य सर्वे पदार्था अनियता इत्युच्यते।

सप्तभङ्गीनयो नाम—स्यादस्ति, स्यान्नास्ति, स्यादस्ति नास्ति च, स्यादवक्तव्यः, स्यादस्तिचावक्तव्यः, स्यान्नास्तिचावक्तव्यश्च, स्यादस्ति च नास्तिचावक्तव्यश्च। अत्र स्याच्छब्दस्तिङन्तप्रतिरूपकमव्ययम्। तस्य च कथंचिदित्यर्थः। एवञ्च स्यादस्तिशब्देन कथंचिदस्तीत्यर्थो गृह्यते। यदा हि यस्य वस्तुनः सत्त्वं विवक्ष्यते तदा तद्वस्तु स्यादस्तीति प्रयुज्यते। यदा हि सर्वं वस्त्वस्तीत्येव स्यात्तर्हि सर्वथा सर्वत्र सर्वात्मनाऽस्त्येवेति प्रवृत्तिनिवृत्ती क्वचित् कदाचित् कथञ्चित् कस्यचन न भवेताम्। अतः सर्वं वस्त्वनियतमित्येवाङ्गीकरणीयम्। यावता च-ऽनियतत्वं तदा च स्यादस्तीति व्यवाहरस्तथा स्यान्नास्तीतिव्यवहारः, तदुक्तम्:—

"तद्विधानविवक्षायां स्यादस्तीति गतिर्भवेत्। स्यान्नास्तीतिप्रयोगः स्यात्तन्निषेधे विवक्षिते॥ क्रमेणोभयवांच्छायां प्रयोगसमुदायभृत्। युगपत्तद्विवक्षायां स्यादवाच्यमशक्तितः॥ आद्यावाच्यविवक्षायां पञ्चमो भङ्ग इष्यते। अन्त्यावाच्यविवक्षायां षष्ठभङ्गःसमुद्गतः॥ समुच्चयेन युक्तश्च सप्तमोभङ्ग उच्यते।"——

एवञ्चानेन सप्तभङ्गीनयेन सर्वेषामपि पदार्थानामनियतत्वात् जीवास्तिकाय पुद्गलास्तिकाय इत्यस्तिकायशब्देन व्यवहारः॥

पुद्गलाश्च षोढा भवन्ति। तत्र पृथिव्यादीनि चत्वारि भूतानि स्थावरं जङ्गमञ्चेति। धर्मोनाम—तप्तशिलारोहणकेशोल्लुञ्चनादि बाह्यचेष्टयाऽन्तर्जायमानमपूर्वं धर्मास्तिकाय शब्देन व्यवह्रियते। जीवस्य सततोर्द्धगमनं स्वभावः देहेऽवस्थानन्तु सततोर्द्धगमनप्रतिबन्धककर्माश्रितम्। तत् प्रतिबन्धकं कर्माधर्मास्तिकायः। आकाशास्तिकायो द्विविधः—लोकाकाशोऽलोकाकाशश्चेति।

तत्रोर्ध्वपरिचतुर्दशभुवनेषु स्थितानामन्तर्वर्त्याकाशो लोकाकाशः । तेषामुपरिविद्यमान आकाशो मोक्षस्थानमलोकाकाशः ॥

आस्रवसम्बरनिर्जरास्त्रयः प्रवृत्तिरूपाः, प्रवृत्तिर्द्विविधा समीचीनाऽसमीचीना च, तत्रासमीचीनप्रवृत्तिसाधनमिन्द्रियसंघातः आस्रवइति । शमदमगुप्तिसंमिति प्रवृत्तिः सम्बरो नाम । तत्र वाह्येन्द्रियनिग्रहः शमः । अन्तरिन्द्रियनिग्रहो दमः । कायवाङ्मनोनिग्रहोगुप्तिः । भूमिगतजन्तुहिंसापरिहाराय प्रसृतेमार्गे सम्यगादित्यप्रकाशे सति सञ्चरणम् नियताहारनिषेवणादि च संमितिः ॥ निर्जरानाम तप्तशिलारोहणादि । तत्रास्रवोऽधर्मः सम्बरनिर्जरौ तु धर्मः । बन्धोऽष्टविधं कर्म । तत्र ज्ञानावरणीयं दर्शनावरणीयं मोहावरणीयमान्तरीयं कर्मेति चतुर्विधं घातिकर्म । सम्यक्ज्ञानं न मोक्षसाधनं ज्ञानात वस्तुसिद्धौ शुक्तिरजतादिज्ञानेभ्योऽपि सत्यं रजतं सिद्ध्येत् इति ज्ञानावरणीयं कर्म, आर्हतदर्शनाभ्यासाच मोक्ष इति दर्शनावरणीयं कर्म । विप्रतिपिद्धेषु वस्तुषु मोक्षमार्गेषु विशेषानवधारणीयं मोहनीयं कर्म । मोक्षमार्गप्रवृत्तानां मोक्षविघ्नकरमैश्वर्यादिकं भवत्विति ज्ञानमान्तरीयं कर्म । एतानि सर्वाण्यपि श्रेयोहन्तृत्वात् घातिकर्मेत्युच्यन्ते ।

अघातिकर्माणि चत्वारि—आयुष्कं गोत्रिकं नामिकं वेदनीयञ्चेति । शुक्रशोणित सम्बन्धजात-मिलितमुभयमायुष्कं कर्म (आयुःप्रकाशकम्) । आयुष्कस्य देहाकारपरिणामशक्ति गोत्रिकम् । गोत्रबीजे कललाख्यद्रव्यात्मकावस्थाया वुद्बुदावस्थायाश्च आरम्भकः क्रियाविशेषो नामिकम् । सक्रियस्य बीजस्य तेजःपाकवशाद् घनीभाव येन शरीराकारपरिमाणो भवति स वेदनीयम् ।

एवञ्च ज्ञानदर्शनसुखवीर्यगुणकस्यात्मनो ज्ञानादिगुणानां मोक्षदशायामाविर्भविष्यतां संसारदशायां प्रतिघातकानि पापरूपाणि कर्माणि घातिकर्म्माणि । शरीरस्याभिमानादिनिवर्त्तकानि कर्माणि अघातिकर्म्माणि । अनेन कर्माष्टकेन पुरुषस्य बन्धो भवति । अत इदं कर्माष्टकं बन्ध इत्युच्यते ।

मोक्षो नामः—(a) अर्हम्मुनिप्राप्तिर्मोक्ष इति केचित् (b) विगलितसमस्तक्लेशस्य विगलितसमस्तवासनस्य च पुरुषस्य ज्ञानावरणीयादिकर्मरहितस्य सुखरूपस्यात्मन उपरिदेशावस्थानं मोक्ष इत्यपरे । (c) इतरे तु अनादिकालप्रवृत्तशरीरावस्थानप्रयुक्ताद् बन्धाद् वियोगे सति सततं जीवस्योर्द्ध्वगमनमिति मोक्षः । बद्धमुक्तस्य ह्यूर्द्ध्वगमनं पञ्जरान्मुक्तस्य शुकस्येव । दृढपङ्कलिप्तस्यालाबुफलस्य निश्छिद्रस्य पङ्कलेपान्मुक्तस्येव सम्भवति ॥

सर्वथा च जीवाजीवास्रवसम्वरनिर्जरबन्धमोक्षाः सप्तपदार्थाः। ते सर्वेऽपि सप्तभङ्गीनयेनानियता अस्तिकाया इत्युच्यन्ते।

अत्र सप्तभङ्गीनये पञ्चमादिभङ्गानां चतुर्थभङ्गात् फलतो न विशेषः। अतः पञ्चमभङ्गेन सत्कार्यवादनिषेधः। षष्ठभङ्गेन तु असत्कार्यवादनिषेधः। सप्तमभङ्गेन तु पूर्वमसदनन्तरं सदिति सदसत्कार्यवादनिषेधः। एवञ्च घटः सन् घटोऽसन् इत्येकस्यैव सत्त्वस्यासत्त्वस्य च प्रत्यक्षत्वाद् वस्तूनामनियतत्त्वम्।

अद्वैतवादेऽपि सदसत्त्वविलक्षणत्वरूपमनिर्वचनीयत्वमङ्गीकृतञ्चेत् व्यावहारिकं नित्यसत्त्वमङ्गीक्रियते, इत्थमपि प्रपञ्चस्य कल्पितत्वञ्च। अतोऽद्वैतमताद् जैनमतस्य विशेषः।

इदन्तु जैनमतत्र विचारसङ्क्षम्:—

तत्र अणुभ्यः (पुद्गलेभ्यः) सङ्घातानामुत्पत्तिः पूर्वमेव निराकृता। यदि सप्तभङ्गीनयोऽङ्गीक्रियते तर्हि मोक्षादिकं सर्वमपि तेषां मतेऽनियतं स्यात्। शीतोष्णयोरिव सत्त्वासत्त्वयोरेकस्मिन् वस्तुनि समावेशो न भवति। अतो यदि किमपि वस्तु अस्तीत्युच्यते तर्हि सर्वदा सदेव यथाऽस्मन्मते जीवात्मा। प्रपञ्चस्तु सदसद्विलक्षणोऽपि व्यवहारान्यथानुपपत्त्या यावत् ब्रह्मज्ञानमस्त्येव। यदि सत्त्वासत्त्वे वस्तुधर्मौ भवेताम् तर्हि वस्त्वसत्त्वदशायामपि दसत्त्वनुवृत्त्यापातः। भग्नेनापि घटेन जलधारणप्रसङ्गश्च। एवञ्च प्रवृत्तिनिवृत्त्यादिकं नियतं जैनानां मते न सम्भवति। अस्माकं मते व्यावहारिकसत्त्वेन प्रपञ्चप्रवृत्त्यादिकं संभवति। किञ्च सत्त्वासत्त्वयोः समुच्चयः परस्परविरुद्धत्वेन न सम्भवति, विकल्पोऽपि वस्तुनि न संभवति। अतः स्यादस्तीति प्रथमभङ्गो द्वितीयभङ्गस्तृतीयभङ्गश्च प्रपञ्चस्य कल्पितत्वमेव गोचरयति। स्यादवक्तव्यमिति चतुर्थभङ्गोऽपि घटादि-शब्दान्यपटादि-शब्दावाच्यत्वं गोचरयति॥

किञ्चार्हन्मुनिर्नित्यमुक्तोऽनादिसिद्धश्च। अन्यो जीवोऽनुष्ठानान्मुक्त इत्यादि व्यवस्था न स्यात्। घटादीनां सर्वेषाम् सङ्कीर्णत्वात्, ओदनार्थ्यग्निभक्षणे प्रवर्त्तेत, जलार्थी मृदानयने प्रवर्त्तेत। जैनानां मते जीवो मध्यम-परिमाणः सङ्कोच-विकाशशीलश्चेत्यवगम्यते। अत्र च जीवस्यानित्यत्वापत्तिः। मनुष्यकायपरिमाणस्य जीवस्य जन्मान्तरे हस्तिकायव्याप्तिर्न सम्भवति। कौमारे स्वल्पपरिमाणो जीव तारुण्यवार्द्धक्ययोः कृत्स्नं शरीरं न व्याप्नुयात्।

बहूनामवयवानां सङ्कोचविकाशाभ्यामुक्तदोषवारणन्तु न सम्भवति । अनन्तास्ते जीवावयवा एकस्मिन्देशे उत भिन्नदेशे । अनन्तानामवयवानां परिच्छिन्नदेशे नान्तर्भावः । यदि भिन्नदेशे बहूनामवस्थानं सर्वेषामवयवानां समावेशेन प्रथिमानुपपत्तिः । प्रदीपवत्सङ्कोचविकाशाभ्युपगमो न युक्तः प्रदीपवदस्याप्यनित्यत्वापत्तेः ।

जीवो नित्योऽणुश्चेति मतं न युक्तम् सर्वेष्वङ्गेषु सुखसाक्षात्कारो न स्यात् । अत्र प्रदीपप्रभाया इव जीवधर्मस्य सङ्कोचविकाशौ नाङ्गीकरणीयौ । ज्ञानं हि जीवस्वरूपं वा गुणो वा । यदि स्वरूपं तर्हि जीवस्य मध्यमपरिमाणत्वापत्तिः । यदि गुणस्तर्हि जीवज्ञानं समवेतमित्यङ्गीकरणीयम् समवायश्च पूर्वमेव निराकृतः । अतो जैनमतमिदं सर्वथाऽयुक्तम् सत् प्रपञ्चानिर्वचनीयतायामेव पर्यवस्यति ।

बौद्धास्तु स्वप्नदृष्टान्तेन सुषुप्तिदृष्टान्तेन वा सर्वस्यापि प्रपञ्चस्य क्षणिकविज्ञानात्मकत्वं शून्यात्मकत्वम्वा युक्तमिति केवलयुक्त्यवष्टम्भेन निरूपयन्ति तथा हि:—

कपिलवस्तुनाम्नि नगरे शुद्धोदनस्य राज्ञो गृहे ब्रह्मादिप्रार्थनया मायादेव्याः सिद्धार्थनाम्ना यः प्रादुर्बभूव स गौतमबुद्धः । आदिबुद्धस्तु :—

"ततः कलौ सम्प्रवृत्ते सम्मोहाय सुरद्विषाम् ।
बुद्धोनाम्नाऽजनसुतः कीकटेषु भविष्यति"

इति विहाराऽपरपर्यायेषु कीकटेष्ववततार । तस्य चत्वारोऽन्तेवासिनः । तेषाञ्च सः 'सर्वं क्षणिकं क्षणिकं, दुःखं दुःखं, स्वलक्षणं स्वलक्षणं, शून्यं शून्यम्' इत्युपादिदेश । ते चान्तेवासिनः स्वबुद्धिवैचित्र्याच्चतुर्धा तं सिद्धान्तमगृहीषुः । सर्वशून्यवादी माध्यमिकः, सर्वक्षणिकविज्ञानवादी योगाचारः, क्षणिकविज्ञानं क्षणिकबाह्यवस्तुघटितमेवेति युगपदेवोभयोर्भानेऽप्यनुमेयं बाह्यवस्त्वस्तीति वादिनः सौत्रान्तिकाः । बाह्यवस्त्वपि क्षणिकमपरोक्षमेव नत्वनुमेयमितिवादिनो वैभाषिकाः । तदयं निष्कर्षः; बाह्यास्तित्ववादिनौ सौत्रान्तिकवैभाषिकौ, सर्वक्षणिकविज्ञानात्मतावादी योगाचारः, सर्वशून्यतावादी माध्यमिकः । तत्र योगाचारमाध्यमिकयोर्मतमग्रे विचारयिष्यामः । इदानीं सौत्रान्तिकवैभाषिकसिद्धान्तं समालोचयामः ॥

सौत्रान्तिक-वैभाषिकौ बाह्यमाभ्यन्तरञ्च समुदायद्वयमङ्गीकुर्वन्ति । प्रथमो

भूतभौतिकसमुदायः, द्वितीयश्चित्तचैत्तसमुदायः। भूतम्—पृथिव्यप्तेजोवाय्वाकाशात्मकः; भौतिकसमुदायः—रूपादीनि तद्ग्राहकाणि चक्षुरादीन्द्रियाणि च। पृथिव्यादिपरमाणुपुञ्जाः सर्गकाले संहताः पृथिव्यादयो भवन्ति। चित्तचैत्तसमुदायस्य तु—रूपविज्ञान-वेदना-संज्ञासंस्कारस्कन्धपञ्चकं कारणम्। रूपस्कन्धः—सरूपाणि चक्षुरादीन्द्रियाणि, आलयविज्ञानं प्रवृत्तिविज्ञानञ्च विज्ञानस्कन्धः। तत्र प्रवृत्तिविज्ञानम् इन्द्रियभेदेन षड्विधम्। वेदनास्कन्धः—प्रवृत्तिविज्ञाननिबन्धनदुःखानुभवः। संज्ञास्कन्धः—गौरश्व इत्यादिसविकल्पकानुभवः। संस्कारस्कन्धः—पूर्वतनानां स्कन्धानां वासनारूपाः रागक्लेशमदमानादयः धर्माधर्मौ च। अत्र विज्ञानस्कन्धः चित्तम्, इतरे चैत्ता इति विवेकः।

इयं पञ्चस्कन्धी आध्यन्तरसमुदायकारणम्। समुदायद्वयमपीदं क्षणिकमेव। आलयविज्ञानमेवात्मा। क्षणिकमप्यालयविज्ञानं क्षणिकत्वभावनापरिपाकं विना वासनानुच्छेदात् प्रवर्त्तत इति युक्तम्। वासनोच्छेदश्च भावनाचतुष्टयेन। स्वरूपभावना, क्षणिकत्वभावना, दुःखत्वभावना, शून्यत्वभावना चेति भावनाचतुष्टयम्। स्वरूपभावनया धर्मधर्मिभावः, क्षणिकत्वभावनया स्थिरत्वं, दुःखत्वभावनया स्थिरत्वबुद्धिः, शून्यत्वभावनया सत्यत्वबुद्धिश्च निवर्त्तते।

अन्तरेण संहन्तारं चेतनसमुदायद्वयमिदं भवत्येव। कार्यसामान्यं प्रति प्रत्येकहेतुः समुदायहेतुरिति हेतुद्वयं विद्यते। बीजादङ्कुरं, अङ्कुरात्पुष्पम्, पुष्पात् फलमिति प्रत्येकहेतूपबन्धः। तत्र बीजे पृथिवीधातुना काठिन्यं, अब्धातुना स्नेहः, तेजोधातुनौष्ण्यम्, वायुधातुना चलनम्, आकाशधातुना विवरम्, ऋतुधातुना तस्यान्यथापरिणामश्चेति समुदायहेतूपबन्धः। नहि प्रत्येकं वा समुदायम्वा स्वकीयं स्वकीयं कार्यं जनयितुं चेतनमपेक्षते, स्वयम्वाऽऽत्मानं चेतनं मन्यते। तदिदं समुदायद्वयं भावनाचतुष्टयेन निरुध्य तेन यः साक्षात्कारो जायते तदेव तत्त्वज्ञानम् तेनैव मोक्षश्च।

मोक्षश्चाऽऽमन्ति—अस्मदीयविज्ञानसन्ततीनां सर्वज्ञत्वसन्ताने ऽन्तर्भावो वा, विनश्वरक्षणिकालयविज्ञानोपरमो वा इति मन्तव्यम्। एवं पृथिव्यादिधातुजन्यं शरीरं। तत्र शरीरे क्षणिके च स्थिरत्वादिबुद्धिरूपाऽविद्या, तथा रागद्वेषमोहा विषयेषु भवन्ति। तेभ्यो गर्भस्थस्याप्यज्ञानमुत्पद्यते। तस्माच्चालयविज्ञानात् पृथिव्यादिचतुष्टयमुपादानकारणं निष्पद्यते। सैव सितासितादिरूपवत्कललबुद्बुदाद्यवस्था। तस्माच्च नामरूपशब्दाभ्यां कललबुद्बुदाद्याकाराभिव्यक्तिः।

मवभिव्यक्तिक्रमेण पृथिव्यादिधात्वालम्बनानीन्द्रियाण्युत्पद्यन्ते । नैलकस्यान-मेवेन्द्रियम् तच्चाप्राप्यकारि । एतेषामधिपतिप्रत्यय इति नाम, रूपादिविषय-प्रत्ययानां कारणानि चत्वारः प्रत्ययाः; आलम्बनप्रत्ययः, समनन्तरप्रत्ययः, सहकारिप्रत्ययः, अधिपतिप्रत्यय इति । रूपादिविषयप्रत्ययाणामित्यत्र प्रत्यय-पदस्य ज्ञानमर्थः । चत्वारः प्रत्यया इत्यत्र प्रत्ययपदस्य कारणत्वमर्थः । नीलाद्याकारता पूर्वतनमालयविज्ञानं आलोकादयः चक्षुरादीन्द्रियाणि च प्रवृत्ति-विज्ञानं जनयन्ति इति सौत्रान्तिकवैभाषिकमतसंग्रहः ॥

नैतत्सङ्गतम् । एकेनापरस्यापरेणान्यस्येति प्रत्येकहेतुत्वं चेतनं विनापि कथमपि भवतु नाम । समुदायहेतुत्वन्तु समुदायस्वरूपसिध्यर्थं संहन्तारं कमपि चेतनमपेक्षत एव । पृथिव्यादय उपसर्पणवशात् चक्रवद्भ्रमन्त अन्त्यतां प्राप्ताः स्वयमेव कार्यं यदि जनयन्ति तर्हि कुसूलस्थानां बीजानामन्त्यक्षणप्राप्त्यैवाङ्कुर-जनकत्वापत्त्या विनैव कृषिं कृती कृषीवलः सम्पद्येत । अतो विन्यासविशेषेण स्थलविशेषं प्राप्ता एव बीजा अङ्कुरमुत्पादयन्तीति वक्तव्यम् । विन्यासभेदश्च नाचेतनानां स्वयमेव भवति इति संहन्ता स्थायी च चेतनः कोऽप्यपेक्षते । किञ्च बहव उपकार्योपकारकभावापन्ना भावा विद्यन्ते । इदञ्च क्षणिकत्वपक्षे नोपपद्यते क्षणिकस्योपकारानास्पदत्वात् । नहि क्षणभेदमन्तरा उपकार्योपकारकभावः सम-र्थयितुं शक्यते । एवञ्च स्थायित्वं भावानामवश्यमिष्टमेव ।

अस्थिराणां संहतानामेव भावानामनादिसंसारेऽनुवृत्तिकल्पनेऽपि तेषां भावानां सुखदुःखादिजनकत्वं यत्किञ्चित्सहायापेक्षयैव वर्णनीयमिति । तादृश-सहायसम्पादकश्चेतनोऽपेक्ष्यते ॥

किञ्चालयविज्ञानेन सदृशज्ञानान्तरोदये मनुष्यस्य देवतिर्यगादिभावस्य च क्षणिकत्वादिभावनाचतुष्टयपरिपाकपर्यन्तं स्वीकरणीयस्यानुपपत्तिः । विसदृशज्ञानो-दये च कदाचिन्मनुष्यः कदाचिद् हस्ती कदाचिद् गर्दभः स्यादिति महाननाश्वासः ॥

अदृष्टसहकृतेन कारणकलापेनापि न संघातसिद्धिः । यः खलु कर्त्ता न स भोक्ता युष्मन्मत इति कर्त्तुः भोगपूर्ववर्त्तितया ऽदृष्टकल्पनं सर्वक्षणिकत्ववादे न सम्भवति । यत् कार्यपूर्वक्षणे कार्यक्षणे च विद्यते तदेव कारणम् । क्षणिकत्व-वादे च प्रत्येकहेतुत्वादिकथापि न सिद्ध्येत ।

घटादिषु मृदादिबुद्धिर्हि घटादीनां मृदाद्युपादानकारणतागमिकेति वर्णनीयम् । क्षणिकत्ववादे कारणात्मना कार्यस्यानुभवोऽपि बाधितः । यदि कारण-सदृशात्मना ऽनुभवः कार्यस्य विद्यते, न तर्हि उपादानकारणादिनिर्णयो भवति ।

यत्तु चित्तचैत्तादीनामालम्बनादिचतुर्विधहेतुकार्यत्वमुक्तं तदपि चतुर्णामेकत्र समवधानासम्भवात् क्षणिकत्वमतं विरुणद्धि ॥

यत्तु सौगतानां मतं प्रतिसंख्या सन्तमसन्तं करोमि इति बुद्धिस्तया निरोधो घटादीनां मुद्गरप्रहारादिना क्रियमाणो नाशः । आवरणाभावमात्रमाकाशश्च शून्यम् इतरत् क्षणिकमिति तदपि न सङ्गतम् । यदि प्रतिसंख्या तन्निरोधो वा सन्तानस्य, क्षणिकविज्ञानसन्तानं भवति न तर्हि कार्यकारणभावः । नहि सा सन्तानिन एव सन्तानः अन्यथा क्षणिकताविरोधः । अभेदः स्यात् ।

तदयं निष्कर्षः—घटादयो न क्षणिकाः, सोऽयं घट इति प्रत्यभिज्ञाविरोधात् । नाऽप्यावरणाभावमात्रमाकाशः किन्तु श्रुत्यादिसिद्धत्वात् आकाशो भावरूप एव । आत्मा तु न क्षणिकः स्मरणाद्यनुपपत्तेः । सादृश्यनिबन्धनन्तु प्रत्यभिज्ञानादिकं न सम्भवतीति पूर्वमेवोक्तमस्माभिः ।

क्षणिकविज्ञानातिरिक्तबाह्यार्थशून्यतावादी योगाचारः । इदमस्य मतम्—स्वप्नदृष्टान्तेन क्षणिकविज्ञानमात्र तत्त्वम् । ज्ञानाकाराणामेव सतां ज्ञेयानां केनचिदाकारभेदेन प्रमाणं प्रमाता प्रमितिरिति विधाचतुष्टयमुपपद्यते । बुद्धिकल्पितरूपेणान्तस्थ एव प्रमाणमेयादिव्यवहारो न पारमार्थिक इत्यद्वैतमतादस्य वैलक्षण्यम् । यदद्वैतमते अनिर्वचनीयनीलादिविषयविज्ञानमत्र नीलाद्याकारविज्ञानमिति यत्स्वरूपविज्ञानं तदेवाभत्येन बाह्येनाकारेण युक्तं प्रमेयम् । प्रमेयप्रकाशनं प्रमाणफलमिति वैभाषिकसौत्रान्तिकाभ्यामपि बाह्यार्थसत्त्ववादिभ्यां काल्पनिक एव प्रमाणव्यवहारोऽङ्गीकृतः । नहि वृक्षासम्बन्धी परशुर्द्वैधीभावं जनयति, किन्तु संयोगेन तत्सम्बन्ध्येव । एवं प्रमाणफलयोरपि सामानाधिकरण्यं ज्ञानस्थत्वेन सम्पादनीयम् । नव तत्र संयोगः सम्बन्धः, किन्तु तादात्म्यम्, तदपि कल्पितमेव, न वस्तु सत् । नहि प्रमाणफलाभ्यां द्वाभ्यामेकस्य ज्ञानस्याभेदः सत्यः सम्भवति ।

अयं घट इत्याद्यनुभवस्तु ज्ञानगताकारमेव गोचरयति सहोपलम्भनियमात् ज्ञानज्ञेययोः । एतेन बाह्यकारणतया ब्रह्मादिसिद्धिरपि परास्ता । स्थूलादिज्ञानं हि ज्ञाने विषयेषु परमाणुत्वसम्भवात् ज्ञानाकारतामेव विषयाणां स्थापयति तदिदं न सङ्गतम् ।

'अबाधात्स्वप्नवैधर्म्याद् बाह्यार्थस्तूपलभ्यते बहिर्वैदिति तेऽप्युक्तिर्नातिधीरुर्यरूपभाक्' अयं घट इत्याद्यबाधितानुभवोऽपि स्वप्नविलक्षणः, स्वप्ने घटादयो ये

भासन्ते न ते तात्कालिका भवन्मतेऽन्यथाख्यात्यस्वीकारात् नाप्यनिर्वचनीया दृष्टान्ताभावात्, जाग्रत्प्रपञ्चस्तु सति प्रमातर्यबाध्यमानत्वात् न प्रातिभासिकः इति ब्रह्मसाक्षात्कारपर्यन्तं वस्तु सन्नेव । बहिर्वदिति भवदुक्तिरपि बाह्यार्थमवगमयति । ज्ञानवैचित्र्यमपि विषयवैचित्र्येणैव भवति । वासनावशात्तु ज्ञानवैचित्र्यं न सम्भवति सा हि वासना यदि क्षणिका तर्हि स्मरणाद्यनुपपत्तिः । अथाक्षणिका तर्हि युष्मन्मतहानिः नहि तस्या अक्षणिकायाः क्षणिकमालयविज्ञानमाश्रयो भवति, नहि युगपदुत्पन्नयोः सव्यदक्षिणशृङ्गयोराधाराधेयभाव उपपद्यते । सर्वथा क्षणिकविज्ञानमतमयुक्तमेव ॥

शिष्यैस्तावत् योग आचारश्च करणीयः योगो नाम प्रश्नः आचारो नामाङ्गीकारः गुरूक्तार्थस्वीकारेणोत्तमाः । प्रश्नाकरणात् अधमा ये ते खलु बुद्धमतानुयायिनो माध्यमिकाः कथ्यन्ते इदमेतेषां मतम् :—

नहि बाह्योऽर्थोऽस्ति बाह्यार्थस्य परमाणुसमूहादिरूपत्वासम्भवात् । नापि ज्ञानाकारा विषया अनुभवविरोधात् क्षणिकविज्ञाननिर्विषयज्ञानायोगात् । एवञ्च प्रपञ्चो न सन् बाध्यमानत्वात् नाप्यसन् अपरोक्षत्वात् नापि सदसद्रूपः विरोधात् नाप्यनिर्वचनीयः सद्विलक्षणत्वेऽसत्त्वस्य असद्विलक्षणत्वे सत्त्वस्यावश्यकत्वेन सदसद्विलक्षणत्वस्यायोगादिति निस्तत्त्वमेव तत्त्वम् । शून्यत्वन्नाम सद्रूपत्वादिनाविचारासहत्वम् । इति शून्यभावनयैवात्महननरूपमोक्षसिद्धिरिति ॥

नेदं मतं युक्तम्—प्रमाणैः ज्ञानस्य ज्ञेयस्य चोपलम्भात् । स्वप्नजागरयोर्विषयभेदस्तु प्रत्यक्षः, सर्वशून्यत्वं कथमपि न सिद्ध्यति । सदसतोर्विचारासहत्वेन सर्वप्रमाणागोचरं वस्तु युष्माभिर्व्यवस्थापितम् । सर्वं शून्यमिति च प्रमाणेन स्थापितमिति विरोधेऽपि युष्मन्मते सौगताद्वैतमतयोरियानेव भेदः । सर्वमिथ्यात्ववादी सौगतः, आत्मेतरमिथ्यात्ववादी अद्वैती ॥

सर्वथा च यन्यतोऽर्थतश्चानादरणीयोऽयं सौगतनयः । 'पश्यः' इत्याद्यपशब्दास्तत्रोपलभ्यन्ते । अर्थतस्तु विरोधः क्षणिकं विज्ञानं वासनाद्याधारमिति वर्णनेन । वस्तुतस्तु वासुदेवावतारपुरुषस्य बुद्धस्य नैतत् वस्तुगत्या सम्मतम् दैत्यादिविनाशार्थं खलु बुद्धमतं प्रवर्त्तितमिति शास्त्रादवगच्छामः ।

वर्णाश्रमधर्मप्रतिपालनेन भगवत्पूजनादिना च प्रवृद्धानां हि दैत्यानां तपोविशेषेण वर्द्धमानायुषामपि यथा धर्मेष्वविश्वासस्तथा भगवति चाविश्वास-

स्तथाकरणेन नियतमेव तेषां तेजोवीर्यादिकं क्षीणं भवेदिति तत्सम्पादनद्वारा दैत्यादिविनाशनेन धर्मरक्षणमेव बुद्धस्य मुख्यमभिमतम् ।

सर्वथा सर्वेषामपि दर्शनानां यथा यथा परस्परमविरोधस्तथा तथा तत्सम्पादनमेव युक्तमिति असत्कार्यवादसत्कार्यवादयोः सद्विवर्त्तवादोपोद्घाततयाऽविरोधः संक्षेपशारीरकाभिमतोऽयन्तमेव समीचीनः ।

सद्विवर्त्तवादे ह्यज्ञानावृतं ब्रह्मचैतन्यं सद्रूपं प्रपञ्चात्मना भाति, यः प्रपञ्चो ब्रह्मचैतन्यावरणस्याज्ञानस्य परिणाम इत्यज्ञानपरिणामित्वं ब्रह्मविवर्त्तोपादानत्वञ्च सम्मतम् । अद्वैतिनो हि यदज्ञानं साम्यावस्थापन्नसत्त्वरजस्तमोगुणात्मकं मायाभिधानञ्च मन्यन्ते तदेव सांख्याः प्रधानं मन्यन्ते । इयान् विशेषः यत्प्रधानं सांख्याभिमतं सत्यमद्वैताभिमता माया मिथ्येति ।

प्रपञ्चस्य मायापरिणामत्वं ब्रह्मविवर्त्तत्वञ्च सदसद्विलक्षणत्वरूपमिथ्यात्वसिद्ध्यधीनम् । तत्रासत्कार्यवादेनोत्पत्तेः प्राक् बौद्धमतेन शून्यत्वभावनापरिपाकानन्तरञ्च प्रपञ्चस्यासत्त्वेऽवगते 'आदावन्ते च यन्नास्ति वर्त्तमानेऽपि तत्तथा' इति न्यायेन प्रतीतिदशायामपि प्रतीतिमात्रं न सत्त्वमिति गम्यत इति असत्कार्यवादसत्कार्यवादयोः सद्विवर्त्तोपोद्घातत्वमत्यन्तमुचितमिति जानीम इति विस्तराद्भीतभीता वयमिदमत्रोपसंहरामः ।

यथाहि केवलं न्यायादिदर्शनपर्यालोचनेनाद्वैतदर्शनस्य महर्षिवेदव्यासादिसम्मतस्यापि सर्वथा हेयत्वमवगम्यते न तथाऽद्वैतदर्शनपर्यालोचनेन दर्शनान्तरस्य कस्याप्यत्यन्तमवहेयत्वं प्रतीयत इति सर्वेषामाचार्याणां तत्त्वदर्शित्वसमयपरिपालनमद्वैतमतपारमार्थ्य एव संभवति । प्रसिद्धं हि पुराणादिषु चार्वाकादिदर्शनानां प्रथमादिसोपानत्वमद्वैतदर्शनस्यान्तिमं सोपानत्वमिति ।

---

## आत्मविवेकः ।

### ३यभागस्य ३यखण्डस्य १५८ पृष्ठतोऽनुवृत्तः ।

* यतः स्थिरस्य मेलकस्याभावे मेलनासंभवात् । हेतूपनिबन्धपक्षोऽपि नोपादानहेतुतासमर्थनायालं, नह्युपादानस्य पूर्व्वक्षणस्य निवृत्तावुपादेयस्योत्तर-

---

* एकस्य संहन्यमानानामुपयोगादिपरिज्ञान—

क्षणस्य समुत्पादः सम्प्रत्युक्तिकः तथासति निरन्वय-नाशपक्षे अतिप्रसङ्गदौस्थ्य-प्रसङ्गात् । अपिच कार्य्यानुकूल व्यापाररहितस्य का नाम कारणत्वशाब्दोयुक्तिः ? क्षणभङ्गपक्षे "भूतिर्येषां क्रिया सैव कारकं सैव चोच्यते" इत्यङ्गीकारेण क्षणद्वय-साधारण्याभावात् स्वरूपातिरिक्तव्यापारविरहिणः पूर्व्वक्षणस्योत्तरक्षणहेतुताऽपि नोपपद्यते । यदि तावद्वस्तुनः स्वरूपमेवोत् पादनिरोधौ स्यातां ततो वस्तुशब्द उत्पादनिरोधशब्दौ च पर्य्यायाः प्रसज्येरन् । अथ मन्यते, उत्पादनिरोधौ वस्तुनो न स्वरूपं अपितु आद्यान्त्यावस्थारूपौ ताविति तदाऽपि तयोर्वस्तुसम्बन्ध आह-त्यैवाङ्गीकार्य्य इत्याद्यान्त्यमध्यक्षणत्रयसम्बन्धवत्तया वस्तुनः क्षणिकत्वहानिः अथात्यन्तविविक्तावेव उत्पादनिरोधौ वस्तुना सर्व्वथाऽसंसृष्टौ तदा वस्तुनः सदातनत्व-प्रसङ्गः । यच्चार्थक्रियाकारित्वस्य स्थायिन्यसंभवाद् भावस्य क्षणिकत्वं प्रतिष्ठापयति, नहि बीजं बीजत्व ाङ्कुरजनकं तथासति कुसुलस्थादपि तस्मादङ्कु-राद्युत्पत्तिप्रसंगात्, अपित्वङ्कुरकुर्व्वद्रूपत्वादिना । तच्च पूर्व्वापरभागविकला-ङ्कुरजननोपहितक्षण एव वर्त्तत इत्यवश्याभ्युपेयमेवेति तद्बलेनापि क्षणिकत्व-सिद्धिरिति, तदपि मनोरथमात्रम् । स्थिरादेव बीजादेः सहकारि-समव-धानासमवधानाभ्यामङ्कुरोत्पादानुत्पादप्रतिनियमसम्भवे प्रत्यक्षबीजादि गता-तीन्द्रियजाति-कल्पनानौचित्यात् । सहकारिभिरकिञ्चित्करैः कार्य्यानुत्-पादाशङ्कायाः कार्य्योपधान-रूपोपकारजनकत्वाभ्युगमादेव व्युदाससम्भवात् अनवस्थाया निरवकाशत्वात् । अन्यथा कुर्व्वद्रूपत्वाङ्गीकारे अनुमानमात्रो-च्छेदापत्त्या क्षणिकत्वसिद्धेरयोगप्रसङ्गात् । उपस्थितकारणगतरूपं परित्यज्या-तीन्द्रियरूपेण कारणत्वकल्पने तद्वत् कार्य्यताया अप्यतीन्द्रियरूपेण कल्पन-प्रसक्तौ कार्य्यकारणभावाग्रहात् । वृक्ष-शिंशपयोरपि स्वकार्य्यजननाया-तीन्द्रिय-रूपोपयोगे वृक्षत्वादि-सिद्ध्यनुपपत्तेः स्वभावहेतुकस्याप्यनवकाशात् । तदुभयाधीन-निरूपणस्यानुपलम्भलिङ्गकानुमानस्यापि दूरतो विसृष्टत्वात् । नच क्षणिकत्वे निर्विकल्पक-प्रत्यक्षमेव मानमिति शक्यं वक्तुं, तस्य सविकल्पको-न्नेयतया तदभावे तत्सिद्ध्यनवकाशात् । न च क्षणस्य स्वलक्षणस्याभिलापसं-सर्गायोग्यस्य सविकल्पक-ज्ञानविषयत्वं कल्पनार्हं, तदुक्तं, "अशक्यसमयो ह्यात्मा सुखादीनामनन्यभाक् । तेषामतः स्वसंवित्ति र्नाभिजल्यानुषंगिणी"ति । एतत् सर्व्वमभिसन्धायाचार्य्यस्त्वाह स्म "न वैजात्यं विना तत् स्यान्न तस्मिन्ननु मा भवेत् । विना तेन न तत्सिद्धिर्नाध्यक्षं निश्चयं विने" ति । तस्यव, वैजात्यं कुर्व्वद्रूपत्वं

विना तत् क्षणिकत्वं न स्यात्, तस्मिन् कुर्व्वद्रूपत्वे कल्प्यमाने नानुमानं लब्धावकाशं भवेत्। तेनानुमानेन च विना न क्षणिकत्वसिद्धिः, नापि क्षणिकत्वे अध्यक्षं निर्व्विकल्पकज्ञानं प्रभवति, तस्य सविकल्पक-ज्ञानात्मक-निश्चयोत्पत्तितया तदभावे सद्भावाऽवेदनात् इत्यर्थः। अपिच वैनाशिकः सर्व्वस्य वस्तुनः क्षणिकत्वं प्रतिज्ञाय उपलब्धुरपि क्षणिकतामभ्युपेयात्, सा च न सम्भवति, योऽहमद्राक्षं सोऽहं स्पृशामीत्यनुभवस्य बाधकं विनाऽप्रमाण्याभ्युगमासम्भवेन पूर्व्वापरज्ञानद्वयैककर्त्तृकताया आवश्यकतया उपलब्धुः क्षणिकत्वायोगात्। अन्यथा पुरुषान्तरोपलब्धविषयेऽप्येवं पुरुषान्तरस्य प्रत्ययः प्रसज्येत, अपिच दर्शन-स्मरणयोरेकस्मिन् कर्त्तरि प्रत्यक्षः प्रत्यभिज्ञाप्रत्ययः सर्व्वस्य लोकस्य प्रसिद्धोऽहमदोऽद्राक्षमिदं पश्यामीति, यदि हि तयोर्भिन्नः कर्त्ता स्यात्तदाऽहं स्मराम्यद्राक्षीदन्य इति प्रतीयात्, नत्वेवं प्रत्येति कश्चित्, यत्रैवं प्रत्ययस्तत्र दर्शनस्मरणयो र्भिन्नावेव कर्त्तारौ सर्व्वो लोकोऽध्यवस्यति- 'स्मराम्यहमसावदोऽद्राक्षीदिति" इहत्वहमदोऽद्राक्षमिति दर्शनस्मरणयोर्वैनाशिकोऽप्येकं कर्त्तारं अवगच्छति। तथाऽऽजन्मन आच उत्तमात् श्वासादतीताश्च प्रतिपत्तीरात्मनः प्रत्यभिजानन् क्षणभङ्गवादी कथं नापत्रपते? सादृश्यात् प्रत्यभिज्ञानं नाभेदे प्रमाणमिति तु महत् साहसम्। सादृश्यस्य पूर्व्वापरक्षणद्वयायत्तत्वात् क्षणभङ्गपक्षे क्षणद्वयद्रष्टुस्तृतीयस्याभावेन तदसम्भवात्। अभेदं प्रतिक्षिपतः सादृश्यदर्शिस्थिरस्वीकारे घट्टकुट्ट्यां प्रभातः। अपि च वैभाषिकाभिमतग्राह्यार्थद्वैविध्यमनुपपन्नतरम्। तथाहि ग्राह्याध्यवसेय-लक्षणे भेदद्वये केयमध्यवसेयता नाम? यदि ग्राह्यता, तदा न द्वैविध्यं अथान्या, तर्हि सोच्यताम्। ननूक्ता तैरेव स्वप्रतिभासमानेऽनर्थेऽर्थाध्यावसायात् प्रवृत्तिरिति अथ विकल्पाकारस्य कोऽयमध्यवसायः? किं करणं उत योजनम् आहोस्विदारोप इति। नाद्यो नह्यन्यदन्यत्कर्त्तुं शक्यं, न जातु सहस्रमपि शिल्पिनो घटं पटयितुमीशते। नवान्तरं बाह्येन योजयितुं, तथा सति युक्त इत्येव प्रत्ययः स्यान्नच सोऽस्ति। न तृतीयो बाह्ये आरोपो भवन् गृह्यमाणे वा भवेदगृह्यमाणे, आद्येऽपि किं विकल्पेन, आहोस्वित्तत्समयजेनाविकल्पेन। न तावद्विकल्पोऽभिलापसंसर्गयोग्यगोचरो देशकालाननुगतमशक्याभिलापसमयं स्वलक्षणं ग्रहीतुमलं इतिचोक्तं प्राक्। नापि तत्समयजेन निर्विकल्पकेन गृह्यमाणे स्वलक्षणे विकल्पः स्वाकारमर्पयितुमर्हति, नहि जातु रजतज्ञानाप्रतिभासिनि पुरोवर्त्तिनि शक्यं रजतज्ञानेन रजतमर्पयितुम्।

अगृह्यमाणतापत्तस्तु सुतरामुपपत्तिपद्धतेरतिपतति। धर्मिज्ञानं विनाऽऽश्रयासम्भवात्। तस्मात् परिभाषामात्रमेतन्नोपपत्तिं सहत इति। यदपि विज्ञानमात्रतत्त्वमिति योगाचारमतं तदपि तुच्छम्, अनुभवबलेन वस्तुसिद्धेरभ्युपगमे बाह्यार्थस्याभ्युपगन्तुमुचितत्वात्। कोह्ययं प्रमाणप्रवृत्तेरयथापक्षपातो, यदुपलब्ध्यविषयानुपेत्य केवलमुपलब्धावेव विश्राम्यति, यदि चानुभवबाध्येऽपि बाह्यार्थस्य बाधितत्वादसत्त्वमङ्गीकृतमित्युच्यते, तदाऽप्युपलब्धेरपि समानतन्त्रे शून्यवादिभिरेव बाधाभ्युपगमात्तुल्यमिति सन्तोष्टव्यम्। अपिचोपलम्भ एवार्थस्योपलभ्यमानस्य सद्भावमुपलम्भव्यतिरेकं चानुभावयति। नहि कश्चिदुपलब्धा उपलब्धिमेव उपलभते, अपितु विषयान्, तथा उपलब्धिस्वरूपव्यतिरिक्ततया स्तम्भं कुम्भं वा उपलभमानः कश्चिन्नोपलभे इत्युपलभते। येन विज्ञानाभेदः विज्ञानव्यतिरिक्तवस्तुसद्भावो वा भवेदिति। किञ्च यदन्तर्ज्ञेयतत्त्वं तद्बहिर्वदवभासते इति हि विज्ञानवादिनां विचार्यमाणमातनोति चमत्कारातिशयं चतुरचेतसां अनभ्युपगतबाह्यार्थस्य तस्य बहिर्वदित्युपमानोपन्यासायोगात्। तथावानभिप्रेतोऽपि बाह्यार्थस्तद्बलादापतेदेवेति। न च ज्ञानस्य विषयसारूप्याद्विषय-नाशो भवति, असति विषये विषयसारूप्यानुपपत्तेः, बहिरुपलब्धेश्च विषयस्य, अतएव सहोपलम्भनियमोऽपि प्रत्ययविषययोरुपायोपेयभावहेतुको नाभेदहेतुक इत्युरीकर्त्तव्य, यथाहि प्रभारूपानुविद्धचाक्षुषादिप्रत्ययनियमः प्रभाया घटादिचाक्षुषोपायतया, न पुनर्घटस्य प्रभारूपताऽनेन नियमेन प्रसिद्ध्यति, एवमात्मसाक्षिकानुभवोपायत्वादर्थस्य सहोपलम्भनियमः, किंच विज्ञानार्थयोरभेदे, तयोर्विशेष्यविशेषणभावानुपपत्तेः तथा क्वचिदर्थाभेदेऽपि विज्ञानभेदस्य, विज्ञानाभेदेऽपि क्वचिदर्थभेदस्य चोपलभ्यमानस्याप्यनुपपत्तेश्च। यत्तु स्वप्नादि-दृष्टान्तेन जागरितेऽपि प्रत्यये विनैव बाह्यार्थं वासनाबलाद्वैचित्र्यं समर्थनीयमिति तदपि मनोरथमात्रम्। स्वप्नजागरितप्रत्यययोर्बाधाबाध-वैधर्म्यस्य स्फुटत्वात्। स्वप्ने परिदृष्टगजादिकमिदानीं नोपलभे इति प्रबुद्धमात्रस्यानुभवात्, यात्र च जागरेऽपि शुक्तिरूप्यादेर्बाधानुभवस्तत्रासत्त्वमर्थस्येष्टमेव। स्वप्ने परमबाधितस्य कस्यचिदसम्भवात्। यत्र चांशे स्वप्नप्रत्ययः संवादिप्रवृत्तिमुपजनयति, तत्रापि देशकालादिवैशिष्ट्यांशेऽवश्यं भ्रान्तिस्वीकारौचित्येन बाधावश्यम्भावात्, दर्पणादौ स्वमुखस्य ग्रीवास्थत्वविपर्ययेणाभानवत् अपिचानुभव-विरोधभयेन जागरितप्रत्ययानां स्वतोनिरालम्बनतां वक्तुम-

शङ्कुवता स्वप्न-प्रत्यय-साधर्म्य-मात्रेण वक्तुमिष्यते, नच यो यस्य स्वभावतो धर्मो न भवति स तस्यान्यसाधर्म्यमात्रेण धर्मो भवितुमर्हति । नह्यग्निरुष्णोऽनुभूयमान उदकसाधर्म्यात्तु शीतो भविष्यति । कथं च वासनावैचित्र्यात् ज्ञानवैचित्र्यमवकल्पते ? वासना हि नाम बाह्यार्थोपलम्भाहितः संस्कारः, स च प्रत्यर्थमुपलब्धिनिमित्तात्वनुरूपोत्पद्यते, अनुपलभ्यमानेष्वर्थेषु किन्निमित्ता भवेदिति । अनादित्वेऽप्यन्धपरंपरान्यायेना प्रतिष्ठैवानवस्था व्यवहारलोपिनी स्यान्नाभिप्रायसिद्धिः । बीजांकुरस्थले तु केषुचिद्बीजादिषु व्यक्तिविशेषेषु कार्य्यकारणभावमुपलभ्य तज्जातीयेषु शेषेषु स परिकल्प्यत इत्यनादिता समभ्युपगन्तव्या । इह तु अर्थानुभवनिरपेक्षायां प्राथमिकवासनाव्यक्तावेव विवादात् कल्पनाया निर्मूलत्वादनादित्व-कथायाम् अन्धपरम्परान्यायावतारस्योचितत्वात् । अपिच विनाऽपि वासनामर्थोपलब्धिः सम्भवाद्विना चार्थोपलब्धिं वासनाया उत्पत्त्यसम्भवाद् अन्वयव्यतिरेकावेवार्थस्तद्भावं प्रतिष्ठापयतः । क्षणभङ्गपक्षे संस्काराधारस्थिरानभ्युपगमाद्वस्तुतो वासनानामनवक्लृप्तेश्च । ये पुनर्माध्यमिका अखिलस्यास्य जगतो निस्तत्त्वत्व शून्यत्वं तत्त्वमास्थिषत, तेषामभ्युपेतहानि-प्रसंगो दुर्व्वार एव । तथाहि निस्तत्त्वगोचर-प्रमाणस्य निस्तत्त्वत्वमुपेयते नवा ? आद्ये सतत्त्वप्रमाणाभावाज्जगतो निस्तत्त्वत्वासिद्धिः । अन्त्ये च प्रमाणेषु निस्तत्त्वत्वव्यावृत्तौ सर्व्वस्य निस्तत्त्वमेव तत्त्वमित्यभ्युपगमानुपपत्तिः । अपिच प्रमाणानि स्वगोचरे प्रवर्त्तमानानि नातत्त्वमिदमित्येव प्रवर्त्तन्ते, अतात्त्विकत्वं च तद्गोचरस्यान्यतो बाधकादवगन्तव्यं न स्वतः, येन प्रवृत्तमात्राणि निस्तत्त्वतामवधारयेयुः । बाधकं चातात्त्विकत्वमेषां तद्गोचर-विपरीत-तत्त्वोपदर्शनेन दर्शयेत् । यथा शुक्तिकेयं न रजतं, मरीचयो न तोयं, एकश्चन्द्रो न चन्द्रद्वयमित्यादि । तद्वदिहापि समस्त-प्रमाण-गोचर विपरीत-तत्त्वान्तरव्यवस्थापनेनातात्त्विकत्वमेषां बाधकेन प्रमाणानामादर्शनीयं न पुनरव्यवस्थाप्य तत्त्वान्तरं प्रमाणानि बाधितुं शक्यम् । विचारासहत्वं वस्तूनां व्यवस्थापयद्बाधकमतात्त्विकत्वं प्रमाणानां दर्शयतीति चेत् किं चेदं विचारासहत्व वस्तु ? यत्तत्त्वमभिमतं । किं तद् वस्तु, सदादीनामन्यतमत् केवलं विचारं न सहते ? अथवा विचारासहत्वेन निस्तत्त्वमेव । तत्राद्यं व्याहतं, परमार्थसतो विचारासहत्वायोगात् । द्वितीयेऽपि अव्यवस्थाप्य तत्त्वान्तरं कथं नाम निस्तत्त्वत्वं व्यवस्थापयितुमलम् । नहि शुक्तिकात्वमव्यवस्थाप्य रूप्यस्य निस्तत्त्वताऽध्यवसातुं

भङ्ग्या । नच निस्तत्त्वमेव तत्त्वं भावानां, तथा सति, तत्त्वाभावः स्यात् कोऽपि विचारं न सहत इत्युक्तं भवद्भिः । अविचारोपितं निषेधनीयं भवत्पक्षे स्थिराधिष्ठानाभावात् कुत्र कस्यारोपः सम्भवी ? यतो निस्तत्त्वत्वेन तन्निषेधः सिद्ध्येदित्यलमतिपल्लवितेन ।

दिगम्बराः खलु जीवाजीवास्रवसंवरनिर्ज्जरबन्धमोक्षाख्यान् सप्त पदार्थानातिष्ठन्ते । तेषां चापरं प्रपञ्चमाहुः, पञ्चास्तिकाया नाम, जीवास्तिकायः, पुद्गलास्तिकायः, धर्मास्तिकायः, अधर्मास्तिकायः आकाशास्तिकायश्चेति । जीवास्तिकायस्त्रिधा, बद्धो मुक्तो नित्यसिद्धश्चेति । पुद्गलास्तिकायः षोढा, पृथिव्यादीनि चत्वारि भूतानि स्थावरं जङ्गमं चेति । धर्मास्तिकायः प्रवृत्त्यनुमेयः, अधर्मास्तिकायः स्थित्यनुमेयः । आकाशास्तिकायो द्विधा, लोकाकाशोऽलोकाकाशश्चेति । तत्रोपर्युपरि स्थितानां लोकानामन्तर्वर्ती लोकाकाशः, तेषामुपरि मोक्षस्थानमलोकाकाशः । तत्र हि न लोकाः सन्ति, तदेवं जीवाजीवपदार्थौ पञ्चधा प्रपञ्चितौ । आस्रवसंवरनिर्ज्जरास्त्रयः पदार्थाः प्रवृत्तिलक्षणाः प्रपञ्च्यन्ते, द्विधा प्रवृत्तिः, सम्यक् मिथ्या च । तत्र मिथ्याप्रवृत्तिरास्रवः । सम्यक् प्रवृत्ती तु संवरनिर्जरौ, आस्रवति पुरुषं विषयेष्विति इन्द्रियप्रवृत्तिरास्रवः । सेयं मिथ्याप्रवृत्तिरनर्थहेतुत्वात् । शमदमादिप्रवृत्तिः संवरः । "आस्रवस्रोतसां द्वारं संवृणोतीति संवर" इत्युक्तत्वात् । निर्जरस्त्वनादिकालप्रवृत्तिकषायकलुष्यपुण्यापुण्यप्रहाणहेतुस्तप्तशिलारोहणादिः । स हि निःशेषं पुण्यापुण्ये सुखदुःखोपभोगेन जरयति नाशयति इति निर्जरः । बन्धोऽष्टविधं कर्म्म । तत्र घातिकर्म्म चतुर्विधं, तद्यथा-ज्ञानावरणीयं, दर्शनावरणीयं, मोहनीयमन्तरायं चेति । तथा चत्वार्य्यघातिकर्म्माणि तद्यथा, वेदनीयं, नामिकं, गोत्रिकम् आयुष्कं चेति । तत्र सम्यक्ज्ञानं न मोक्षसाधनं नहि ज्ञानाद्वस्तुसिद्धिरतिप्रसङ्गादिति विपर्य्ययो, ज्ञानावरणीयं कर्म्म । आर्हतदर्शनाभ्यासान्न मोक्ष इति ज्ञानं दर्शनावरणीयं कर्म्म । बहुषु विप्रतिषिद्धेषु तीर्थकरैरुपाकृतेषु मोक्षमार्गेषु विशेषानवधारणं मोहनीयं कर्म्म । मोक्षमार्गप्रवृत्तानां तद्विघ्नकरं विज्ञानं अन्तरायं कर्म्म । तान्येतानि श्रेयोहन्तृत्वाद् घातिकर्म्माण्युच्यन्ते । अघातिकर्म्माणि पुनः—शुक्लपुद्गलविपाकहेतुर्वेदनीयं कर्म्म, तद्धि बन्धोऽपि न निःश्रेयसपरिपन्थि, तत्त्वज्ञानाविघातित्वात्, शुक्लपुद्गलारम्भकवेदनीयकर्म्मानुगुणं कर्म्म नामिकं, तच्च शुक्लपुद्गलस्याद्यावस्थां कललबुद्बुदादिमारभते । गोत्रिकमव्याकृतं, ततोऽप्याद्यं शक्तिरूपेणावस्थितम् । आयुः कायति कथयत्युत्-

यादनन्तुरेण आयुष्कं कर्म । तान्येतानि शुक्लपुद्गलाश्रयत्वादघातीनीत्युच्यन्ते । तदेतत् कर्माष्टकं पुरुषं बध्नाति इति बन्धसमाख्यया उक्तं भवति । विगलितसमस्तक्लेशवासनस्य सुखैकतानस्यात्मन उपरिदेशावस्थानं मोक्ष इत्येके । अन्ये तूर्ध्वगमनशीलो हि जीवः, धर्माधर्मास्तिकायेन बद्धस्तद्विमोचनाद् यदूर्ध्वं गच्छत्येव स मोक्ष इति ।

तत्र सर्वत्र चेमं सप्तभङ्गीनयं नाम न्यायमवतारयन्ति, स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादवक्तव्यः, स्यादस्ति चावक्तव्यश्च, स्यान्नास्ति चावक्तव्यश्च, स्यादस्ति च नास्ति चावक्तव्यश्चेति । स्यात् शब्दः खल्वयं निपातस्तिङन्तप्रतिरूपकोऽनेकान्तद्योतकः । यथाहुः, वाक्येष्वनेकान्तद्योती गम्यं प्रति विशेषणं । स्यान्निपातोऽर्थयोगित्वात्तिङन्तप्रतिरूपक इति । यदि पुनरयं स्यात् शब्दोऽनेकान्तद्योतको न स्यात्, तदा स्यादस्तीति वाक्ये 'स्यात्' पदमनर्थकं भवेत् । तदिदमुक्तमर्थयोगित्वादिति । अनेकान्तद्योतकत्वे तु स्यादस्ति कथंचिदस्तीत्यर्थलाभात् स्यात्पदात् कथंचिदर्थोऽस्तीत्यनेनानुक्तः प्रतीयते इति नानर्थक्यं । तथा च, "स्याद्वादः सर्वथैकान्तत्यागात् किंवृत्तचिद्विधिः । सप्तभङ्गनयापेक्षो हेयादेयविशेषकृत् ।" किं वृत्ते प्रत्यये खल्वयं चिन्निपातविधिना सर्वथैकान्तत्यागात् सप्तसु एकान्तेषु यो भङ्गस्तत्र यो नयस्तदपेक्षः सन् हेयोपादेयभेदाय स्याद्वादः कल्पते । तथाहि, यदि वस्तु अस्त्येवैकान्ततः, ततः सर्वत्र सर्वदा सर्वथा सर्वात्मनाऽस्त्येवेति न तदीप्साजिहासाभ्यां क्वचित् कदाचित् कथंचित् कश्चित् प्रवर्तेत निवर्तेत वा, प्राप्तप्रापणीयत्वात्, हेयत्वानुपपत्तेश्च, अनेकान्तपक्षे तु क्वचित् कदाचित् कस्यचित् कथंचित् सत्त्वे हानोपादाने भेदावतां कल्पेते । लोके खलु सत् असत् सदसत्, अनिर्वचनीयमिति विषयभेदाच्चत्वारो वादाः, ते चैकान्तसमाश्रयात् सप्त सम्पद्यन्ते, यथा— सदेकान्तवादः, असदेकान्तवादः सदसदेकान्तवादः, अनिर्वचनीयैकान्तवादः, सदनिर्वाच्यत्वैकान्तवादः, असदनिर्वाच्यत्वैकान्तवादः, सदसदनिर्वाच्यत्वैकान्तवादश्चेति । तेषु यस्य कस्यचिद्वादस्य पर्यनुयोगे, स्याद्वादिन एव सुवचोत्तरत्वाद्विजयः, परेषां पुनस्तत् सविधे विस्मय विषाद मौनानामन्यतमदावश्यकमिति संपूर्णार्थविनिश्चायितया स्याद्वाद एवादर्तव्य इति वदति । तन्न विचारसहम् । नह्येकस्मिन् परमार्थसति वस्तुनि परमार्थसतां सदसत्त्वादिधर्माणां युगपत् समावेशः सम्भवी । न च समुच्चयासम्भवे विकल्पः किं न स्यादिति भणितव्यम्, क्रिया

हि विकल्प्यते न वस्तु, अदर्शनात्। नापि हेरम्बनरसिंहादिवदवच्छेदकभेदेनैकदा विरुद्धधर्मसमावेश इति कल्पनीयम्। एकस्य वस्तुनः कालभेदेन देशभेदेन च नानाधर्मवत्तायामविरोधात्। अन्यथा भवत्पक्षेऽप्येषोऽनेकान्तवादो लब्धप्रसरो निर्द्धारणानिर्द्धारयितृनिर्द्धारणफलेषु सत्त्वासत्त्वादिसंशयमेवापादयेत्। एवमखिलेषु शास्त्रार्थविषयेषु सत्त्वादिदुरवधारणतायां प्रेक्षावतामप्रवृत्तिप्रसङ्गात्। अपि च तन्मते शरीरपरिमाणत्वं जीवस्योक्तं, ततश्च हस्तिशरीरं त्यक्त्वा पुत्तिकाशरीरं प्राप्नुवन् सम्मीयेत, पुत्तिकाशरीरं परित्यज्य हस्तिकायमाविशन् वा कार्त्स्न्येन न व्याप्नुयात्। न च विशरारवो जीवावयवाः, तेषां च प्रदीपवदवयवसङ्कोचविकाशाभ्यामखिलमुपपद्यत इति वाच्यं, तथा सति सावयवत्वेन जीवस्यानित्यत्वापत्तिः ततश्च कृतहानाकृताभ्युपगमप्रसङ्गात्। अपि च जीवावयवानामेकस्मिन् देशे प्रतिघातो भवति न वा? आद्ये नानन्तावयवानामेकस्मिन् समावेशः सम्भवी, अप्रतिघाते च परिमाणानुपपत्तिः। किंच जीवावयवाः प्रत्येकं वा चेतयन्ते? तत्समूहो वा चेतयते? इति वक्तव्यम्। प्रत्यवयवं चेतनत्वपक्षे एकस्मिन् देहे बहूनां चेतनानां युगपद्वृत्तौ तेषामेकवाक्यत्वानियमात् कदाचित् भिन्नाभिप्रायतावशेन विरुद्धदिक्क्रियतया शरीरमेवोन्मथ्येत, समूहचैतन्ये तु हस्तिशरीरं परित्यज्य पुत्तिकादेहमाविशतो बहूनां समूहिनां परित्यागात् समूहस्याभावादचेतनत्वप्रसङ्गात्। प्रतिशरीरं च परिमाणभेदेनात्मभेदे बन्धमोक्षादिव्यवस्थानुपपत्तेः। स्रोतःसंतानन्यायेनात्मसंतानाभ्युपगमेऽपि संतानस्य वस्तुत्वावस्तुत्वयोरुभयथा दोषानतिवृत्तेरिति दिक्।

एवं च शरीरेन्द्रियमनोबुद्धिभिन्नस्याखण्डचेतनस्यात्मनः स्थितिरुपपादिता। इदानीं तस्य संसारापवर्गौ संक्षिप्य प्रदर्शनीयौ। तदर्थमादितः क्रमप्राप्ताः सृष्टिवादा विवेच्यन्ते। तत्र त्रयः खलु वादा लोकविदिताः सन्ति। आरम्भवादः परिणामवादो विवर्त्तवादश्चेति। जैमिनीयानामेकेषां जगन्नित्यत्वाभ्युपगमस्य प्रलयावेदक-श्रुतिस्मृत्यादि-विरुद्धत्वेन हेयत्वात् सृष्टौ परिकल्प्यमानाया मारम्भवाद एव युक्त्युपेततयोपगन्तव्यो भवति तदितरयोः परिणामवादविवर्त्तवादयोरुपपत्तिसहत्वासम्भवात्। तथाहि कापिलाः पातञ्जलाश्च परिणामवादमातिष्ठन्ते, सत्त्वरजस्तमांसि किल साम्यावस्थोपलक्षितानि प्रकृतिरिति प्रधानमिति चाख्यायन्ते। तानि कालकर्म्मादिक्षोभितानि वैषम्यमुपागतान्यादौ तावत् सत्त्वप्रवृद्ध्या महत्संज्ञामनुभवन्ति, महतश्च परिणामभूतेऽहङ्कारतत्कार्य्ये निखिलभोग्यभोगायतनभोगकरणेष्वविवेकेन दुःखमा-

साम्य चेतनपुरुषस्यौपाधिको भोगो भवति, तद्विवेकग्रहाच्च महदाद्यनारम्भात् प्रधाननिवृत्त्या आत्यन्तिकदुःख-निवृत्तिर्मोक्षश्च भवति इति ते मन्यन्ते । तान् प्रति वक्तव्यं, जगत् कर्त्तुः परिणामित्वे कदाचित् जाड्यपरिणामेन जगदान्ध्यप्रसंगः, चेतनस्यापरिणामिनः स्वीकारेऽपि विषयावभासस्य बुद्ध्युपधाननिबन्धनताया उपगमात् बुद्धेश्च महदभिधानाया जाड्याधिक्ये जाड्यस्यौचित्याऽभ्युपगन्तुमुचितत्वात् । अचेतनायाः प्रकृतेः स्वातन्त्र्याभ्युपगमायोगात्, अभ्युपगमेऽपि कर्म्मणामप्यचेतनतया तयोर्मिथ उपकार्योपकारक-भावानभिज्ञतया मुक्तान् प्रत्यपि प्रकृतिप्रवृत्तिप्रसंगस्य वारयितुमशक्यत्वात् त्रिगुणात्मिकाया अपि बुद्धेः प्रलये प्रकृतौ लयाङ्गीकारात् निर्व्विशेषचिदात्मनां सर्गादौ भोगवैचित्र्यानुपपत्तेः । इतरेतरोपमर्द्दं विना प्राकृतगुणानां क्षोभासम्भवेन महदाद्यारम्भानुपपत्तेः । कालस्य कर्म्मणां वा प्रकृतिगुणानतिरेकेण तैरुपमर्द्दानौचित्यात् । परस्परोपमर्द्दश्चाश्रीयमाणे नित्यमेवारम्भापत्तौ प्रलयानुपपत्तेः । किञ्च कर्म्मणामपि गुणकार्य्यतया गुणवृत्तानतिक्रमौचित्येन प्रतिक्षणमन्यथान्यथात्वे भोगादिनियामकत्वानुपपत्तेः । अपरिणामित्वे च चलं हि गुणवृत्तं, सर्व्वं हि जगदिदं प्रकृतिपरिणामरूपमित्याद्यभ्युपगमविरोधात् । किञ्चान्वयिनि विद्यमाने पूर्व्वधर्मनिवृत्तौ धर्मान्तरोदयः परिणाम इति परिणामवादिनां परिणामलक्षणं, तत्रान्वय्यनुसन्धानस्य बुद्धिसापेक्षतया अननुसन्धानस्थले तल्लक्षणासम्भवाद्गतिरेव । अपि चाविवेकाद्बन्धमभ्युपगच्छतामवश्यं प्रलये तदभावादविवेकवासनाया बन्धकत्वे तात्पर्य्यपर्य्यवसानस्यावश्यकतया मुक्तानामपि बन्धापत्तेः । अगृहीतासंसर्गकमुभयज्ञानं ह्यविवेकः मुक्तात्मनां बुद्धिपुरुषयोरुभयगोचराया वासनायास्तद्बुद्धिधारायामवश्याभ्युपेयतयाऽविवेकवासनावश्यम्भावात्, तदसंसर्गाग्रहांशोऽपि वासनायामतिशयमाधातुमलं, ज्ञानस्यैव वासनोत्पादकत्वात् । सेश्वरसांख्यमतेऽपि ईश्वराधिष्ठितप्राणिकर्म्मपरतन्त्रप्रकृतिप्रवृत्तेः स्वापमूर्च्छाप्रलयादौ प्राणिकर्म्मोपरमे उपरमप्रसंगात् प्रकृतेः कौटस्थ्यप्रसंगः । अपि च परमेश्वरोपाधिभूतनिर्म्मलसत्त्वविशेषस्य सकलजीवोपाध्यव्यापकत्वात्तदधीनज्ञानवत ईश्वरस्य सर्व्वान्तर्य्यामित्व-सर्व्वज्ञत्वयोरनुपपत्तिः । किं च पारमैश्वर्य्यनिर्वाहाय सत्त्वोपादानावश्यकत्वे परमेश्वरस्य तेन सहाभिमानसम्बन्ध आपद्यते, नहीदं मे स्वं एतस्याहं स्वामीत्यादि स्वस्वामिभावानुभवोऽन्तरेणाभिमानमुपपद्यते, न च स्वजन्यसुखा-

दिभोक्तृत्वादृते स्वामित्वं शक्यवचनं, नच प्रत्यगविशेषं परित्यज्यान्यो भोगपदार्थो निर्व्वक्तुं शक्यः । नच सत्यविशेषे विशेषग्रहणं नाम । नच ग्रहणाग्रहणयोरभिमानान्निष्कृतिरिति, नचांशतुल्लेखेन सत्त्वेन प्रत्यासादित-प्रत्यगविशेषः सोढुमर्हः । ततश्च तदपनयकामनावश्यम्भावाद् भगवतः पूर्णत्व-श्रुतिव्याकोप इति संक्षेपः ।

एवं स्मर्य्यमाणारोपस्थले स्मृत्युपनीत रजतादेर्भानमात्रेणोपपत्तौ तत्रा-निर्व्वचनीय वस्तूत्पत्तेरनावश्यकतया तद्दृष्टान्तेन सतो ब्रह्मणः सकाशादत्यन्त-विलक्षणस्य जगतो विवर्त्तभावेनोत्पत्ति-कल्पनाऽसम्भवात् । यत्तु स्वाप्नरथादि-सृष्टिरपि दृष्टान्तत्वेनोपादीयते, अथरथान् रथयोगान् पथः सृजते इति श्रुत्यव-ष्टम्भेनाप्ययमर्थः समर्थ्यते च इत्युच्यते, तदप्यसत् । तत्रापि निद्रादोष-वशेना-दृष्टसमुद्बोधित-संस्कारसचिवेनैव मनसाऽपि विचित्रविषयभानसम्भवात् दोषवि-शेषाधीनोपनीतभानेऽपि लौकिक सन्निकर्षजन्यज्ञान इव साक्षात् कारित्वव्यञ्ज-कविषयितास्वीकारात्, जाग्रत् सृष्टिसंस्कारोद्बोधादिवशेन च तदानीं सृष्टत्वा-द्यभिमानसम्भवात् श्रुतेश्च स्वप्नदृष्टानुवादकत्वेन प्रामाण्यनिर्व्वाहात् । नच स्वप्रकाशे वस्तुनि मायावरणसम्भवः, नचाद्वैतवादे द्रष्टृदृश्यादिकल्पनाऽऽञ्जस्ये-नोपपद्यते । नचोपलब्धसर्व्वविधविशेषानुपेक्ष्यानुपलब्धचरनिर्व्विशेषात्मपरत्वमा-गममात्रबलेनास्य प्रेक्षापूर्व्वकारिगणस्य सम्पादयितुमलम् । नत्वागमाः सहस्रमपि स्वानुभूतिममीषामन्यथयितुमीशते । नचैकान्ततस्तेषां निर्व्विशेषैकप्रतिपादकत्वं वक्तुमर्हं । बहुशः सविशेषप्रतिपादनस्यानुभवसिद्धत्वात् । अपिचाविद्याकार्य्य-भूतायाः श्रुतेर्विद्योत्पत्तिप्रत्याशाया वाणीरबीजाद् यवाङ्कुरोत्पत्तिप्रत्याशाव-दनुन्मत्तमात्र प्रहेयत्वात्, बाधकमन्तरेण च सर्व्वस्य जगतोऽनुभवसिद्धस्य किंचि-त् साधर्म्म्यमात्रेण मिथ्यात्वाध्यवसायानुपपत्तेरन्यथा परमार्थसद्ब्रह्मणा आगमा-नता लक्षणसाधर्म्म्यस्यापि सम्भवेन पारमार्थिकतैव किं नस्याद्बाधस्य ब्रह्मणि भेदस्येव वरं तुच्छताया वक्तुमुचितत्वादिति दिक् ।

तदिह, परमार्थभूमौ सकलनास्तिकास्तिक—समयातिपातिन्यामारम्भ-वाद एव परिशिष्यत इति तत्रयमधिकृत्यैवात्मनः संसारापवर्गौ प्रदर्श-नीयौ । तत्र चतुर्भिरेव प्रमाणैरखिलार्थ—परिच्छेद—सम्भवादतिरिक्त—प्रमाणानां च तेष्वेवान्तर्भाव उपेयते । अनुमानद्वैविध्यात् परार्थानुमानस्य च शास्त्रविषय-त्वात् प्रतिपादन-व्यापकत्वाद्व्याप्यैकसाध्यतां तस्य मन्वानो लोकः शास्त्रस्यास्य

न्यायशास्त्रसंज्ञां प्रयुक्तवान् । तेनैव न्यायबलेनामी चार्थाः स्थूलतः प्रतिपत्तव्या भवितुमर्हन्ति । जीवात्मानस्तावज्जन्ममरणादिव्यवस्थानुरोधात् प्रतिशरीरं भिद्यन्ते, ते प्रत्येकं नित्या विभवश्च । तेषां मध्यमपरिमाणत्वे सावयवत्वे चानित्यत्वमित्युक्तप्रायम् । अणुत्वे च देहव्यापिसुखाद्यनुसंधानानुपपत्तिः । चैतन्यं चात्मनामेव धर्मः, तच्चात्ममनोयोगाधीनं । स च संयोगः शरीरावच्छिन्न एव तद्धेतुरिति बहिः शरीरे न सुखाद्यनुसन्धानं । प्रत्यात्मं चैकैकं मन स्वीकार्य्यमितरथा सुखाद्युपलब्धिर्नस्यात् । विभुनाऽऽत्मना सहेन्द्रियाणां बहूनां च युगपत् सम्बन्धसम्भवाद्व्यासंगानुपपत्तेश्च । अतएव मनो न महत्, परन्तु तस्य नित्यत्वाय परमाणुपरिमाणत्वमिष्यते । आत्ममनोयोगवदिन्द्रियमनोयोगस्यापि तत्तदिन्द्रियाधीन—प्रत्यक्ष—निमित्तत्वोपगमादनेकेन्द्रियैश्चाणुमनसो युगपत् संयोगासम्भवाद् व्यासङ्ग उपपद्यत एव । योगवशेन मनोवह-नाडीविज्ञानसम्भवात् शरीराद्बहिर्मनःप्रचारप्रणाल्या पर-काय—प्रवेश—सम्भवात्, युगपत् मुक्तात्ममनसामुपादानसम्भवाच्च कायव्यूहोपपत्तेश्च । अनादिना मिथ्याज्ञानाहितवासना-प्रचयेन देहादिष्वात्मत्वप्रकारक एवाभिनिवेशो दुरत्ययो—वर्त्तते । तद्विरोधिना तत्त्वज्ञानबलेनात्मनो देहाद्यभिमाननिवृत्तौ तन्निमित्तक-दुःखत्रयस्यात्यन्त-प्रविलय इत्यपवर्गः । तथाचोक्तं महर्षिणा—

" दुःख जन्म प्रवृत्ति-दोष-मिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्ग "

इति । कार्य्यकारणभावापन्नानां चैतेषां कारणोच्छेदे पूर्व्वकार्य्यव्यत्यनुदयाद्वुदितस्य च स्वविनाशकसन्निधानादवश्यमेव च विनाशादत्यन्तं प्रवाहोच्छेद सम्भव इति सूत्र-निगर्व्वः । एवं च वैदिकंमन्यानां जैमिनीयानामपि कर्म्ममार्गो निरर्गलो भवति, गौतमोक्त-तत्त्वज्ञानस्य तदप्रतिकूलत्वात् । सांख्य-वेदान्तसम्मत-तत्त्वदर्शनस्य तु तदनुकूलत्वं न कथंचिदपि संगच्छते इति स्वर्गापवर्गयोरुभयोरपि भ्रान्त-पुरुषार्थत्वमिद्धिराज्जस्येनोपपन्नतरेत्यखिलमवकलम् । इतिशम् ।

स्वर्गापवर्गयोरस्मि भोक्ता तुल्यवदप्यहम् ।
नाथ ! दाता त्वमेवातः क्षयाम्यद्य कुतोऽपरम् ॥ १ ॥

## परमार्थोपदेश-पद्यावली ।

वन्दे गुरूणां पदपङ्कजानि, श्रीवैष्णवानां चरणाम्बुजानि ।
गौरस्य कृष्णस्य रघूद्वहस्य, वन्दे सदा श्रीचरणाम्बुजानि ॥ १ ॥
गुरौ प्रसन्ने भगवान् प्रसन्नो हरौ प्रसन्ने त्रिजगत् प्रसन्नम् ।
तस्मात् सदा श्रीगुरुकृष्णपाद प्रसत्तिलाभाय नमामि तं तम् ॥ २ ॥
वन्देऽहं परया भक्त्या, रामं कृष्णं जगद्गुरुम् ।
तत्तद्भक्तगणान् सर्व्वान्, वन्दे पतितपावनान् ॥ ३ ॥
प्रणमामि सदा भक्त्या, विधि-विष्णु-महेश्वरान् ।
सावित्रीं कमलां दुर्गां, तत्तद्भक्तगणानपि ॥ ४ ॥
वेदं वन्दे विधिं वन्दे, वन्दे धर्म्मञ्च धार्म्मिकान् ।
ब्राह्मणान् वैष्णवान् वन्दे, सदाचारयुतानहम् ॥ ५ ॥
श्रीहरिं हरिभक्तांश्च, हरिभक्तिं महोदयाम् ।
चतुर्व्वर्गं तथा ज्ञानं, योगं कर्म्म नमाम्यहम् ॥ ६ ॥
श्रीमद्भागवतं वन्दे, श्रीमद्रामायणं तथा ।
श्रीमहाभारतं वन्दे, श्रुति-स्मृति-समन्वितम् ॥ ७ ॥
ऋषीन् सर्व्वानहं वन्दे, सनकं श्रीसनातनम् ।
तथा सनत्कुमारञ्च, सनन्दं प्रणमाम्यहम् ॥ ८ ॥
नरं नारायणं वन्दे, नारदं बादरायणम् ।
शौनकादीन्मुनीन् वन्दे, श्रीशुकं लोमहर्षणम् ॥ ९ ॥
सर्व्वं विष्णुमयं ह्येतद् भुवनं सचराचरम् ।
वेदवाक्यमिदं ज्ञात्वा, तत् सर्व्वं प्रणमाम्यहम् ॥ १० ॥
विद्वान् वदति निश्चित्य, सर्व्वं विष्णुमयं जगत् ।
विद्वद्वाक्यं दृढं ज्ञात्वा, तत् सर्व्वं प्रणमाम्यहम् ॥ ११ ॥
सर्व्वे मां छलनां त्यक्त्वा, कृपां कुरुत सज्जनाः ।
भवन्तु सुप्रसन्ना मे सर्व्वेषां किङ्करोऽस्म्यहम् ॥ १२ ॥

( क्रमशः )

## কৃষ্ণকুমারীকথা।

'কুচবিহার'স্য-কালীকান্তকস্য কনিষ্ঠকন্যা কৃষ্ণকুমারী কথঞ্চিৎ কিশোরকালং ক্রান্তবতী। কালঃ কৃষ্ণকুমার্য্যাঃ কান্তিকোরকং কুমুদিনীকান্ত-কলাবৎ কুসুমিতমকরোৎ। কিন্তু কুতশ্চাৎ কালীকান্তঃ কৌলীন্য—কুপ্রথাতঃ 'কলসকাঠি'স্যস্য কুলীন—কায়স্থ—কামিনীকুমারকস্য কনিষ্ঠকুমার—কেশবস্য-করে কন্যাদানং কৃতবান্।

কালে কামিনীকুমারস্য কষ্টার্জ্জিত—কাঞ্চনকুলং করায়ত্তং কৃত্বা কেশবঃ 'কলসকাঠি'ত্যাগং কৃতবান্। কলি—কলুষ—কারিণ্যাং কলিকাতায়াং কৃতযানঃ কেশবঃ কাঞ্চন—কারণেন কস্যাশ্চিৎ কুলটায়াঃ কুটিরাশ্রয়ং কুরুতে স্ম। কলহা-সিনী কুলত্যাগিনী কমলিন্যপি কাঞ্চনাকাঙ্ক্ষয়া কেশবং কুটুম্বং কল্পিতবতী। 'কেল্নার'-কোম্পানী-কৃত-কবোষ্ণ-কুক্কুট-'ক্যারি-ক্যাট্‌লেট-কালিয়া'দিভিঃ কেশবঃ কুক্ষিপূরণং কৃত্বা কালং কর্ত্তিতবান্।

ক্রমশঃ কুহকিনী কামবিলাসিনী কম্বুকণ্ঠী কমলিনী কেশবং ক্রীতদাস-কল্পং কৃতবতী। কেশবোঽপি কমলিন্যাং কায়প্রাণার্পণং কৃতবান্। কালস্য কৌটি-ল্যাৎ কাঞ্চনাভাবাৎ কঠোর-কশাঘাতবৎ কমলিন্যাঃ কর্কশ-কথা কেশবং কাতরং কৃতবতী। ক্লান্তঃ কেশবঃ কিংকর্ত্তব্যবিমূঢ়ঃ কমপি কপটং আশ্রিত্য কম-লিন্যাঃ কনকময়ং কর্ণ-কুণ্ডলং কণ্ঠহারঞ্চ করে কৃত্বা কৃতাত্মগোপনঃ কাশী-যাত্রাং কৃতবান্।

কালবশাৎ কৃতকারাবাসঃ কেশবঃ কৃতান্ত-কেতন-যানং কুরুতে স্ম। ক্রূর-কর্ম্মণঃ কেশবস্য কলঙ্ককাহিনী কৃষ্ণকুমার্য্যাঃ কর্ণকুহরে প্রবেশমকরোৎ। কমল-কোরকোপম-কোমলকায়া কৃষ্ণকুমারী কথমপি কষ্টসহনমকুর্ব্বাণা কলুষহর-কা-লিন্দী কল্লোলে কায়াত্যাগং কৃতবতী॥ কর্ম্মফলং! কর্ম্মফলং!! কর্ম্মফলম্!!!

---

## পণ্ডিতচতুষ্টয়কথা।

কস্যচিন্নরপতে মাতৃশ্রাদ্ধকালে দেশদেশান্তরাদ্বহবো ব্রাহ্মণপণ্ডিতাঃ তদীয়রাজধানীং সমাগতাঃ। তেষাং কশ্চিন্নৈয়ায়িকঃ কশ্চিজ্জ্যোতিষী কশ্চিৎ স্মার্ত্তঃ কশ্চিদ্বৈয়াকরণশ্চৈকগ্রামনিবাসিন আসন্। তেষাং পণ্ডিত—চতুষ্টয়ানাং

वासार्थमुत्तमं वासभवनं राजा निर्द्दिदेश । तस्मिन् वासभवने घृत-तैल-तण्डुलादि-भक्ष्यद्रव्याणि प्रेरयामास । तेषु द्रव्येषु वृहदाकार एकः पीत-कुष्माण्डक आसीत् । तदाहारनिरतास्ते स्वपाकं भोक्तुमाहारीयवस्तुकरणायोद्युक्तवन्तः । ततो नैयायिकस्तैलाधारं प्रगृह्य स्नातुं नदीं प्रययौ । ज्योतिषी राजभृत्येन सह कुष्माण्डं छित्त्वा निष्ठानं कर्त्तुमारेभे । स्मार्त्तो राजपुरोहितेन सह शास्त्र-व्याख्यां कृतवान् । सर्व्वकनिष्ठो वैयाकरणश्च खनित्रमादाय चुल्लिखननाय महानसं प्रविष्टः । ततो नैयायिको मन्दं मन्दं नदीतीरमासाद्य तत्र समुपविशन् वामहस्ततले दक्षिणहस्ततर्ज्जनीमध्यमाभ्यां मृदुतालं दत्त्वा पुनः पुनरुवाच "पात्राधारं तैलं, किं तैलाधारं पात्रं? यो यदवच्छेदेन यदीययत्सम्बन्धवान् स तदवच्छेदेन तत्सम्बन्धेन तद्वान् इति व्याप्तेः कुण्डादिसंयोगिनो वदरादेः संयोगेन कुण्डादिमत्त्वापत्तिः, अतएव नहि वदरं कुण्डं, किन्तु कुण्डे वदरम् । यदि यो यदवच्छेदेन..... एतद् व्याप्तेः प्रामाण्यं स्वीकरोति तर्हि यस्मिन् कुण्डे वदराणि सन्ति, तेन कुण्डेन सह वदराणां संयोगोऽस्ति । अतः संयोगसम्बन्धेन वदरं कुण्डवद् भवतु; तन्न स्यात् यतः कुण्डादिसंयोगि यद्वदरं तस्मिन् कुण्डादिमत्त्वापत्तिर्नेति, अतएव यस्मात् कुण्डाधारं न वदरं वदराधारन्तु कुण्डं, तस्मात् पात्राधारं न तैलं, तैलाधारन्तु पात्रमिति" । एवं सिद्धान्तलक्षणस्य सिद्धान्तालोचनया वेलामतिक्राम्यन् स स्नानाह्निकं [illegible] तस्थौ । अन्यत्र वैयाकरणश्चुल्लिं खनितुमुपक्रम्य विषम-समस्यामचिन्तयत्—चुल्लिखननं,—खनुङ् विदारणे । खनधातोरर्थो विदारणम् । तत् विदारणं पुनः सम्बन्धध्वंसानुकूल-व्यापारः । तत् सम्बन्धध्वंसव्यापारः किं सर्व्वदेशावच्छेदेन, अथवा यत्किञ्चिद् देशावच्छेदेन भवति ? यदि सर्व्वदेशावच्छेदेन सम्बन्ध-ध्वंसं स्वीकरोमि, तर्हि आपातालं खननेनापि मम चुल्लिखननक्रिया न निष्पद्येत । पुनर्यदि यत्किञ्चिद्देशावच्छेदेन सम्बन्धध्वंसं स्वीकरोमि तदाङ्गुलिपरिमितस्थानखननेनापि चुल्लिखननक्रिया सम्पन्नतां याति । किन्तु तेन पाकक्रिया न निष्पन्ना भवितुमर्हति । बहुश एवमालोच्य वैयाकरण एतत् मनस्यचिन्तयत्—यतः चुल्लिः पाकक्रिया-साधिका । एषा चुल्लिखननक्रिया नैतादृशं वस्तु, यत् क्षीरमोदकादिवत् मधुररस-लोभेनापाततोऽत्र जनानां प्रवृत्तिर्भवति । अपरन्तु श्रमसाध्यत्वेनात्राप्रवृत्तेः सम्भावना समधिका । तस्मादधुनैतद्द्रष्टव्यं केन हेतुना मयैतत् कर्त्तुं समीह्यते । पाककार्य्यं मदिष्टम् । अतः पाककर्म्म-साधक-सम्बन्ध—ध्वंसानुरूप-खननमेव खन-

धातोरर्थः परिगृहीतव्यमिति । एतत् समालोच्य यावत्खननेन इन्धनकार्य्यं सुसम्पन्नं जायते, तावत् खनित्वा चुल्लिं विनिर्म्ममे । एवं विचारपूर्व्वकं चुल्लिं निर्मातुं तस्यापि वेला समधिका जाता ।

अन्यतः—ज्योतिषी राजभृत्येन सह वाक्कलहं कर्त्तुं प्रवृत्तोऽभूत् ।

ज्योतिषी—एतत् कुष्माण्डकमध्ये बहूनि बीजानि विद्यन्ते, तस्मादनेन कुष्माण्डकेन न प्रचुरनिष्ठानं भवति । ततोऽपरकुष्माण्डकमानय ।

राजभृत्यः—अस्मिन् पीत-कुष्माण्डके यद् बहुबीजानि सन्ति, तद्भवता कथं ज्ञायते ?

ज्योतिषी—त्वमज्ञभृत्य इत्वाँ तद्विज्ञाप्य किं फलं लभ्यते मया ? कुष्माण्डके कियत् संख्यकानि बीजानि सन्ति तदपि वक्तुमहं शक्नोमि ।

राजभृत्यः—यदि बीजसंख्या भवता यथायथं निर्द्दिश्यते तदाहमपर-कुष्माण्डकद्वयं दास्यामीति ।

ततो ज्योतिषी वक्ष्यमाण—वचनमवलम्ब्य गणयितुमारेभे ।

"कुष्माण्डे यावती रेखा तावती त्रिगुणीकृता ।
नवभिः पूरयित्वा तां बीजसंख्यां विनिर्द्दिशेत् ॥"

कुष्माण्डकं विदार्य्य राजभृत्योऽपि तद् गणित-संख्यया सह बीजसंख्यां गणयित्वा ज्योतिषिवाक्यस्य याथार्थमुपलब्धवान् । ततः स्वीयप्रतिश्रुत्यापरकुष्माण्डकद्वयमानीय तस्मै ददौ । एतेनैव हेतुना ज्योतिषिणोऽपि समयोऽतिक्रान्तोऽभूत् । तथा राज—पुरोधसा सह स्मार्त्तः "एकादशीदिने चैव कर्त्तव्यं भो जन द्वयम् । निशि जागरणञ्चैव प्रभाते नामकीर्त्तनम् ॥" एतद्वचनं व्याख्यातुं तुमुलतर्कमुपस्थापितवान् । राजपुरोहितेनोक्तवचनस्यैवं व्याख्या कृता—"एकादश्यान्तिथौ दिवसे द्विर्भोजनं कर्त्तव्यम् । नत्वेकवारं । अपिच रात्रौ जागरणं, प्रभाते हरिनामकीर्त्तनञ्च कर्त्तव्यमिति । तच्छ्रुत्वा स स्मार्त्तोऽचिन्तयदहो किमत्याहितमुपस्थितम् ! अयं मूर्खो राजपुरोहितो भूत्वा एतादृशीमेवासङ्गतां व्याख्यां सम्पादितवान् जनसमाजेषु । यस्या मेकादश्या मन्न माश्रित्य सर्व्वाणि पापानि विराजन्ते, अहो तस्मिन् दिने राजपुरोधसा वारद्वयं भोजनविधिः प्रदत्तः । अथवा नैतदाश्चर्य्यं भेकरङ्कपतितस्य हीरकस्यावस्थैतादृश्येवोचिता । ततः स्मार्त्तोऽवादीत् नहि नहि भोजन ! इति सम्बोधनपदम् । नाहारार्थकभोजनशब्दः । अस्य प्रकृतव्याख्या एवम्भवति—'भो ! जन ! हे लोक एकादशीदिने एकादश्यां तिथौ', रात्रौ जाग-

रणं प्रभाते नामकीर्त्तनमेतद्द्वयं कर्त्तव्यम् । उपवासादेरवश्यकर्त्तव्यता पूर्व्ववचनेन निर्द्दिशिता, एतद्वचनेन केवलं निशि जागरणं प्रभाते नामकीर्त्तनम्, एतत् कर्त्तव्यद्वयं व्यवस्थापितम् । अनेनैव विचारेण तस्यापि दिवसो गतप्रायोऽभूत् ।

ततोऽपराह्णे सर्व्वे कथञ्चिदाहारादिकं समाप्य राजसभां प्रति प्रतस्थिरे । राजाऽपि तेषां विद्यां परीक्षितुकामो मुष्टिमध्ये मशकमेकं विधृत्य ज्योतिषिणमुवाच—"कथ्यतां तावदस्मत्-कर-सम्पुटे किमस्ति" ? ज्योतिषी यथाशास्त्रं विगणय्य लग्न-प्रश्नानुसारेणैतदुवाच-"महाराज ! कृष्णवर्णः, चतुष्पदः, शुण्डवान् कश्चिज्जीवो भवत्-करकमले विद्यते" ।

राजोवाच—"किं नाम तस्य जीवस्य" ? ज्योतिषी तत्क्षणादुवाच—"महाराज ! हस्ती, हस्ती" । सर्व्वे उच्चै र्विहसितवन्तः ।

कतिदिनानि यावत् राज-सन्निधाने कस्यचिदभियोगस्य विचार उपस्थित आसीत् । अभियोक्ता देवरः, अभियुक्ता पतिपुत्र-हीना ज्येष्ठभ्रातृवधूः । देवरः स्वाभीष्टसिद्धये अभियोगक्रमेण एतदुक्तवान् "ममाग्रजपत्नी व्यभिचारिणी, तस्मात् शास्त्र-व्यवस्थया पतिसम्पत्तावस्या अधिकारो नास्ति ।" देवरोऽर्थवान् तस्मात् तत्पक्षे बहवो लब्धप्रतिष्ठा व्यवहाराजीवा नियुक्ताः । दरिद्र-विधवायाः पक्षे एकोऽपि व्यवहाराजीवो नासीत् । देवरपक्षीय-व्यवहाराजीवानां वाक्चातुर्य्येण राजा यथार्थं विवरणमबुध्यमानोऽस्य पण्डित-साहाय्येन विचारयितुं कृतयत्नोऽभूत् । अस्याभियोगस्यामूलवृत्तान्तं पण्डित-चतुष्टयं विज्ञापयितुं राजा व्यवहाराजीवानादिदेश । ततः प्रधान-व्यवहाराजीवः स्वीयपदपरिचयं निवेद्याभियोगवृत्तान्तञ्च ज्ञापयामास । व्यवहाराजीव-वक्तव्ये समाप्तिं गते स्मार्त्त उवाच—"भो राजन् ! व्यवहार-शास्त्रं चतुष्पदान्वितम् । अयमब्रवीदयं व्यवहाराजीवः, किन्त्वस्य चरणे द्वे । ततो मया न बुध्यते अयं कीदृशो व्यवहाराजीवः ।

वैयाकरणेनापि, नानार्थे वि, सन्देहार्थे, अवोपसर्गात्, परं हरणार्थे 'हृ' धातोर्घञ्प्रत्ययेन जातस्य व्यवहार-शब्दस्य व्याकरण-शाब्दबोध रीत्या स्मार्त्तोक्तेर्याथार्थ्यं स्वीकृतवान् ।

ततो नैयायिकेनोक्तं—"भवन्तो यां व्यभिचारिणीमवदन्, तस्यां कीदृशो व्यभिचारोऽस्ति ? तत् प्रमाणीक्रियताम् । व्यभिचारो द्विविधः ; एकं हेतुनिष्ठ-साध्याभाववद्वृत्तित्वं, द्वितीयं साध्यतावच्छेदके हेतुमन्निष्ठाभावप्रतियोगिताव-

च्छेदकत्वम् । अधुना ब्रूहि कः साध्यः, कस्य साध्यस्य च व्यभिचारित्वमस्यां विद्यते ? यद्यनयोरेकतरमवधार्य्य व्यभिचारित्वरक्षायां चेष्टते तर्हि तर्केणाहं तन्निरस्यामीति । किंनाम तर्कशास्त्रं तज्जानासि किं ? अत्र तर्क एव व्यभिचारित्व-शङ्कानिवर्त्तकः । यथा धूमे यदि वह्निव्यभिचारित्वमाशङ्कते तर्हि 'धूमो यदि वह्न्यसमवहिताजन्यत्वे सति वह्निसमवहितजन्यो न स्यात्तदोत्पन्नो न स्यात्" । इति तर्केणाशङ्का-निवृत्तिर्भवति । अनेन कारणेन—व्यभिचारित्व-शङ्का यदि भव-द्भिरुपस्थापिता भवेत् तदाहमेव तर्कोद्भावनेन तन्निराकरोमि ।

व्यवहाराजीवो ब्रूते स्म—"महाशय ! नैतत् तद्व्यभिचारित्वं ; इयं रमणी परपुरुषगामिनी; अतो विषयस्यानधिकारिणीति" । तच्छ्रुत्वा नैयायिकोऽवदत्-अहो ! मया बुध्यते; भवानस्यां परपुरुष गामित्वरूपं व्यभिचारमारोपयति । तर्हि श्रूयतां मयाप्युत्तम-हेतु-प्रयोगेनैतन्निरस्यते ।

"नेयं व्यभिचारिणी, मुण्डित-मस्तकवत्त्वात् । या या व्यभिचारिणी, सा न मुण्डित-मस्तका" इति सिद्धान्तवादनिपुणस्य नैयायिकस्यैतद्वाक्येनैव विचार-निष्पत्तिरभवत् । राजा विधवायै सम्पत्तिं दत्त्वा देवरं यथोपयुक्तमदण्डयत् । ततो राज-दत्त-विभवैस्ते पण्डिताः सुखेन कालमतिवाहयन्ति स्म । इति शम् ।

---

## राज-प्रशस्ति-षट्कम्—

दानव-घातन-शूल-युता, शङ्कर-सङ्गत-हैमवती ।
शोभन-धीयुत-मेरिभृतं, रक्षतु पञ्चमजर्ज्जनृपम् ॥ १ ॥
शोभितपुष्कर-युग्मकरा, श्रीरतिवैभवदानरता ।
दीन-जन-क्लम-नाशकरं, रक्षतु पञ्चमजर्ज्जनृपम् ॥ २ ॥
श्वेतसरोरुहबद्धपदा, गीः किल भाषितवेदवती ।
ज्ञान-विभूषितचित्तधरं, रक्षतु पञ्चमजर्ज्जनृपम् ॥ ३ ॥
विघ्नविनाशन-सिद्धियुतो, मङ्गलदायकदन्तिमुखः ।
दस्यु-निपीड़ित-भीतिहरं, रक्षतु पञ्चमजर्ज्जनृपम् ॥ ४ ॥
शत्रुविघातकशक्तिसुत स्तारकमारणचापकरः ।
सज्जनरक्षकदुष्टदमं, रक्षतु पञ्चमजर्ज्जनृपम् ॥ ५ ॥
दुर्गतमानवशान्तिददः, दुर्ज्जनशात्रवकामहरः ।
भारत-पालन-शुद्धमतिं रक्षतु-पञ्चमजर्ज्जनृपम् ॥ ६ ॥

---

## प्रभातवर्णनम् ।



(भाषान्तरितम्)

कूजन्ति पक्षिणः सर्व्वे प्रभाता रजनी शुभा ।
सर्व्वे विकसिता जाता वने कुसुम-कोरकाः ॥ १ ॥
प्रान्तरं चलिताः सर्व्वे गोपाला धेनुभिः सह ।
नियोजितानि चित्तानि स्वे स्वे पाठे च बालकैः ॥ २ ॥
विकचं मालतीपुष्पं विस्तृतिं सौरभं गतम् ।
सम्मिलन्ति समागत्य मधुलोभान्मधुव्रताः ॥ ३ ॥
जवाकुसुमसङ्काशो नभस्युदेति भास्करः ।
मुदिताः किरणं प्राप्य मर्त्यलोका भवन्ति हि ॥ ४ ॥
कायं करोति सुस्निग्धं सुशीतल-समीरणः ।
रम्या रात्रिश्च नीहारा निपतन्ति प्रतिच्छदम् ॥ ५ ॥
शय्यां त्यक्त्वा समुत्थाय प्रक्षाल्य वदनं ततः ।
वस्त्रं नद्ध्वा स्वके पाठे बाल ! चित्तं निवेशय ॥ ६ ॥

---

## वङ्गानां स्वास्थ्यम् ।

वङ्गीय-स्वास्थ्य-विवरण्यां दृश्यते, ऐषमः वङ्गेषु मृत्युसंख्या जन्मसंख्यामतिक्रम्य वर्त्तते । ईदृक् फलं न सन्तोषावहम् । दारिद्र्य-माधिव्याधिश्च जन्मसंख्याया ह्रासे केचित् कारणमुन्नयन्ति, केचिद्वा-अस्वास्थ्यं व्याधिश्च मृत्युसंख्याया बाहुल्यकारणमिति वदन्ति । "म्यालेरिया"—राक्षसो यथारीति वङ्गेषु राजत्वं करोति । सर्व्वतश्चाधिकसंख्यकान् लोकान् भीषणेन कवलेनाददाति । "लर्ड रोणाल्डशे महोदयः" "म्यालेरिया"—प्रशमनाय यतते । अस्मिन्नपि वर्षे "म्यालेरिया"-निवारणाय एव बहुधानुसन्धानं परीक्षा च कृता । परं सुदीर्घकालस्यानवधानताया निष्क्रियतायाश्च फलेन यादृशी अवस्था सङ्घटिता, एकेन द्वाभ्यां वा वर्षाभ्यां तत्प्रतिकारप्रत्याशा वृथैवेति मन्यामहे । "लर्ड रोणाल्डशेबाहादुरः" "म्यालेरिया"—दमनस्य सूचनामात्रमेव कृतवान् । यदानीं तत्रभवान् वङ्गानां शासनभारमगृह्णात् तदा महाधमस्य हेतेर र्थाभावः प्रबला आसीत् । अपरा च असम्भावनीया दुर्मू-

ल्यता वस्तुमात्रस्य । केषुचित् स्थानेषु वास्तवं दुर्भिक्षमवकष्टञ्चोपस्थितम् । तदुपरि पुनदैव-प्रातिकूल्येन प्रायेणार्द्धवङ्गस्य लोका निराश्रयाः सञ्जाताः । ईदृशावस्थ इदानीं साधारणस्य स्वास्थ्योन्नतिकरकर्म्मणि केन प्रकारेण तत्रभवान् व्याधिस्यं विदधातु ? सुतरामेवं वहुष्वेव स्थानेषु तत्रभवतो मानवः संकल्पः मनस्येवावतिष्ठते ॥

## "म्यालेरिया"-विस्तारः ।

वङ्गानां पश्चिमांशः तद् यथा—वर्द्धमानप्रदेशस्य पश्चिमो भागः, वाङ्कुड़ा-प्रदेशो वीरभूमप्रदेशश्च एतावतः कालात् प्रायेण 'म्यालेरिया'-शून्य एव आसीत् । परं ते हि दिवसा गताः । विगतान् द्वित्रान् वत्सरान् यावत् वाङ्कुड़ा-प्रदेशस्य प्रतिगृहमेवासौ कालव्याधिर्दृश्यते । पञ्चाम्बुप्रदेशे प्राक् नासीत् "म्यालेरिया" । परं शासन-कर्त्तृपक्षः प्रणालीखननद्वारेणैनामुं तत्र प्रदेशे प्रावेशयत् । बांकुड़ा प्रदेशे वर्द्धमाने च कथमस्य व्याधेः प्रकोपो वर्द्धते ? अत्र विषये किमप्यनुसन्धीयते क्वचित् ? यावदस्माभिर्दृश्यते तावन्मन्यते यत्—"वाङ्कुड़ा-लौहवर्त्म"-विस्तारेणैव वाढ़ं तत्र 'म्यालेरिया दृश्यते । लौहवर्त्मसङ्घः पयःप्रणालीः सङ्कोचयति न वा तत्रावश्यमेव शासके र्गवेषितं । तादृशानुसन्धानस्य मतामतं साधारण्येन विज्ञापयितुमुचितम् । अङ्गाराकरेणास्य रोगस्य नैकट्य—सम्बन्धो वर्त्तत इति केचिदाहुः । तद् येन यथैव भवतु, "म्यालेरिया" वङ्गानां पश्चिमभागे बहुधा विस्तारं लभते यत् तत्र नास्ति कश्चित् सन्देहः । एकत्र "लर्ड रोणाल्डशे" वङ्गेभ्यः "म्यालेरिया"-व्याधिं दूरीकर्त्तुं प्रयतते अपरत्र चासौ नवं नवं स्थानमधिकृत्य विस्तारं लभते । एतदस्माकं दुर्भाग्यातिरिक्तं किं वदामः । लाउड़ तथा सुचि नामधेययोश्च पयःप्रणाल्योः संस्काराय यद् व्यवस्थापितं तत्र कियती उन्नतिर्वर्त्तते ?

## हिन्दवो मुसलमानाश्च ।

एतावत् कालं हिन्दुषु मुसलमानेषु च सद्भाव-संस्थापनार्थमवलम्बितेषु उपायचयेषु, एतत्कालीनस्य 'मोसलेमलीग"-संज्ञस्य महासदसो गोहत्या-निवारण-विधायकः प्रस्ताव एव सर्व्वप्रधानतमः । मुसलमान-संङ्घः कल्याणोद्देके-

प्रस्तावमिममुररीकृत्य सर्व्वेषां हिन्दूनामेव हृदयान्याचकर्ष । साम्प्रतं हिन्दुभिः प्रबलप्रतापस्य द्वारवङ्गाधिपस्या-धिनायकत्वेन कालीघट्टे एका साधारणी सभा समाहूताऽभवत् । समितिरसौ 'मोसलेमलीग'-समाख्याय महासदसे प्रभूतान् धन्यवादान् दत्तवती । बहुषु स्थलेषु निर्धना मुसलमाना श्छाग-मेषादि-पशुक्रयार्थमर्थसंग्रहं कर्त्तुमशक्नुवन्तो गोहत्यां सम्पादयन्ति । येषु स्थानेषु तादृशाः केचिदपि उपायाः न सम्भवेयु स्तेषु स्थानेषु हिन्दूनां मानसीं पीडामनुत्पाद्य तैः सम्पादिते गोवधे कश्चिदपि दोषो न भवेत् तेषाम् । प्रायशो मुसलमान-सङ्घश्छागान् मेषादींश्च पशून् प्रति दृष्टिं पातयेत् चेत् तर्हि हिन्दुषु मुसलमानेषु च सद्भावस्य कश्चिदपि व्यतिक्रमो न भवेत् । 'हितवादि' पत्रिकातोऽनूदितः ।

---

## विश्वविद्यालय-वार्त्ता ।



परलोकगत-महामान्य-भारतेश्वरघोषणानुसारेणास्माभि-र्ज्ञातमिदं यत् जाति-वर्ण-धर्म्म निर्विशेषतो भारतशासन-मिराज-राजस्याभिप्रायः समग्रविश्वविद्यालयो धर्म्मव्यापारे निरपेक्षतावलम्बी, एतदेव वयं हिन्दुमुसलमान प्रजा अधुनापि विश्वसिमः कामयामहे च । परं कलिकाता विश्वविद्यालयः शनैः शनैः खृष्टीयत्वमनुसरति । सांप्रतं 'वाट्वेल'ग्रन्थः कलिकाता विश्वविद्यालयपाठ्यनिवहस्यान्तर्गतोऽभवत् । मिः. जि. सि· घोषस्यार्थेन खृष्टीयत्वमुपजीव्य तुलना-मूलक-धर्म्मतत्त्ववक्तृता नियमिता । गण्डस्योपरि पिण्डः सञ्जातः—-वर्त्तमान वत्सरस्य "कनभोकेसन्"-सभायां विश्वविद्यालयस्य "भाइस्चेन्सेलारः" समाजसंस्कारकस्य वक्तृता-मञ्चे अवतीर्य्य जातिभेदमाक्रान्तवान् । अस्य हिन्दु-समाज-तत्त्वे प्रभूताज्ञतायां वयं विस्मिताः । विश्वविद्यालय-पक्षतो जातिभेदस्य दुर्नीतिफलकथोद्घोष्यते । अतो हिन्दुसमाजोऽस्य प्रतिवादे अधिकारी । ब्राह्म समाज-वेदीत एतत् प्रसङ्गोल्लेखे हिन्दु-समाजस्य किमपि वक्तव्यं नासीत् । किन्तु विश्वविद्यालयस्य हिन्दु-समाजं प्रति एतदाक्रमणमतीव निन्दनीयम् । समाज-संस्कारकस्य यथेच्छाचरणे वयं मूकाः, किन्तु धर्म्मं वा समाजं प्रति प्रच्छन्नमाक्रमणं, असभ्यतायाः परिचायकम् । 'हितवादि' पत्रिकातोऽनूदितः ।

विवेकग्रहासम्भवात् कथं विवेकख्यातेर्मोक्षहेतुत्वमिति चेन्न, दृश्यत्वपरिणामित्वादिसामान्यरूपैर्विवेकग्रहसम्भवात् ॥ (ट)

तथाहि, द्रष्टा साक्षात् स्वप्रकाश्येभ्यो भिन्नः प्रकाशकत्वात्, यो यस्य प्रकाशकः स तस्माद् भिन्नः यथा घटादालोको वृत्तिप्रकाश्याच्च वृत्तिरित्यनुमानेन आदावन्तर्दृश्येभ्यो बुद्धिवृत्तितदारूढार्थेभ्यो विवेकतो बुद्धिसाक्षी सिध्यति। (ठ)

---

सिद्धौ च मोक्षासिद्धिरिति विवेकज्ञानस्य मोक्षहेतुत्वासिद्धिरिति शङ्का। उक्तशङ्का निषिध्यते "ने"ति। अत्र शङ्कायामुत्तरमुच्यते "दृश्यत्वे"ति। तत् तद्व्यक्तिस्वरूपेण विवेकप्रतियोगिनां प्रकृतितद्विकाराणां ज्ञानस्यासिद्धौ सत्यामपि तेषां सामान्यधर्म्मेण ज्ञानसम्भवाद् न विवेकासिद्धिरित्यर्थः। सामान्यधर्म्मानाह,—"दृश्यत्वे"ति। पुरुषप्रकृतितद्विकाराणां विवेकज्ञानोपयोगिसाधर्म्यवैधर्म्ये च उक्ते कारिकायां श्रीमतेश्वरकृष्णेन,—

त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्म्मि।
व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमानिति॥

कारिकोक्तविषयत्वस्य दृश्यत्वेन, प्रसवधर्म्मित्वस्य परिणामित्वेन च संग्रहः। भिक्षुनये विवेकोपयोगि दृश्यत्वं तु बुद्धिवृत्तितदारूढपदार्थानामेवेति विशेषः। "दृश्यत्वम्"=साक्षादात्मप्रकाश्यत्वम्। "परिणामित्वम्"=अवस्थितस्य धर्म्मिणः पूर्वधर्म्मनिवृत्तौ धर्म्मान्तरापत्तिः। "विवेकग्रहसम्भवात्"=प्रत्यूहाभावेन सामान्यधर्म्मेण विवेकज्ञानस्य उपपन्नत्वात्। तत्तद्व्यक्तिपुरस्कारेण प्रतियोगिग्रहासम्भवेऽपि दृश्यत्वादिरूपेण तज्ज्ञानसम्भवाद् नास्ति काचिदनुपपत्तिरिति भावः॥ (ट)

सामान्यधर्म्मेण अन्तर्बुद्ध्यादिभ्यः आत्मनः विवेकग्रहप्रकारं दर्शयितुं शिष्यचित्तावधानं जनयति,—"तथाही"ति "तथाहि"=तमेवार्थं जानीहि। दृश्यस्वरूपसामान्यधर्म्मेण अनुमानाद् विवेकग्रहप्रकारं दर्शयितुं न्यायावयववाक्यान्याह,—"द्रष्टे"ति। अत्र अपरिशीलितन्यायतत्त्वानां बालानामवबोधाय परार्थानुमानसिद्ध्यनुकूलतया न्यायतदवयवस्वरूपमुच्यते संक्षेपतः, तथाहि, पर्वतो वह्निमानित्यनुमितिकारणं तावद् वह्निव्याप्यधूमवान् पर्वत इति परामर्शः; स च

न्यायप्रयोगाधीनः, न्यायश्च प्रतिज्ञादिपञ्चावयववाक्यसमुदयात्मकः, उक्तं च,— 'उचितानुपूर्वीकप्रतिज्ञादिपञ्चकसमुदायत्वं न्यायत्वमि'ति । अवयवाश्च,— प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि । यथा,—पर्वतो वह्निमान् इति प्रतिज्ञा, धूमादिति हेतुः, यो यो धूमवान् स स वह्निमान् यथा महानसमिति उदाहरणम्, वह्निव्याप्यधूमवानयम् इति उपनयः, तस्मात् वह्निमानयम् इति निगमनम् । *

तल्लक्षणादिकं यथा,—१ साध्यवत्तया पक्षवचनं प्रतिज्ञा; तदर्थश्च साध्यतावच्छेदकमात्रावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकबोधजनकन्यायावयववाक्यम् इति । उदाहरणवाक्यात्,—साध्यवैशिष्ट्यज्ञानं न पक्षतावच्छेदकविशिष्टे, अपितु 'स' इति पदस्यार्थे । उपनयाच्च पक्षतावच्छेदकविशिष्टे न साध्यवैशिष्ट्यज्ञानम्, अपि तु साध्यव्याप्यवैशिष्ट्यावगाहिज्ञानम्; निगमनाच्च पक्षतावच्छेदकविशिष्टे न साध्यतावच्छेदकमात्रविशिष्टवैशिष्ट्यावगाहिज्ञानम्, अपि तु तस्मादित्यादिपञ्चम्यन्तार्थतज्ज्ञानज्ञाप्यत्वसाध्यतावच्छेदकोभयविशिष्टवैशिष्ट्यावगाहिज्ञानम् इति तेषां व्युदासः । न्यायबहिर्भूतवाक्यवारणाय न्यायावयववाक्येति; उत्तरत्राप्येतद्व्यावृत्तिरेवं बोध्या ।

२ पञ्चम्यन्तं लिङ्गप्रतिपादकवचनं हेतुः, तदर्थश्च पञ्चम्यन्तत्वे सति हेतुप्रतिपादकन्यायावयववाक्यमिति ।

३ व्याप्तिप्रतिपादकन्यायावयववाक्यमुदाहरणम् । योयइति वीप्सया व्यापकत्वमर्थः तथाच धूमव्यापकवह्निरिति व्याप्तेर्भानम् । अथवा योय इति प्रथमयत्पदार्थे महानसे द्वितीययत्पदार्थे च महानसान्यस्मिन् हेतुमत्त्वस्य, प्रथमतत्पदार्थे महानसे द्वितीयतत्पदार्थे च महानसान्यस्मिन् साध्यस्य च उदाहरणवाक्यजन्यबोधे जाते उत्तरकालं व्यापकताबोधः मानसः । एवञ्च उदाहरणवाक्याद् हेतुव्यापकसाध्यसमानाधिकरण्यरूपा व्याप्तिरवसेया ।

४ व्याप्तिविशिष्टलिङ्गप्रतिपादकवचनम् उपनयः,—तदर्थश्च पक्षतावच्छेदकविशिष्टविशेष्यकप्रकृतसाध्यव्याप्यहेतुप्रकारकबोधजनकन्यायावयववाक्यमिति ।

५ हेतुसाध्यवत्तया पक्षप्रतिपादकं वचनं निगमनं, तदर्थश्च हेतुज्ञानज्ञाप्यत्वविशिष्टसाध्यवत्पक्षविषयकबोधजनकन्यायावयववाक्यम् । सर्वत्र लक्षणे प्रतिपत्तीच्छया उच्चरितत्वं प्रतिपादकत्वं ज्ञेयम् ।

---

* अर्थपदानुपन्यस्ते "तस्माद् वह्निमानिति निगमनमि"ति बोध्यम् ।

साध्यवत्तया पक्षज्ञानं प्रतिज्ञायाः प्रयोजनं, लिङ्गज्ञानं हेतोः, व्याप्तिज्ञानमुदाहरणस्य, पक्षधर्म्मताज्ञानमुपनयस्य, अबाधितत्वादिज्ञानं निगमनस्येति ।

प्रकृते च प्रतिज्ञावाक्यमाह,—"द्रष्टा स्वसाक्षात् प्रकाश्येभ्यो भिन्न" इति । कुत इत्याकाङ्क्षायां हेतुमाह,—"प्रकाशकत्वादि"ति । किमस्य गमकमित्याकाङ्क्षायामुदाहरणमाह,—"यो यस्य प्रकाशकः स तस्माद् भिन्नो यथा घटादालोकः वृत्तिप्रकाश्याच्च वृत्तिरि"ति । अस्य न्यायवाक्यस्यायमर्थः,—आलोकसाक्षात्प्रकाश्याद् घटाद् यथा तत्प्रकाशकः आलोकः भिन्नः, बुद्धिपरिणामरूपवृत्तिप्रकाश्याच्च आलोकाद् यथा तत्प्रकाशिका वृत्तिः भिन्ना एवम् आत्मनः साक्षात्प्रकाश्यवृत्तेः आत्मा भिन्न इत्यर्थः ।

एतदवयवत्रयप्रदर्शनं मीमांसकमतानुसारेण मन्तव्यम्, उपनयनिगमनाख्यकावयवद्वयमपि उक्तरीत्या ऊह्यम् । तत्तु नातिप्रयोजनकतया नोदाहृतम्, सांख्यमते अवयवपञ्चकमेव सम्मतम् "पञ्चावयवयोगात् सुखसंवित्ति"रिति सांख्यसूत्रात् ।

अनुमानेन सिद्धमर्थमाह "इत्यनुमानेने"ति । "आदौ"—बाह्यदृश्यघटादिविवेकात् पूर्वम् । "अन्तर्दृश्येभ्यः"—अबाह्यविषयेभ्यः, इन्द्रियाणां बहिर्गमनमन्तरेणैव साक्षात् कार्य्येभ्यः इत्यर्थः । "बुद्धिवृत्तिः"—इन्द्रियप्रणालिकया अर्थाकारेण परिणता बुद्धिः । "तदारूढार्थाः"—बुद्धौ प्रतिबिम्बिताः तदाकारतामापन्नाः पदार्थाः । "बुद्धिसाक्षी"—उदासीनतया स्वस्मिन् प्रतिबिम्बितानां बुद्ध्यादीनां तद्वृत्तीनां च द्रष्टा । साक्षात् द्रष्टृत्वं हि साक्षित्वं, तथाच पाणिनिसूत्रम् "साक्षात् द्रष्टरि संज्ञायामि"ति । बुद्धितदारूढार्थप्रतियोगिकात्मानुयोगिकभेदवान् आत्मा इति फलितार्थः । (ट)

विषयपरिशोधनद्वारा व्याप्तिनिश्चयप्रतिबन्धकव्यभिचाराशङ्काविघटनद्वारा च प्रमाणानुग्राहकं तर्कमाह;—कर्म्मकर्त्त्रि"ति । तर्कलक्षणं च,—व्याप्यारोपेण व्यापकारोपः, तदर्थश्च,—व्यापकाभाववत्त्वेन निर्णीते व्याप्यस्य आहार्य्यारोपाद् यो व्यापकस्य आहार्य्यारोपः इति । स च तर्कः द्विविधः, विषयपरिशोधकः, व्यभिचाराशङ्कानिवर्त्तकश्च । यथा पर्वतो वह्निमान् इति प्रसिद्धोदाहरणे पर्वते निर्वह्नित्वारोपाद् निर्धूमत्वारोपः—पर्वतो यदि निर्वह्निः स्यात्, तदा निर्धूमः स्यादित्यादि । अत्रच, व्यापकः—धूमाभावः, तस्याभावः—धूमाभावाभावः—धूम—इत्यर्थः ; तत्त्वतः तद्वत्त्वेन निर्णीते पर्वते व्याप्यस्य वह्न्यभावस्य, यदि

निर्वह्निः स्यादित्यारोपाद्, व्यापकस्य धूमाभावस्य तदा निर्धूमः स्याद् इत्येवंरूपः य आरोपः स तर्कः । अयं च विषयपरिशोधकः, यतोऽस्मात् तर्कवाक्याद् आदौ आपाद्यापादकयोः धूमाभाववह्न्यभावयोः व्याप्तिर्निश्चीयते, ततः व्यापकाभावेन व्याप्याभावसिद्धिनियमात्पक्षे पर्वते व्यापकस्य धूमाभावरूपापाद्यस्य अभावेन धूमेन व्याप्यस्य वह्न्यभावरूपापादकस्य अभावरूपस्य वह्नेः साधनेन वह्निरूपसाध्यस्य सिद्ध्या बाधदोषविघटनरूपविषयशोधनद्वारा साध्यसाधनयोः वह्निधूमयोः व्याप्तिरनुगृह्यते ।

अपरश्च विपक्षबाधकस्तर्कः स एव व्यभिचाराशङ्कानिवर्त्तकश्चेति कथ्यते । यथा अत्रैव धूमो यदि वह्निव्यभिचारी स्यात् तदा वह्निजन्यो न स्यादित्यादिवाक्यं, तज्जन्याद् वह्निजन्यत्वाभाववह्निव्यभिचारित्वयोरापाद्यापादकयोः व्याप्तिनिश्चयाद् वह्निजन्यत्वरूपेण आपाद्याभावेन वह्निव्यभिचारित्वाभावरूपस्य आपादकाभावस्य साधनेन तर्कस्यास्य व्यभिचाराशंकानिवर्त्तकत्वमवगन्तव्यम् ।

ह्रदो निर्वह्निः स्यात् निर्धूमः स्यादित्यादावतिव्याप्तिवारणाय लक्षणे व्यापकाभाववत्त्वेन निर्णीते इति विशेषणम् । यदि निर्वह्निः स्याद् अद्रव्यं स्यादित्यादौ अव्याप्तिवारणाय व्याप्यस्येति । तद्व्याप्यारोपाधीनस्तदारोप इत्यर्थलाभाय व्यापकेति '

प्रकृतानुमाने च इत्थं कर्म्मकर्त्तृविरोधरूपस्तर्कोऽवगन्तव्यः, अत्र, प्रकाश्यं—"कर्म्म", प्रकाशक्रिया व्याप्यत्वात्, प्रकाशकः—द्रष्टा—कर्त्ता, प्रकाशक्रियाश्रयत्वात् । "कर्म्मकर्त्तृविरोधः"—प्रकाश्यप्रकाशयोरभेदारोपात् कर्म्मकर्तृत्वाभावारोपः । स चात्र इत्थमवसेयः,—

परसमवेतक्रियाजन्यफलशालि हि कर्म्म, तथाच प्रकाश्येन कर्म्मणा प्रकाशक—समवेतप्रकाशक्रियाफलशालिना प्रकाशकादन्येन भवितव्यम्, यदि प्रकाश्यः प्रकाशकादात्मनः द्रष्टुरन्यो न स्यात्, तदा ग्रामं गच्छति चैत्रः इत्यादौ स्वसमवेतक्रियाजन्य—फलशालिनः चैत्रस्येव प्रकाश्यस्य कर्म्मत्वं न स्यात् । यतः अत्र कर्म्मत्वमुपलभ्यते अतस्तयोर्भेदोऽपि सिद्धः व्यापकाभावे व्याप्याभावनियमस्य सिद्धत्वात् ।

तर्कलक्षणं चात्र इत्थं सङ्गमनीयम्,—अत्र व्यापकाभावः—कर्म्मकर्त्तृत्वाभावाभावः अर्थात् कर्म्मकर्त्तृभावः, तद्वत्तया निर्णीतयोः—प्रकाश्यप्रकाशकयोः, व्यापकस्य-प्रकाश्यप्रकाशकभेदाभावस्य, यदि प्रकाशको द्रष्टा स्वप्रकाशात्मकः स्यात्

कर्म्मकर्तृविरोधश्चानुकूलस्तर्कः ( ठ )

अत्र आत्मनि व्यभिचारवारणाय साक्षात्पदम्, वृत्तिद्वारैवात्मनः स्वविषयत्वात् ।

---

भिचो न स्यात् इत्येवंरूपाद् आरोपाद्, यः व्यापकस्य—कर्म्मकर्त्तृभावाभावस्य तदानयोः कर्म्मकर्त्तृभावो न स्यादित्येवंरूपः य आरोपः स अत्र विषयशोधकः अनुकूलतर्कः । अस्माद्धि तर्कवाक्यादादौ आपाद्यापादकयोः व्याप्तिर्निश्चिता, ततः पक्षे द्रष्टरि कर्म्मकर्त्तृभावाभावरूपापाद्यस्य अभावेन स्वसाक्षात्प्रकाश्यभेदाभावरूपापादकाभावस्य साधनेन प्रकाश्यभेदरूपसाध्यस्य निश्चयसिद्ध्या बाधदोषविघटनरूपविषयशोधनद्वारा साध्यसाधनयोः स्वसाक्षात्प्रकाश्यभेद-प्रकाशकत्वयोः व्याप्तिरनुगृहीता ।

अत्र व्यभिचाराशंकानिवर्त्तकतर्कश्च एवं द्रष्टव्यः,—प्रकाशकत्वं यदि प्रकाश्यभेदव्यभिचारि स्यात् तदा प्रकाशकर्त्तृत्वनियतं न स्याद् इत्यादितर्कवाक्याधीनाद् आपाद्यापादकयोर्व्याप्तिनिश्चयात् प्रकाशकर्त्तृत्वनियतत्वरूपेण आपाद्याभावेन प्रकाश्यभेदव्यभिचारित्वाभावरूपस्य आपादकाभावस्य साधनेन तादृशतर्कस्य परम्परया व्यभिचारशङ्कानिवर्त्तकत्वमित्यवधेयमिति संक्षेपः । एतेन स्वसाक्षात्प्रकाश्यभेदाभाववति स्वप्रकाश्ये स्वस्मिन् प्रदीपे प्रकाशकत्वस्य हेतोर्वृत्तेर्व्यभिचारः इतीयमाशङ्का निरस्ता वेदितव्या ।

यदिहि प्रदीपः पूर्वं तमसा पिहितः पश्चादात्मानं प्रकाशयति इति क्वचिद् दृष्टं स्यात् तदा प्रदीपस्य स्वसाक्षात्प्रकाश्यत्वेन स्वसाक्षात्प्रकाश्यभेदरूपसाध्याभाववत्त्वेन प्रकाशकत्वहेतौ व्यभिचारः स्यात्, नच तथा, तस्य सदा प्रकाशकत्वेन प्रकाशकसमवेतप्रकाशक्रियाजन्यतमोविघटनरूपफलाश्रयत्वाभावात् ।

नचैवमपि दृष्टान्तासिद्धिः, यतः द्रष्टरि पक्षे आत्मनि यत् प्रकाशकत्वं—तत्तु चैतन्यप्रतिबिम्बसमर्पणरूपम्, प्रदीपादौ प्रकाशकत्वं पुनः तमोनिवर्त्तनं, ततश्च पक्षवृत्तिसाध्यसमानाधिकरणचैतन्यप्रतिबिम्बसमर्पणरूपप्रकाशकत्वहेतोः प्रदीपादौ दृष्टान्तेऽवृत्तेः दृष्टान्तासिद्ध्या व्याप्तिग्रहासम्भवदोष इति वाच्यम्, आत्मप्रदीपयोरुभयत्रैव प्रकाशरूपतानुभवाद् आत्मनः अपि वक्ष्यमाण—प्रणाल्या प्रतिबिम्बद्वारा बुद्ध्यादेः तमोनिरासाद् उभयसाधारणं तमोनिवर्त्तकत्वं प्रकाशकत्वमभ्युपगन्तव्यम् अवच्छेदाधिक्यं वा अङ्गीकर्त्तव्यम् इत्यदोषः । ( ठ )

स्वसाक्षात्प्रकाश्येभ्यो भिन्न इति साध्ये "साक्षात्" पदोपादानस्य प्रयोजनं दर्शयति "अत्र आत्मनि व्यभिचारवारणाये"ति । "अत्र"—स्वसाक्षात्प्रकाश्येभ्यो भिन्न इति साध्यशरीरे । साक्षात्पदस्यानुपादाने स्वप्रकाश्येभ्यः भिन्नः इति साध्यं पर्यवस्यति । तथा च एवं व्याप्तिः, यो यत्प्रकाशकः स तत्प्रकाश्याद् भिन्नः, तथात्वे आत्मनः वृत्तिद्वारेण स्वस्यापि प्रकाशकत्वात् स्वप्रकाश्ये आत्मनि स्वप्रकाश्यभेदाभावेन निश्चितसाध्याभाववति प्रकाशकत्वहेतोर्वृत्तेः व्यभिचारः । साक्षात्पदोपादाने च आत्मनि वृत्तिद्वारेणैव प्रकाश्यत्वात् तत्र स्वसाक्षात्प्रकाश्यत्वाभावेन स्वप्रकाश्यभेदासत्त्वेऽपि स्वसाक्षात्प्रकाश्यबुद्ध्यादिभेदसत्त्वे बाधकाभावात् न व्यभिचारः । अत्र बुद्ध्यादौ दृष्टस्वसाक्षात्प्रकाश्यत्वस्य आत्मनि तदभावस्य च निरूपणाय साङ्ख्यीयज्ञानोत्पत्तिप्रकारकथनपूर्वकम् बुद्ध्यादीनां स्वसाक्षात्प्रकाश्यत्वे विषयाणाम् आत्मनश्च वृत्तिद्वारेण प्रकाश्यत्वे युक्तय उच्यन्ते ।

आदौ तावत्पुरुषस्य भोगाद्यर्थसाधनाय स्वस्थानस्थितैरेव विषयैराकृष्टानि इन्द्रियाणि तृणजलौकावत् स्वस्थानमत्यजन्त्येव वृत्तिद्वारेण विषयदेशं गच्छन्ति, गत्वा च संयोगसंयुक्ततादात्म्यादिसम्बन्धेन तानि विषयेण सन्निकृष्टानि भवन्ति । ततः यथा तडागजलं कयाचित्प्रणाल्या निर्गत्य क्षेत्रादिकमाप्नोति, तथा बुद्धिरपि इन्द्रियप्रणालिकया विषयदेशं गत्वा विषयसंनिकृष्टा भवति । तेन च सन्निकर्षेण वस्त्रमालिन्यस्येव बैद्धतमोद्रव्यस्यापसारणे सति यथा निर्मले वस्त्रे कुसुम्भसंयोगात् कुसुम्भाकारता भवति यथा वा तडागजलं क्षेत्राद्याकारतां प्राप्नोति तथैव स्वच्छनिर्मलबुद्धिसत्त्वे विषयसंयोगात् विषयाकारता भवति । पीतशङ्खादिप्रतीतौ नयनगतपित्तादेः विषयगततयाऽनुभवाद् इन्द्रियसहकृतस्येव तादृशान्तःकरणस्य संकोच-विकाशशालिनी विषयाकारा बुद्ध्यवस्था बुद्धिवृत्तिरित्युच्यते, "भागगुणाभ्यां तत्त्वान्तरं वृत्तिः सम्बन्धार्थं सर्पती"ति सांख्यप्रवचनसूत्रात् । भागो विभक्तावयवः, तस्माद् गुणाच्च तत्त्वान्तरं—पदार्थान्तरम्—अविभक्तावयव इत्यर्थः । तादृशबुद्ध्यवस्थायां किमस्ति प्रमाणमित्यपि नाशङ्कनीयम्, स्वप्नध्यानादौ बाह्यविषयाभावकाले विषयाकाराया बुद्ध्यवस्थाया अन्तरेणोपलभ्यमानाया केनापि अपलपितुमशक्यत्वेन बाह्येऽपि तथैव स्वीकर्तुं युक्तत्वात् । सा वृत्तिः प्रमाणम् । "प्रमाणविपर्ययविकल्पनिद्रास्मृतयः प्रमाणानी"ति योगसूत्रेण वृत्तिविभजनात् । वृत्तेश्च प्रमाणत्वम् अनुभवाख्यफलायोग

अवच्छिन्नत्वात् । रथारूढस्य ग्रामसम्बन्धे रथस्येव चेतनस्य विषयसम्बन्धे द्वारत्वाच्च । सा चार्थाकारा वृत्तिः सर्वात्मनां विभुत्वेऽपि स्वस्वामिन्येव आत्मनि प्रतिबिम्बते नान्यत्र । अनादिस्वस्वामिभावस्य प्रतिबिम्बनियामकत्वात् । अन्यथाऽतिप्रसङ्गात् । प्रतिबिम्बश्चाधिष्ठानगताया बुद्धेर्विकाररूपः परिणामः । स्वत्वं च स्वामिप्रकाशितवृत्तिजन्यसंस्कारवत्त्वम् । स्वामित्वं च स्वनिष्ठसंस्कारजनकवृत्तिप्रकाशकत्वम् । सा च वृत्तिरात्मनि स्थिता सती अर्थाकारा आत्माकारा च स्वसमानाकारं परिणामान्तरं धत्ते । स एवात्मनि वृत्तिप्रतिबिम्बः विषयताख्यसम्बन्धः इति तदवच्छिन्नं चैतन्यं प्रत्यक्षप्रमा घटमहं जानामीत्याकारा अर्थात्मविषयिणी भवति । ततश्च स्वप्रतिबिम्बितां विषयोपरक्तां तां बुद्धिवृत्तिं स एव प्रतिबिम्बाधिष्ठानचेतनः आवरकस्य तमसः अभिभवाद् अवभासयति, यथास्वप्रतिबिम्बितकुसुम्भरक्तं वस्त्रं स्फाटिकभित्तिः । "चितेरप्रतिसंक्रमायास्तकारापत्तौ स्वबुद्धिसंवेदनमि"ति योगसूत्रात् । तदर्थस्तु,—तदाकारापत्तौ=बुद्धिसमानाकारतापत्तौ सत्याम् अप्रतिसंक्रमायाः=बुद्धौ असञ्चारिण्याः, असङ्गाया अपि चितेः स्वीयोपाधिबुद्धिसंवेदनं भवतीत्यर्थः, तदुक्तं "तस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः । इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः ॥" इति । तथा चेतने प्रतिबिम्बनादेव बुद्धिवृत्तितद्विषययोर्भानम्, मरुमरीचिकाध्यस्तजलस्येव मरीचिना प्रकाशनमिति । नह्यन्यथा विभोः चित्स्वरूपस्यात्मनः सदा सर्व्वसंयोगेन कादाचित्कं परिच्छिन्नं च विषयसंवेदनं केनाप्युपपादयितुमञ्जसा शक्यते । वृत्त्यवच्छेदेनैव आत्मनो दृश्यत्वमुक्तम्,—"अदृश्यो अदृश्यते राहुगृहीतेन यथेन्दुना । तथानुभवमात्रात्मा दृश्येनात्मावलोक्यते ॥" इति । दृश्येन=वृत्त्या । इत्थं प्रत्यक्षा वृत्तिः विषयदेशे जायमाना तत्रैव आत्मनि प्रतिबिम्बते, आत्मनो विभुत्वात् ।

यत्र च इन्द्रियद्वारं विना मनःस्ववासनावशात् यत्रार्थेन सम्बध्यते तत्र तदाकारावृत्तिः मानसं प्रत्यक्षम् । उक्तं च "शरीरालयमुत्सृज्य यत्र चित्तविहङ्गमः । स्ववासनावशाद्याति तत्रैवात्मानुभूयते ॥" इति वाशिष्ठे । यच्च बुद्धौ चेतनस्य प्रतिबिम्बनं तद्बुद्धौ अहमिति प्रत्ययस्य विषयः । बुद्धितद्वृत्तयश्च आत्मनः साक्षात् दृश्या भवन्ति,—तथाहि,—यथाच सन्निकर्षसाम्येऽपि चक्षूरूपमेव गृह्णाति न रसम्, तथैव सर्वसंयुक्तोऽप्यात्मा स्वबुद्धिवृत्तिमेव साक्षात् गृह्णाति नेतरत् इति फल-बलात् क्लृप्तम् । अर्थाकारतैव अर्थग्रहणम्, सा च

नन्वत्रानुमाने बुद्धिवृत्तिमात्राद् विवेकः सिध्यतु । तस्या एव साक्षादात्मदृश्यत्वात्, न प्रकृत्यादिभ्य इति चेन्न, वृत्तीनामज्ञातसत्त्वाभावेन ह्यत्रानुमाने लाघवाद् वक्ष्यमाणतर्कगणाच्चाखिलवृत्तीनां द्रष्टा विभुकूटस्थनित्यैकज्ञानस्वरूपतयैव सिध्यति ।

---

कूटस्थे प्रतिबिम्बनाच्चान्यत् युक्तम्, अतो बुद्धिवृत्तेरेव चेतने साक्षात् प्रतिबिम्बनसामर्थ्यम् नेतरस्येत्यपि कल्प्यते । बुद्धिवृत्तेरेवाज्ञातसत्त्वाभावात् । तस्मात् अर्थोपरक्तबुद्धिस्फुरणार्थं चेतने तत्प्रतिबिम्बः सिध्यति । तदेव चैतन्ये वृत्तिबिम्बः सिद्धः । यच्च बुद्धौ चेतनस्य प्रतिबिम्बनं तद्बुद्धेः चिच्छायापत्तिरित्युच्यते, तच्च बुद्धेर्घटाद्याकारतावत् चैतन्याकारपरिणामः । स च चैतन्यभानार्थं कल्प्यते, साक्षात् स्वदर्शने कर्म्मकर्त्तृविरोधात्, तदेव चात्मनि बुद्धिवृत्त्यारोपे च प्रयोजनम्, दर्पणादौ मुखादिप्रतिबिम्बद्वारैव मुखादिषु दर्पणमालिन्यारोपदर्शनादिति । केवलात्मनो दर्शने च इत्थं ज्ञानोत्पत्तिप्रक्रिया अवगन्तव्या,–शास्त्रादिना योगजधर्म्मेण वा बुद्धेस्तमोऽभिभवे सति निर्म्मलायां बुद्धौ आत्माकारा वृत्तिर्जायते अहमात्मास्मीत्येवंरूपा, सा प्रमाणम्, सा च वृत्तिर्जायमानैव चेतने प्रतिबिम्बिता सती भासते, तदेतत् पुरुषनिष्ठं फलम् आत्मज्ञानमुच्यते । तथाच यथा सूर्य्यो बिम्बरूपेण प्रकाशकः प्रतिबिम्बरूपेण च प्रकाश्यः इति न कर्म्मकर्त्तृविरोधः एवमात्मापि बिम्बरूपेण ज्ञाता भवति, स्वगतप्रतिबिम्बरूपेण च ज्ञेय इति प्रकारभेदात् न कर्म्मकर्त्तृविरोधः ।

अयञ्च अन्योन्यप्रतिबिम्बभावः श्रीमद्विज्ञानभिक्षुपादप्रोक्तरीत्या उदाहृतः । सर्वतन्त्रस्वतन्त्रमतिश्रीमद्वाचस्पतिमिश्रपादास्तु आत्मनि बुद्ध्यादिप्रतिबिम्बं नाङ्गीकुर्वन्त्येव । तन्मते स्वयंप्रकाशरूपस्य नात्मनोज्ञेयत्वमङ्गीक्रियते । "विज्ञातारमरे केन विजानीयादि"त्यादि श्रुतेः । बुद्धौ आत्मप्रतिबिम्बद्वारेणैव अर्थात्मबुद्धिवृत्त्यादिसकलव्यवहारनिष्पत्तेः सम्भवाच्चेत्यलं प्रपञ्चेन । विस्तरस्तु आकरे अनुसन्धेयः ।

प्रागुक्तानुमानेन मोक्षहेतुभूतस्य प्रकृत्यादिसकलपदार्थप्रतियोगिकात्मानुयोगिकभेदज्ञानस्यासिद्धिं शङ्कते,–"नन्वि"ति । "अत्रानुमाने"=द्रष्टा स्वसाक्षात् प्रकाश्येभ्यः भिन्नः प्रकाशकत्वादित्यनुमाने । "बुद्धिवृत्तिमात्रात्"–आत्मसाक्षात्प्रकाश्यकेवलबुद्धिवृत्तेः । "विवेकः"–भेदज्ञानम् । "तस्याएव"–बुद्धिवृत्तेरेव । एवकारेण प्रकृत्यादिबाह्यवस्तूनां व्यावृत्तिः । स्वयमेव एवकारव्यवच्छेद्यमाह "न

यथा नैयायिकानां चितिः सकर्तृका कार्य्यत्वादित्यनुमाने लाघवात् कर्त्तुरेकत्वनित्यत्वादिकं तद्वत् । तच्च विभुत्वं परिच्छिन्नभिन्नत्वम् । कूटस्थत्वादिकत्वं च परिणामिभिन्नत्वादिकम् अतो बुद्ध्यात्मनोः दृग्दृश्यरूपतो विवेकग्रहे सति तदुत्तरानुमानेन परिणामित्वापरिणामित्वादिरूपैः समान्यतोऽप्यात्मानात्मविवेकग्रहो घटते इति ।

---

प्रकृत्यादिभ्य इति । "आदि"शब्दात् बुद्धिवृत्तिभिन्नाः सर्वे पदार्थाः संगृह्यन्ते । इत्थशङ्कां निषेधति "ने"ति । प्रकृत्यादिभ्यः आत्मविवेकप्रयोजकम् आत्मनः कूटस्थत्वादिकं साधयन् शङ्काया उत्तरमाह,—"वृत्तीनामि"त्यादि । आत्मनः अपरिणामित्वे हेतुरुक्तः,—"वृत्तीनामज्ञातसत्त्वाभावेने"ति । तदेतदुक्तं महर्षिपतञ्जलिना "सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामादि"ति । तदर्थस्तु,—बुद्धिवृत्तीनां विषयाः बाह्या घटादयः बुद्धेस्तदाकारपरिणामे ज्ञाता भवन्ति, तदपरिणामे तु अज्ञातास्तिष्ठन्ति । बुद्धिवृत्तयस्तु सदैव ज्ञाता भवन्ति, नहि सुखाद्याकारा वृत्तयः सन्ति पुरुषेण न ज्ञायन्ते इति युज्यते । तथात्वे अहं सुखी नवा, अहं जानामि नवा, इच्छामि न वेत्यादिरूपसंशयापातात्, सुखादिसत्त्वे तदज्ञानापत्तेश्च । तथाहि पुरुषस्य परिणामित्वे कदाचित् पुरुषस्य आन्ध्यापत्त्या विद्यमानाऽपि चित्तवृत्तिर्न ज्ञायेत, तदा तस्या अपि ज्ञाताज्ञातोभयरूपत्वे अहं सुखी न वा, दुःखी न वा, इच्छामि न वेत्यादिरूपः संशयः स्यात्, एतादृशश्च संशयो न दृश्यते, अतो वृत्तेरज्ञातसत्ता नास्ति, ततश्च पुरुषः अपरिणामीति आयातम् । अतः अपरिणामित्वेन तस्य कूटस्थनित्यत्वमपि सिद्धम् । मध्यमपरिमाणेऽनित्यत्वप्रसङ्गाद् अणुत्वे च सकलदेहव्यापिसुखाद्यनुपलब्धिप्रसङ्गाद् वृत्तीनां द्रष्टुरात्मनः नित्यत्वेन विभुत्वमपि सिद्धम् । वृत्तीनां भासकतया ज्ञानरूपता अपि सिद्धा, आत्मनः जडत्वे जगदान्ध्यप्रसङ्गात् । नैयायिकादीनामिव आत्मनो जडत्वमङ्गीकृत्य ज्ञानस्य तद्गुणत्वाङ्गीकारे, ज्ञानकारणम् अन्तःकरणम्, व्यवसायात्मकं ज्ञानं, तदाश्रय आत्मा, ज्ञानग्राहकः अनुव्यवसायश्चेति चत्वारः पदार्थाः कल्पनीया इति गौरवम्, आत्मनो ज्ञानरूपताङ्गीकारे तु,—अन्तःकरणम्, व्यवसायात्मकज्ञानस्थानीयाः वृत्तयः, अनुव्यवसायस्थानीयः वृत्तीनां साक्षी चिद्रूपः आत्मेति पदार्थत्रयमङ्गीकरणीयमिति लाघवम् । अतः आत्मनः विभुत्वम्, कूटस्थनित्यत्वम्, एकज्ञानरूपत्वं ज्ञानेच्छासुखदुःखादीनां च चित्तधर्म्मत्वं सिद्धम् । एतदेवोक्तम् योग-

अतएव पातञ्जले सत्त्वपुरुषान्यताख्यातेरेव मोक्षहेतुतया स्थले स्थले व्यासभाष्ये प्रोक्ता ।

सत्त्वपुरुषान्यताख्यातिरूपदृग्दृश्यविवेकग्रहोत्तरं यथोक्तरीत्या प्रकृ-

---

वार्त्तिके भिक्षुपादैः,—पुरुषस्य सदाज्ञातविषयत्वे सिद्धे लाघवात् चित्प्रकाशस्वरूप-मेकैकमेवात्मद्रव्यं सिद्ध्यति, ततश्चाज्ञानस्य चित्तधर्म्मतया अज्ञानकार्य्यं धर्म्मादिकं तत्कार्य्यं चेच्छासुखादिकमपि चित्तस्यैव, सामानाधिकरण्यप्रत्यासत्तौ लाघवादिति। एतत् सर्वमनुसन्धायैव उक्तम् "लाघवादि"ति। अन्या अपि युक्तयोवक्ष्यन्ते इत्याह "वक्ष्यमाणतर्कगणाच्चे"ति। ते च तर्का उत्तरभागे द्रष्टव्याः। विस्तर-भयात् नेह उल्लिख्यन्ते।

लाघवयुक्त्या पदार्थसिद्धौ नैयायिकानां सुप्रसिद्धं नित्यैकेश्वरसाधकमनुमानं दृष्टान्तयति "यथा नैयायिकानामि"ति। तस्यायमाशयः,—यथा अनेककर्त्तृकघट प्रासादादौ एककर्त्तृकत्वादिरूपेण व्याप्त्यग्रहेऽपि क्षित्यङ्कुरादौ लाघवाद् नित्यैक-स्यैव कर्त्तुरीश्वरस्य सिद्धिः तथा द्रष्टा स्वसाक्षात् प्रकाश्येभ्योभिन्न इत्यत्रापि स्वसाक्षात्प्रकाश्यभिन्नस्य द्रष्टुः नित्यैकज्ञानरूपत्वसिद्धिः।

विभुत्वादिकं लक्षयितुं प्रक्रमते "तत्रे"ति। "तत्र"—तेषु विभुत्वादिषु। विभुत्वं, लक्षयति "परिच्छिन्नभिन्नत्वमि"ति। "परिच्छिन्नत्वं"—परिमितत्वम्—देशकालाव्यापकत्वमित्यर्थः। क्वचिद्देशे एव विद्यमानत्वं—देशतः परिच्छेदः, क्वचित्काले एव विद्यमानत्वं कालतः परिच्छेदः। भिक्षुमते,—परिच्छिन्नानन्तसत्त्वाद्यात्मकतया प्रकृतेरपि परिच्छिन्नत्वानन्तव्यक्तिकत्वम् अतएव परिच्छिन्नत्वम्। आकाशाद्युपादानसत्त्वादेश्च स्वकार्य्यमात्रव्यापकत्वं नतु सर्वकार्य्यव्यापकत्वमिति परिच्छिन्नत्वमेव। आत्मनस्तु सकलदेशकालव्यापकत्वाद् नास्ति कश्चित् परिच्छेदः। अतः प्रकृत्यादिसकलविलक्षणत्वात् विभुत्वेन अस्य सुघटः विवेक-ग्रहः। कूटस्थादिकमपि एवं विवेकग्रहहेतुः द्रष्टव्यः। कूटस्थत्वादिकं लक्षयति,—"परिणामित्वादिभिन्नत्वमि"ति। परिणामिभिन्नत्वं कूटस्थत्वमिति कूटस्थल-क्षणं। अवस्थितस्य धर्म्मिणः पूर्वधर्म्मनिवृत्तौ धर्म्मान्तरापत्तिः परिणामः, तद्वत्त्वं परिणामित्वम्, तद्भिन्नत्वं कूटस्थत्वम्। प्रकृत्यादौ धर्म्मलक्षणावस्थालक्षण-परिणामसत्त्वात् निरवयवस्य निधर्म्मकस्य च आत्मनः परिणामाभावाद् विवेक-सिद्धिः। आदिशब्दाभ्याम् उत्पादविनाशरहितत्वम्, आविर्भावतिरोभाववद्भि-

त्यादिविवेकग्रहात् । तत्र च सत्त्वशब्दे बुद्धिस्थत्वेन बुद्धिसत्त्वमुक्तमिति । एवं च प्रकृत्यादिपदार्थानां विशिष्य ज्ञानाभावेऽपि तद्विवेकज्ञानं घटते ।

---

न्नत्वं वा नित्यत्वम्, एकजातीयत्वं विरुद्धधर्म्मरहितत्वं वा एकत्वमित्यादिकं नित्यतादिलक्षणं सूच्यते । प्रकृतं निगमयति "अतः"इति । "अतः"—पूर्वोक्तानुमानात् । "बुद्ध्यात्मनोः"—बुद्धितद्वृत्तिपुरुषयोः "दृग्दृश्यरूपतः" इति, "दृक्"=द्रष्टा पुरुषः । दृश्या—ज्ञेया, स्वसाक्षात्प्रकाश्या बुद्धिः, तद्रूपतः, दृग्दृश्यत्वरूपधर्म्मेण । "विवेकग्रहे"—बुद्धिपुरुषयोः भेदप्रकारकज्ञाने । "सति"—जाते । तदुत्तरानुमानेन, दृग्दृश्यविवेकग्रहात् परवर्त्तिना अपरेण अनुमानेन, आत्मा परिणामिप्रकृत्यादिभ्यः भिन्नः, अपरिणामित्वात्, इत्यादिरूपेण । "परिणामित्वापरिणामित्वादिरूपैः"—पूर्वोक्तैः आत्मनात्मधर्म्मैः । "सामान्यतः"—प्रकृत्यादिसकलाचेतनवृत्तिधर्म्मपुरस्कारेण । "आत्मानात्मविवेकग्रहः"=चेतनाचेतनभेदज्ञानम् । "घटते"—जायते । बुद्ध्यात्मनोः भेदज्ञानस्य सामान्यचेतनाचेतनभेदज्ञानप्रयोजकत्वे साधकमानं दर्शयति,—"अतएव"—बुद्ध्यात्मनोः विवेकज्ञानादुत्तरं सामान्यचेतनभेदज्ञानसम्भवात् । प्रमाणभूतम् पातञ्जलभाष्यार्थमुदाहरति,—"सत्त्वपुरुषे"ति । "सत्त्वपुरुषान्यताख्यातिरेव"—सत्त्वं च पुरुषश्च सत्त्वपुरुषौ तयोः, अन्यताख्यातिः—अन्यता=भेदः, ख्यातिः=ज्ञानं,—भेदप्रकारकज्ञानम्,—बुद्धिपुरुषयोः भेदज्ञानमेवेत्यर्थः । "मोक्षहेतुतया"=मुक्तिकारणतया । "स्थले स्थले"—"योगश्चित्तवृत्तिनिरोधः", "विवेकख्यातिरविप्लवा हानोपायः" इत्यादिसूत्रव्याख्याने महर्षिव्यासकृते योगसूत्रभाष्ये । जिज्ञासूनामौत्सुक्यनिवृत्तये भाष्यवचनमुदाह्रियते,—यथा,—योगश्चित्तवृत्तिनिरोध इत्यत्र भाष्यम् "तदेव रजोलेशमलापेतं स्वरूपप्रतिष्ठितं सत्त्वपुरुषान्यताख्यातिमात्रं धर्म्ममेघध्यानोपगं भवती"त्यादिः । "विवेकख्यातिरविप्लवे"ति सूत्रे,—सत्त्वपुरुषान्यताप्रत्ययः विवेकख्यातिरित्यादिः । "सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यमि"ति पातञ्जलसूत्रम्, तद्भाष्यं च,—यदा निर्धूतरजस्तमोमलं बुद्धिसत्त्वं पुरुषान्यताप्रतीतिमात्राधिकारं दग्धक्लेशबीजं भवतीत्यादि प्रमाणत्वेन ग्राह्यम् । चेतनाचेतनसामान्यभेदज्ञानस्यैव मोक्षहेतुता पूर्वमुक्ता, तत्कथं सत्त्वपुरुषयोः भेदज्ञानस्य मोक्षहेतुत्वं पातञ्जले प्रोक्तमित्याशंकां वारयितुं पूर्वोक्तं स्मारयति "सत्त्वपुरुषान्यताख्यातिरि"ति । "यथोक्तरीत्या"—वृत्तीनामज्ञातसत्त्वाभावेन इत्यादिना सामान्यतोऽप्यात्मानात्मविवेकग्रहो घटते इत्यन्तेन ग्रन्थेन उक्त-

एतेन दृग्दृश्यविवेकादविद्यानिवृत्तिरिति प्राचां प्रवादोऽपि उपपादितः । किन्तु आत्मा प्रकृतितत्कार्य्येभ्यो भिन्नः अपरिणामित्वादित्याद्यनुमानैरपि सामान्यतो दृश्यविवेको द्रष्टरि सम्भवतीति ।

---

प्रणाल्या । पातञ्जलभाष्योक्तसत्त्वशब्दस्यार्थ माह,—"तत्रे"ति । 'तत्र"—पातञ्जलभाष्ये । सत्त्वशब्देन मुख्यया वृत्त्या सामान्यतः सत्त्वगुण उच्यते, अत्र भक्त्या बुद्धिरूपतां प्राप्तः सत्त्वगुण उक्तः । गौण्याः लक्षणायाः कारणं मुख्यसम्बन्धमाह,—'बुद्धिस्थत्वेने"ति बुद्धिस्थत्वेन=बुद्धिव्यापकत्वेन । प्रकृतमुपसंहरति "एवञ्चे"ति 'एवञ्च'—पूर्वोक्तरूपेण आत्मानात्मसामान्यविवेकज्ञानसम्भवात् । "विशिष्य ज्ञानाभावेऽपि"—प्रकृतित्वादिरूपेण तत्तद्व्यक्तिपुरस्कारेण विवेकग्रहासम्भवेऽपि । "तद्विवेकज्ञानम्"—परिणामित्वादिसामान्यधर्म्मपुरस्कारेण प्रकृत्यादिभ्यः पुरुषस्य भेदज्ञानम् । "घटते"—सिद्ध्यति ।

प्राचीनानां प्रवादस्योपपादनेनापि पूर्वोक्तमर्थं समर्थयति,—"एतेने"ति "एतेन"=बुद्धिपुरुषयोः विवेकज्ञानादेव प्रागुक्तप्रणाल्या प्रकृत्याद्यखिलविवेकज्ञानस्य सिद्धत्वेन । प्रकृत्यादिसकलपदार्थाद् आत्मनो विवेकाभावे केवलेन सत्त्वपुरुषान्यताप्रत्ययेन निखिलप्रकृत्याद्यभेदज्ञानरूपस्य अविवेकस्य बाधासम्भवेन प्राचां प्रवादोऽयमनुपपन्नः स्यात्, अतः प्राचां प्रवादस्य उपपत्त्यर्थमपि बुद्धिपुरुषविवेकज्ञानात् परं सामान्यतः आत्मानात्मविवेकः भवतीति मन्तव्यमित्याशयः । बुद्धिपुरुषयोः विवेकं विनाऽपि परिणामित्वापरिणामित्वादिविरुद्धधर्म्मैः आत्मनि सामान्यतो दृश्यानामचेतनानां विवेकं दर्शयति,—"किञ्चे"ति । एतेन, पूर्वं अनुमानेन बुद्धिपुरुषयोः विवेकज्ञानं ततश्च पुनरनुमानेन सामान्यतो दृश्यविवेकज्ञानमिति गौरवमपि निरस्तं भवतीति वेदितव्यम् । प्रकृत्यादिसामान्यविवेके अनुमानं दर्शयति,—"आत्मे"ति । परिणामित्वं प्रकृतितत्कार्य्याणां धर्म्मः, अपरिणामित्वम् आत्मनः धर्म्मः । आत्मनि परिणामित्वं व्यावर्त्तमानं प्रकृत्याद्यभेदं व्यावर्त्तयत् तद्भेदं साधयतीति । "सामान्यतः"—सामान्यधर्म्मेण । "दृश्यविवेकः"—"दृश्येभ्यः" प्रकृत्यादिभ्यः, "विवेकः"—भेदज्ञानम् । "द्रष्टरि"—आत्मनि, चेतने इत्यर्थः । परिणामित्वापरिणामित्वादिविरुद्धधर्म्मैरात्मनात्मविवेकज्ञानं भवतीति स्वमतेन सिद्धान्तमुक्त्वा अद्वैतवादिश्रीमच्छङ्करभगवत्पादादिमतसिद्धं दृग्दृश्यरूपेण आत्मानात्मविवेकज्ञानं दूषयितुं

यत्तु आधुनिका वेदान्तिब्रुवा दृश्यत्वेनैव प्रकृत्यादीनां द्रष्टृत्वेन च प्रकृत्याद्यखिलजडेभ्य आत्मविवेकं मन्यन्ते,—

घटद्रष्टा घटाद्भिन्नः सर्वथा न घटो यथा।
देहद्रष्टा तथा देहो नाहमित्यादिरूपतः॥

---

तन्मतमुपक्रमते,—'यत्त्वि'ति। "आधुनिकवेदान्तिब्रुवा" इति। अद्वैतवादस्यायुक्तत्वसूचनाय तिरस्कारगर्भितं विशेषणमिदं प्रयुक्तम् भिक्षुवर्य्यैः। "आधुनिका" इति पदेन वेदान्तसूत्राणां प्राचीनमतानुसारिस्वकृतविज्ञानामृतादिभाष्यव्याख्यानस्यैव युक्तत्वमुक्तम्। "वेदान्तिब्रुवा"इति—वेदान्तिनमात्मानं ब्रुवते ये ते वेदान्तिब्रुवाः, ये आत्मानं वेदान्तशास्त्राभिज्ञतया वदन्ति न तु वेदान्तं जानन्ति ते वेदान्तिब्रुवाः। श्रीमच्छङ्कराचार्य्यादीनां वेदान्तशास्त्रानभिज्ञत्वमिति भिक्षुपादानामभिमानः। अद्वैतिनां मतमनुवदति "दृश्यत्वेने"ति। अद्वैतवादे स्वयंप्रकाशः आत्मा दृग्रूप एव नतु दृश्यः। ब्रह्मचैतन्ये कल्पिताः अनात्मपदार्थाः दृश्याः। अतः दृग्दृश्यरूपेणैव आत्मानात्मविवेकः सुघटः इतितद्वाक्यार्थः।

"दृश्यत्वेनैव"=प्रकाश्यत्वेनैव। एवकारेण 'स्वसाक्षात्प्रकाश्यत्वपरिणामित्वापरिणामित्वादिहेतूनां व्यावृत्तिः। "प्रकृत्यादीनाम्"—इत्यस्य विवेकमित्यध्याहृतेन सम्बन्धः,—आत्मप्रतियोगिकप्रकृत्याद्यनुयोगिकभेदज्ञानमित्यर्थः। "द्रष्टृत्वेन"—दृग्रूपत्वेन, प्रकाशकत्वेनेत्यर्थः। "प्रकृत्याद्यखिलजडेभ्यः"—प्रकृत्यादिसकलजड़प्रतियोगिकात्मानुयोगिकमित्यर्थः। तथाचेत्थमनुमानद्वयं बोद्धव्यम्,—प्रकृत्यादयः दृग्रूपात्मभिन्नाः दृश्यत्वात्, यथाघटद्रष्टुः भिन्नो घटः। आत्मा दृश्यप्रकृत्यादिभ्यः भिन्नः द्रष्टृत्वात्, यथा घटद्रष्टा घटाद्भिन्न इति। अत्र प्रमाणमाह,—"घट द्रष्टे" त्यादि। "घटस्य"=दृश्यस्य=बाह्यविषयस्येत्यर्थः। "द्रष्टा"=तद्द्रष्टृत्वेन प्रतीयमानः, देहतादात्म्यापन्नः आत्मा, "घटात्"=दृश्यात्। "भिन्नः"=दृश्यप्रतियोगिकभेदवानित्यर्थः यतः स आत्मा, "सर्वथा"=सर्वप्रकारेण, "घटः"=दृश्यघटतादात्म्यापन्नः, न भवति इति यथा, "तथा"=तद्वत् "देहद्रष्टा"=देहादेर्भासकः आत्मा, अपि, "न देहः"—देहाद्भिन्न इत्यर्थः। यतः स आत्मा, "अहमित्यादिरूपतः"—द्रष्टृरूपेण, प्रकाशते इति शेषः।

तन्न, "आत्मा वाऽरे द्रष्टव्य" इत्यादिश्रुतिभिरात्मनोऽपि दृश्यत्वात् । साक्षाद्दृश्यत्वविवक्षया च प्रकृत्यादेरसंग्रहात्, करणद्वारैव तद्दर्शनात् ।

अथैवं कल्पनीयम् आत्मनो वृत्तिव्याप्यत्वमेव दृश्यत्वं श्रुत्यादिभिर्विधीयते न तु प्रकाश्यत्वरूपफलव्याप्यत्वम् । स्वयंप्रकाशस्वरूपस्य

---

पूर्वोक्तम् अद्वैतवादिमतम् खण्डयति, "तन्ने"ति । तन्मतं न युक्तमित्यर्थः । अत्र हेतुं वदति,–"आत्मे"त्यादि । 'आत्मावाऽरे' इत्यादिश्रुतिप्रामाण्यात् आत्मनि अपि दृश्यत्वस्य विद्यमानतया प्रकृत्यादयः आत्मभिन्नाः दृश्यत्वादित्यनुमाने आत्मभेदरूपसाध्याभाववति आत्मनि दृश्यत्वस्य हेतोर्वृत्तेः व्यभिचारात् न प्रकृत्यादिषु आत्मभेदः साधयितुं शक्यते । तथा द्रष्टृत्वेन हेतुना आत्मा दृश्यप्रकृत्यादिभ्यः भिन्नः द्रष्टृत्वात् इत्यनुमानेनापि आत्मनि दृश्यभेदः साधयितुं न पार्य्यते, आत्मनि पक्षे दृश्यत्वस्य सत्त्वेन दृश्यभेदस्य अविद्यमानतया बाधितत्वात् ।

दृश्यत्वशब्देन साक्षाद्दृश्यत्वस्य विवक्षायां नायं दोषः, इत्याशङ्क्य तत्र दोषं दर्शयितुं परोक्तिमनुवदति "साक्षाद्दृश्यत्वविवक्षये"ति । अत्र पक्षे आत्मनो वृत्तिद्वारेण दृश्यत्वात् साक्षाद् दृश्यत्वाभावेन न दोष इत्यर्थः । आत्मनोवृत्तिद्वारेणापि दृश्यत्वस्य अद्वैतवादिनामसम्मतत्वेऽपि यदि अस्माकं सांख्यसिद्धान्तमनुसृत्य एवमुच्यते भवता तथापि न निस्तार इत्यभिमत्यैवमुक्तिर्वेदितव्या । तत्र दूषणमाह,–"प्रकृत्यादौ साक्षाद्दृश्यत्वरूपहेतोरभावात् तेषां पक्षत्वेन संग्रहायोग्यत्वादित्यर्थः । तत्र हेतुमाह,–"करणद्वारैव तद्दर्शनात्"=वृत्तिद्वारा एव तेषां दर्शनादित्यर्थः ।

अद्वैतिनां कल्पान्तरमनुवदितुमुपक्रमते "अथैवमि"ति । "अथ" शब्दः पक्षान्तरोपन्यासद्योतकः । "एवम्"=वक्ष्यमाणरूपम् । तत्कल्पनां दर्शयति,– "आत्मनोवृत्तिव्याप्यत्वमेवे"ति । अस्यायमाशयः,–घटमहं जानामि इत्यादौ घटाकारान्तःकरणवृत्तौ आत्मचैतन्यं प्रतिबिम्बते, तथाच घटाकाराकारितचित्तवृत्तिरज्ञातघटं विषयीकृत्य तद्गताज्ञाननिरसनपुरःसरं स्वगतचिदाभासेन जडमपि घटं भासयति । तदुक्तं,–"बुद्धितत्स्थचिदाभासौ द्वावपि व्याप्नुतो घटम् । तत्राज्ञानं धिया नश्येदाभासेन घटः स्फुरेत् ॥" इति । यथा दीपप्रभामण्डलम्

प्रकाशापेक्षाविरहात् । अतोऽत्र दृश्यत्वं प्रकाश्यत्वं, तच्च आत्मनि नास्तीति ।

---

अन्धकारगतघटादिकं विषयीकृत्य तद्गतान्धकारनिरसनपुरःसरं स्वप्रभया तदवभासयति । आत्माभिन्नब्रह्मसाक्षात्कारकाले तु अहं नित्यशुद्धबुद्धमुक्तसत्यस्वभावपरमानन्दानन्ताद्वयं ब्रह्मास्मीति अखण्डाकाराकारिता चित्तवृत्तिरुदेति, सा तु चित्प्रतिबिम्बसहिता सती प्रत्यगभिन्नमज्ञातं परं ब्रह्म विषयीकृत्य तद्गताज्ञानमेव बाधते । अज्ञानबाधने कारणबाधात् चित्तवृत्तिरपि बाधिता भवति । तत्र वृत्तौ प्रतिबिम्बितचैतन्यमपि यथा प्रदीपप्रभा आदित्यप्रभावभासनासमर्था सती तया अभिभूता भवति, तथा स्वयंप्रकाशमानप्रत्यगभिन्नपरब्रह्मावभासनानर्हतया तेनाभिभूतं सत् सोपाधिभूताखण्डवृत्तेर्बाधितत्वात् दर्पणाभावे मुखप्रतिबिम्बस्य मुखमात्रत्ववत् प्रत्यगभिन्नपरब्रह्ममात्रं भवति । अतः आत्मनि वृत्तिजन्यप्रकाशरूपफलाभावेन स न दृश्यः, अपि तु दृक्स्वरूप एव । यच्च आत्मा वारे इत्यादिना आत्मनः दृश्यत्वमुक्तम्, तत्तु वृत्तिव्याप्यत्वरूपमेव । अतएव वृत्तिव्याप्यत्वफलव्याप्यत्वाभ्यां "मनसैवानुद्रष्टव्यम्" "यन्मनसा न मनुते" इत्यनयोः श्रुत्योरव्यविरोधः । आत्माऽभिन्ने ब्रह्मणि वृत्तिव्याप्यत्वाङ्गीकारेण फलव्याप्यत्वप्रतिषेधप्रतिपादनात् । उक्तं च,—"फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निराकृतम् । ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता ॥ इति" । "स्वयं प्रकाशरूपत्वान्नाभास उपयुज्यते" इति च । "वृत्तिव्याप्यत्वम्"=अखण्डात्माकाराकारितान्तःकरणवृत्तिविषयत्वम्, तादृशवृत्तेः नाहमात्मानं जानामीत्यादिरूपाज्ञाननाशार्थमपेक्षितत्वाद् आत्मनस्तद्व्याप्यत्वम् । "श्रुत्यादिभिः"=आत्मा वा अरे इत्यादिश्रुतिभिः, "य एवं वेत्ति पुरुषमि"त्यादि स्मृतिभिश्च । "प्रकाश्यत्वरूपफलव्याप्यत्वम्"=आत्माकाराकारितचित्तवृत्तौ सत्यां आभासचैतन्यजन्यप्रकाशरूपफलशालित्वम् । "स्वयं प्रकाशरूपस्य"=अवेद्यत्वे सति अपरोक्षव्यवहारयोग्यस्य । "प्रकाशापेक्षाविरहात्"=सूर्यप्रकाशे प्रदीपप्रकाशापेक्षाविरहवत् स्वयंप्रकाशात्मनि आभासरूपप्रकाशापेक्षाविरहात् । "अतः"=आत्मनि प्रकाशव्याप्यताभावात् । "अत्र"=प्रकृत्यादयः आत्मभिन्नाः दृश्यत्वादिति न्यायवाक्ये । "दृश्यत्वमि"त्यस्य अर्थः "प्रकाश्यत्वम्"=प्रकाशजन्यफलशालित्वमित्यर्थः । "तच्च"=प्रकाश्यत्वम् "आत्मनि"=आत्मभेदरूपसाध्याभाववति, विपक्षे । "नास्ति"=विपक्षवृत्तिर्न भवति, नातो व्यभिचार इत्यर्थः ।

तदपि तुच्छम् । यथाह्यहमित्यनुभूयमानोऽप्यात्मा चैतन्याख्य-फलव्याप्यो न भवतीति भवद्भिरुच्यते, तथैव बौद्धैरपीष्यते, सुखदुःखादिमत्त्वेनापि बुद्धिः स्वप्रकाशतया चैतन्यव्याप्या न भवतीति । तथा चात्मनीव बुद्धावपि दृश्यत्वासिद्ध्या दृश्यत्वेन रूपेण बुद्धिविवेकोऽत्यन्तापेक्षितोऽपि न सिध्यतीति । भाष्यादिषु चान्यान्यत्र दूषणान्युक्तानीति दिक् ।

---

अद्वैतवादिनां सिद्धान्तमिमं दूषयितुमुपक्रमते,—"तदपि तुच्छमि"ति "तत्"=अद्वैतवादिनां पूर्वोक्तरूपकल्पनम्, आत्मनः फलव्याप्यत्वाभावेन अदृश्यत्वकल्पनमित्यर्थः । "तुच्छं"=हेयम्, दुष्टमित्यर्थः । यत्र चैतन्यव्याप्यत्वं नास्ति तत्र दृश्यत्वाभावाङ्गीकारे बौद्धमते बुद्धेः स्वप्रकाश्यतया चैतन्यव्याप्यतायाः अभावेन दृश्यत्वाभावात् ततः आत्मनः विवेको न स्यात् । अत्यन्तापेक्षितश्च मोक्षे बुद्ध्यात्मनोः विवेकः इतीदं दूषणम् अद्वैतिकल्पनस्य तुच्छत्वे हेतुतया आह,—यथाह्यहमि"ति । 'यथा'शब्दः दृष्टान्तसूचकः । 'अहमि'ति अनुभवाकारप्रदर्शनम् । "अनुभूयमान" इत्यनेन अनुभवविषयत्वप्रदर्शनेन आत्मनि दृश्यत्वसम्भावना उक्ता । "अपि" शब्दः अनुभवविषयत्वचैतन्याख्यफलव्याप्यत्वाभावयोः विरोधसूचकः । "भवद्भिः"=अद्वैतिभिः । "सुखदुःखादिमत्त्वेने"त्यनेन अहं सुखी इत्यादिरूपेण अनुभवविषयता दर्शिता । "स्वप्रकाशतये"ति चैतन्यव्याप्यत्वाभावे हेतुः । "तथा च"=बुद्धौ चैतन्यव्याप्यताभावे सति ।

ननु भवता बौद्धसिद्धान्तमाश्रित्य दूषणमुक्तम्, तेन का नो हानिरित्याशङ्क्य प्रवचनभाष्ययोगवार्त्तिकब्रह्मसूत्रभाष्यविज्ञानामृतादिषु उक्तानि दूषणानि स्मारयति भाष्यादिष्विति । "अत्र"=अद्वैतवादिसिद्धान्ते । 'अन्यानि दूषणानि'=एतद्ग्रन्थोक्तदूषणव्यतिरिक्तानि दूषणानि ।

विशेषजिज्ञासूनां तृप्तये तान्यत्र समुद्ध्रियन्ते,—यथोक्तं ब्रह्मसूत्रभाष्ये,—"आधुनिकास्तु 'यतो वाचो निवर्त्तन्त' इत्यादिवाक्यैरनुभवाख्यफलव्याप्यत्वं प्रतिषिध्यते 'मनसैवानुद्रष्टव्यमित्यादिभिश्च अज्ञाननाशाय ब्रह्मणि वृत्तिव्याप्यत्वं स्वीक्रियते इत्यविरोध इत्याहुः । तन्न एतादृशकल्पनायां प्रमाणादर्शनात् । किं च व्यवहारत्वावच्छेदेनैवानुभवविषयत्वमेव प्रयोजकं बुद्धिवृत्तिगोचरव्यवहारेऽनवस्थाभयेन वृत्तिविषयत्वस्याप्रयोजकत्वाद् घटादिभानार्थे चेतने ततसम्बन्धायैव वृत्तिसिद्धेः, नतु घटादिव्यवहारार्थमपि तस्या अपि व्यवहारजनकत्व-कल्पनेन च

जयदेवः ।—ब्रह्मन् ! विरम प्रमादात्
कुरुष्व कार्य्यं सुविचिन्त्य पूर्व्वं
यथानुतापो न दहेद्भवन्तम् ।

देवशर्म्मा ।-अलं विचिन्त्य; क च मेऽनुतापः
कन्या सुपात्रे पतिता यदि स्यात् ?
नद्यामधः सागरसङ्गतायाम्
अद्रिर्महान् किं भजतेऽनुतापम् ?
अभ्यर्थये, मास्तु भवद्विकल्पः
प्रतीच्छ कन्यां गुणराशिशुल्काम् ।
अभ्यर्थना वात्र कथं क्रियेत ?
वाचापि दत्ता विधिनैव दत्ता ।
एषा हि पत्नी भवतस्तदेतां
गृहाण प्रेम्णा, त्यज वा वनेषु
स्वातन्त्र्यमस्तीह तवैव कृत्स्नम् ।
पद्मावति ! प्राप्य पतिं वरेण्य-
मशोचनीया हि ममासि पुत्रि !
पतिर्गुरुः स प्रणयेन पत्न्या
कायेन वाचा मनसा च पूज्यः
स एव मोक्षः, स च देवमूर्त्ति-
स्तस्यैव सेवा परमार्थदात्री ।
तस्यैव पुण्ये तव चापि पुण्यं
सुखे सुखं स्यादसुखञ्च दुःखे ।
आशीर्मदीया जगतीतलेऽत्र
युवामपापौ सुखिनौ करोतु ।

सुव्रता ।—जाते ! पद्मावति !
सुष्ठूपदिष्टासि तवैव पित्रा
नातः परं किञ्चन कथ्यमस्ति ।
तथापि वच्मि,—प्रभुरेष नान्यः
सदैतदादेशकरी विनीता ।
सुखेन कालं गमयेः न तेऽस्तु
दुःखञ्च शोको रजनी विनिद्रा ।
सिन्दूरविन्दुर्भृशमुज्ज्वला ते
सीमन्तमध्ये नियतं विभातु ।

पद्मावती ।—अम्ब ! शिरसि निहितो युवयोरुपदेशः ।

जयदेवः ।—पराशर ! पराशर ! सखे ! किमिदमापतितम् ? आजन्मनो यल्लक्ष्यीकृत्य जीवितं, न जाने तदज्ञातपूर्व्वेण केन दारुणेन विधिना मामुपहसतेव सहसा विपर्य्यासं नीतम् । नातः परं जयदेवो जीवति। प्राक्तनो जयदेवः,—यः सन्न्यासमेव जीवितस्य लक्ष्यं कृत्वा धन्यमात्मानममन्यत,—स तु क्वापि गतः अनन्ते तिमिरे निलीनो नष्टो मृतो वा । अयमधुना नवः कश्चित् समुज्झित-प्राक्तनलक्ष्यः संसारनाट्ये विषयिणो भूमिकामभिनेतुं तस्य स्थाने प्रादुर्भूतः । हा दैव ! हा निष्कृप ! दारुणेन त्वया कथं विषयाणामामिषीकृतोऽयं जनः ?

पराशर ।—सखे ! अलमनर्थकेनोद्वेगेन । किं नाम वृथैवात्मानं क्लेशयसि ? दुःखे, सुखे, विपदि, सम्पदि सदैवात्मा सुखी करणीयः आत्मनि सुखमये जगत् सुखमयं प्रतिभाति । को नाम भगवदिच्छामतिक्रमितुं प्रभवेत् ? मङ्गलमयोऽसौ मङ्गलमेव विदधाति, न पुनरमङ्गलम् । यदीदमेव विधेर्विधानं भवेत्,—तदा का चिन्ता का वा विचारणा,—परिपालनीयं खल्वेतत् । अवनतेन शिरसा परिपालनीया भगवदाज्ञा । सैव मङ्गलजननी ।

जयदेवः ।—भवतु, परिपालनीया भगवदाज्ञा । के वयं तद्विधानस्य युक्तायुक्तत्वनिरूपणे ? आर्य्य ! देवशर्म्मन् ! गृहीता भवतः कन्यका इतः प्रभृति नवीनो जयदेवोऽनवीनतया नवीनं जीवनं यापयिष्यति । सागरे बुद्बुदोपमाः खलु जीवाः, कदा जायन्ते कदा नश्यन्ति कस्तस्य निर्णयः ? तत् क्षणस्थायिनि जीवने कृतं विधातृविधानोल्लङ्घनचेष्टया । यद्विधीयते तेन विधीयतां नाम, यदाऽऽगच्छति सुखं दुःखं वा, आगच्छतु का हानिः ? सर्व्वं हर्षेण सहनीयं, सर्व्वं हास्येन वहनीयं, सर्व्वं प्रेम्णा अभिनन्दनीयम् ! भगवन् ! निखिलजगत्-परिचालक ! स्वामिन् ! सर्व्वथा त्वमेव प्रमाणम् । तवैव इच्छा सफलतां गच्छतु । मङ्गलमयस्य मङ्गलमयी इच्छा अस्माकं शिवं दिशतु । विजयतां विजयतां त्वन्नाममहिमा । परमेश ! परमेश ! अहं त्वदीय एव ।

"शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ।"

एतेषां प्रणेतारः सर्व्वे एव किं कवियशोभाजः, उत द्वावेको वा लब्धयशाः तद्वयं निर्णेतुं नालम्। स्वीक्रियते हि एतेषूल्लिखितेषु काव्येषु प्रशंसायोग्यमस्ति किञ्चित् काव्यम् । परन्तु कालिदासस्य मेघदूतं निकषा प्रापितञ्चेत् दूत इव तत् नीरसं हीनप्रभञ्च प्रतिभाति ।

केचिदिदमनुमन्यन्ते यत् अनुकृतं किञ्चिद्वस्तु आदर्शभूतमप्यतिक्रामति । यथा भारविकवेः किरातार्जुनीयमनुसृत्य विलिखितं माघकवेः शिशुपालवधकाव्यं किरातार्जुनीयमपि आदर्शभूतमतिक्रम्य गतम् । वाक्येऽस्मिन् विश्वासयोग्यता लेशतोऽपि विद्यते किं न वा तत्रात्र वयं बाहुल्यभयादालोचयामः ।

संक्षेपत इदमेवोच्यते यत्–माघकाव्यस्य पठितारः केचन माघभक्ताः

"तावद्भा भारवेर्भाति यावन्माघस्य नोदयः ।
उदिते नैषधे काव्ये क्व माघः क्व च भारविः ॥"

इत्येताभि र्वचोभङ्गिभिर्माघं तत्काव्यञ्च प्रशस्य परत एव सगर्व्वं प्रकाशयन्ति "काव्येऽस्मिन् शिशुपालवधे कालिदासस्यानुपमा उपमा, भारवेर्गौरवकरमर्थगौरवम् श्रीहर्षस्य सुललितं पदलालित्यं–एते त्रय एव गुणाः सन्ति" इति । तथाचोक्तम्–

उपमा कालिदासस्य भारवेरर्थगौरवम् ।
नैषधे पदलालित्यं माघे सन्ति त्रयो गुणाः ॥"

वस्तुतस्तु ये तावत् गुणग्राहिणः, येषां विचारशक्तिरतीव तीक्ष्णा, ये हि जानन्ति पौर्व्वापर्य्यमस्य, क्षमाश्च गुणावधारणे, तैस्तत्क्षणादेव श्लोकमेकं विरचय्य भारविपक्षपातिता प्रदर्शिता । तथा हि–

"भारती भारवेर्भाति यावन्माघस्य नोदयः ।
उदिते तु पुनर्माघे भारवे र्भा रवेरिव ॥"

प्रागुद्दिष्टेषु काव्येष्वपि स एव परामर्शः । मेघदूतानुकारि अपि नैकमपि तेषामादर्शमतिक्रम्य गतम्, किं बहुना समकक्षमपि न जातम् । पिकदूत-पदाङ्कदूतयोः श्लोकमुद्धृत्य प्रदर्श्यते चेत्तदैव तेषामुत्कर्षोऽपकर्षश्च हृदयङ्गमः स्यात् ।

पदाङ्कदूते हि–कृष्णविरहातुरा श्रीमती राधा प्रियमुद्दिश्य कालिन्दीतटदेशं ययौ । तत्र तु न दृष्ट्वा प्राणप्रियं काननपथेन प्रत्यागच्छन्ती तत्र तस्य पदाङ्कमवलोक्य तं पदाङ्कमेव दूतं विधाय कृष्णमभिप्रेषयितुमियेष । तथाहि–

चेतः प्रस्थापितमणुतया दौत्यकर्म्मोपयुक्तं
तत्रैवास्ते सुरहरपदस्पर्शमासाद्य मुग्धम् ।
आकाङ्क्षेयं तनुगुरुतया नैव गन्तुं समर्था
कोऽन्यो गच्छेत् वद मधुपुरीं गोपिकानां हिताय ॥

( अस्यार्थः ) हे पदाङ्क ! त्वां विना नास्ति मे परः कश्चित् सहायकः योऽधुना मधुपुरीं गत्वा प्रियाय मत्सन्देशं प्रापयिष्यति । यन्मम दौत्यकर्म्मणि उपयुक्तं मनः आसीत् तदपि ( मनः ) अधुना मदन्ते न विद्यते, मनो मेऽतिलघुतया प्रागेव प्रियसमीपं गतम् । तन्मे मनः तत्र सुरनरवाञ्छितं सुरहरपदमासाद्य मुग्धं जडमिव कालं नयति । न तत् पुनः प्रत्यागमिष्यति । यदि त्वया उच्यते मदीयां आकाङ्क्षां दूतीं विधाय प्रेरयिष्यामीति तत्रापि हे पदाङ्क ! विद्यते महती प्रतिबन्धकता । आकाङ्क्षा मे अतीव स्थूलशरीरा, ततो गुरुत्वात् सा पादमेकमपि गन्तुं न शक्नोति । अतस्त्वामृते कोऽपरः मधुपुरीं गमिष्यति ?

श्लोकस्यास्य तात्पर्य्यं प्रकृत्यैव मनोरमम् । किन्तु भाषया रीत्या, सरलतया, मधुरतया च श्लोकोऽयमेतादृशाः अपरे वा श्लोका न मेघदूतश्लोकानतिवर्त्तितुं शक्नुयुः । श्लोकस्यास्य प्रथमपादीय-प्रथमभागे यतिभङ्गदोष इव परिलक्ष्यते । तदनु प्रथमचरणे 'अणुतया' तृतीयचरणेऽपि 'गुरुतया' इति समानधर्म्माक्रान्त-'ता'-प्रत्ययान्तपदप्रयोगात् नष्टं रचनाभङ्ग्याः सौन्दर्य्यम् । एवमन्येऽपि बहवो दोषा बहुश एव बहुश्लोकेषु विराजन्ते । अस्यैव पदाङ्कदूतस्य सन्ति कति श्लोका दार्शनिकतत्त्वप्रमलङ्कृताः । एतेनैव हि वैशिष्ट्येन काव्यमिदं मेघदूतात् स्तोकं भिद्यते । पदाङ्कदूतस्य "प्रायः सत्यं मतमिदमहो कारणं कार्य्यमेव" (७म श्लोकः ।) "व्याप्यज्ञानाद् व्रजकुलभुवां व्यापकस्यापि सिद्धिः" ॥ २१ ॥ नाप्रत्यक्षं प्रमितिकरणं वाक्यमेतन्न मानम् ॥ ४३ ॥ इत्येतेषु श्लोकेषु तर्कशास्त्रस्य गूढतमा चिन्ता लुक्कायिता विद्यते ।

मेघदूते हि काव्ये दार्शनिकतत्त्वं तत्त्वत एव नास्तीत्यतथ्यम् । यतस्तु—

"धूमज्योतिःसलिलमरुतां सन्निपातः क्व मेघः
सन्देशार्थाःक्व पटुकरणैः प्राणिभिः प्रापणीयाः ।
इत्यौत्सुक्यादपरिगणयन् गुह्यकस्तं ययाचे
कामार्त्ता हि प्रकृतिकृपणा श्चेतनाचेतनेषु" ॥ ५ ॥

श्लोकोऽयं द्वयोःक्व शब्दयोः प्रयोगात् विषमालङ्कारेण, तथा चतुर्थचरणस्या-

तुलनीयेनार्थान्तरन्यासेन भूषितः । नैतावदेव पर्य्याप्तं । दार्शनिकतापि अत्र गोपायिता तिष्ठति ।

"पृथिव्यां वह्निषु निक्षिप्तात् सर्पिःसमिदादिसरसवस्तुप्रकराद् धूमो जायमानः प्रभञ्जनपदवीमध्यारुह्य क्रमेण बहुदूरमुपसर्पति, तेजःसलिलवायुसम्पर्केण च किमपि वैजात्यमाश्रित्य मेघेति नामान्तरमासीदति । दुर्लभमिदं विज्ञानं काव्यजगति" ( गुरुनाथ विद्यानिधिः ) ।

वस्तुतस्तु "धूमज्योतिःसलिलमरुता"मितिपदं स्मारयति नः पञ्चभूतानि पञ्चतन्मात्राणिच, ततश्च कार्य्यकारणसम्बन्धः, प्रकृतिपुरुषसम्बन्धश्च सुतरामेव नः स्मृतिपथे पात्यायते । पिकदूतस्य प्रतिपाद्यं पदाङ्कदूतस्येव । भेदस्तु केवलं पिकपदाङ्कयोः । पदाङ्कदूते हि अचेतन एकः पदाङ्कदूतत्वेनारोपितः, पिकदूते तु सचेतनः कश्चित् कोकिलः श्रीमत्या दूतः कृतः । पदाङ्कदूते अचेतनस्य पदाङ्कस्य दूतकल्पनात् कविरस्मान् मेघदूतस्य—"कामार्त्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु" इति स्मारयति । पिकदूते तु न तथा । अतोऽस्य नामकरणेऽपि काऽपि त्रुटि वर्त्तते इति प्रतिपन्नं भवति ।

"कान्ता शीर्णा मलिनवदना क्षीणचार्व्वङ्गयष्टि-
र्दीप्तप्रेमा सुरभिमलयप्राणवह्निविशान्ते ।
शाखासीनं मधुरलपितं कोकिलं वीक्ष्य कश्चित्
माधावेशाज्जड़ितरसना वक्तुकामावतस्थे ॥

( पिकदूतम् ४ श्लोकः )

कवितायामस्यां कृष्णविरह निपीड़िताया राधाया विरहावस्था सूच्यते । परिमाप्यतामनया सह पाठकाः ! मेघदूतस्य यक्षपत्न्या विरहावस्था । तत्र च वयं पश्यामः ।

"तां जानीयाः परिमितकथां जीवितं मे द्वितीयं
दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम् ।
गाढ़ोत्कण्ठां गुरुषु दिवसेष्वेषु गच्छत्सु बालां
जातां मन्ये शिशिरमथितां पद्मिनीं वान्यरूपाम् ॥

उत्तरमेघे २२ श्लोकः ।

साभ्रेऽह्नीव स्थलकमलिनीं न प्रबुद्धां न सुप्ताम् ॥

उत्तरमेघे २९ श्लोकः ।

वर्णनयानया यथा विरहावस्थाया लक्षणानि साक्षाद् अक्षिभिरिव लक्ष्यन्ते तथाऽत्र काव्यकलायाः परा कोटिरपि नितरामेव चेतो मोहारयति । रोगनिदानमुपलभ्य विदग्धानां भिषजां भेषजसन्धानमिव महाकवेरत्र यथास्थाने रससञ्चारः इति महामोदकारणम् ।

मेघदूतस्य प्रारम्भे "कश्चित्"-शब्द-दर्शनात् "खण्डकाव्यमुखं कुर्य्यात् कश्चिदित्यादिभिः पदैः ॥" इत्ययं नियमः काव्येऽस्मिन् अक्षरतः अनुसृत इति तर्कयामः । किन्तु पिकदूते पदाङ्कदूते वा न स नियमः प्रतिपालितः । यद्यपि पदाङ्कदूतस्य प्रथमश्लोके प्रथमचरणांशे "काचित्" शब्दस्य व्यवहारो दृश्यते, तस्यापि ग्रन्थारम्भेऽव्यवहारात् कविना नियममुल्लङ्घ्य गत इति वचनावसरो विद्यते अनुसन्धित्सूनां । तथाहि—

"गोपीभर्त्तुर्व्विरहविधुरा काचिदिन्दीवराक्षी ।" इत्यादि ।

पिकदूते १म श्लोकः ।

पिकदूतस्य प्रारम्भे तु नास्त्येव किञ्चित् । तथाहि—

"अक्रूरोऽसौ हृतमधुरिपुः कंससन्देशहारी ॥"

इत्यादि ।

पिकदूते १म श्लोकः ।

केचिदित्थं तर्कयन्ति यत् मेघदूतस्यादौ "कश्चित्" शब्दस्य व्यवहारः कुतश्चिद् विशिष्टकारणवशादेव कृतः । ग्रन्थारम्भे कश्चित्-शब्दप्रयोगादृते खण्डकाव्यमेव न भवेदिति न, ऋतुसंहारादावानर्थक्योपपत्तेः । अतः कश्चिदित्यादिपदव्यवहारं विनापि पिकदूतादीनां खण्डकाव्यत्वम् । अस्तु तत्, पिकदूतादीनां कथा वर्ज्जयित्वा मेघदूते खण्डकाव्यस्यापरेऽपि नियमाः संरक्षिताः ।

न नामग्रहणं कुर्य्यात् कृपणस्य गुरोस्तथा ।
अभिशप्तस्य चान्यस्य मातापित्रोर्व्विशेषतः ॥

इति नियमात् काव्येऽस्मिन् यक्षस्य ( अभिशप्तस्य ) नामनिर्द्देशोऽपि न कृतः । मातापित्रोर्विशेषत इत्यत्र "ज्येष्ठपुत्रकलत्रयोरिति:" पाठान्तरम् अपरञ्च—

भर्त्तुराज्ञां न कुर्व्वन्ति ये च विश्वासघातकाः ।
तेषां नामापि न ग्राह्यं शास्त्रस्यादौ विशेषतः ॥

अतएव हि कारणात् ग्रन्थादौ यक्षस्य नामनिर्द्देशो न कृतः । अस्त्यत्रापि मनोहारिणी काचित् किंवदन्ती ।

## (मेघदूतारम्भे 'कश्चित्'-शब्दव्यवहारकारणम्, कवेर्जीवनी च)

ननु मेघदूतारम्भे "कश्चित् कान्ताविरहगुरुणा" इत्यादौ कश्चित्शब्द-व्यवहारस्य, तथा रघुवंशारम्भे "वागर्थाविव संपृक्तौ" इत्यत्र वाक्शब्द व्यवहारस्य, तथा कुमारसम्भवे "अस्त्युत्तरस्यां दिशि देवतात्मा" इत्यादौ ग्रन्थप्रारम्भे 'अस्ति' शब्दप्रयोगस्य किं बीजमिति पृच्छावतामिदमेव वक्ष्यमाणमुत्तरम् । अत्र च कवेर्जीवनवृत्तान्ता अनुकूलतामेष्यन्ति नः ।

देशान्तरप्रसूतानां भूविश्रुतानां प्राचीनमनीषिणामिव कवेः कालिदासस्यापि जीवनवृत्तान्तः ध्वान्तसमाच्छन्ने कालगह्वरे लुक्कायितो विद्यते। नाद्याप्यत्र किञ्चित् प्रामाण्यमैतिहासिकविवरणमस्माभिरधिगतम् । प्रवर्त्ततेऽस्मिन् कालिदास-जीवनीविषयिणी बहुधा किंवदन्ती, काव्यान्तर्गतविविधवस्तुवर्णनासु ये केचिदाभानकाः कवेर्जीवनस्य चरित्रस्य चोपलभ्यन्ते तैः सह प्रचलित-जनश्रुतीनां कियान् सम्पर्को विद्यते तदेवायतो दर्शयामः ।

सन्ति हि श्रीहर्षप्रणीत-नैषधचरितस्य सर्गान्तश्लोकेषु कवेर्मातापितृपरिचयादयः । तद्यथा—

> श्रीहर्षं कविराज-राजिमुकुटालङ्कारहीरः सुतं ।
> श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ॥ इत्यादि ॥

यद्यपि कालिदासस्य एकस्मिन्नपि ग्रन्थे नास्ति तस्य मातुः पितुर्वा नामोल्लेखः न वा वासस्थानपरिचयः, तथापि तस्य मेघदूतोक्तवर्णनासु रघुवंशान्तर्गतवर्णनासु च उद्दृङ्कितानि कति स्थानानि तं उत्तरप्रदेशावासवासिनमिति प्रतिपादयन्ति ।

यक्षस्य गमनवर्त्मनिर्द्देशव्यापारे कविना काव्येऽस्मिन् (मेघदूते) गिरिनदी-वनोपवन—ग्राम-नगर जनपद-देवालय-हिमालयोज्जयिनी-कैलासालका-यक्षभवनादीनां वर्णना कृता, यक्षपत्न्या विरहावस्थापि सरलया सुललितया च भाषया अस्माकं मानसनेत्रसविधे समुपस्थापिता । प्रियाविरहाकुलितहृदयो यक्षः सुदीर्घान् अष्टौ मासान् कथं कथमपि गमयित्वा कृशो मलिनश्च सञ्जातः । लुप्तं तस्य शरीरसौन्दर्य्यं, शीर्णतामभजत तस्य ललितं वपुः । सच इदानीं "कनकवलयभ्रंशरिक्तप्रकोष्ठः" सन् आषाढस्य प्रथमदिवसे नवीनं मेघोदयं गगने निरीक्ष्य तमचेतनमेव मेघं प्रियायाः सकाशे दूतरूपेण प्रेषयितुमियेष । कामान्धत्वाद्धि तस्य नासीत्तदानीं चेतनाचेतनसंविज्ञानम् ।

तथाहि—"कामार्त्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु ।"

"नैव पश्यति जात्यन्धः कामान्धो नैव पश्यति ।"

"त्वरमाणश्च भीरुश्च लुब्धः कामीच याचकः ।"

विरहिणस्तस्य मेघस्य इमामवस्थामालोच्य सूरिणा मल्लिनाथेनोक्तं—"सीतां प्रति रामस्य हनूमत्सन्देशं मनसि निधाय मेघसन्देशं कविः कृतवान् ।" अत्र च अयमपरमपि प्रमाणं मल्लिनाथस्य टीकात उद्धरामः ।—

"इत्याख्याते पवनतनयं मैथिलीवोन्मुखी सा ।"

इत्यादि । उत्तरमेघे, ३७ ।

टीकाकारस्य मल्लिनाथस्य कल्पनामिमां विहाय अपरे केचिद् अन्यविधं कल्पयन्ति । मेघदूतस्य प्रतिपाद्यविषयेण साकं कवेर्जीवनस्यापि काचिदविस्पष्टा छाया स्थाने स्थाने चित्रिता परिलक्ष्यते । स्वकीयजीवनस्य घटनामवलम्ब्य अनेके एव कवयः अनेकानि काव्यानि रचितवन्तः । विद्यतेऽत्र विश्वसाहित्येषु भूरिनिदर्शनम् । इदानीन्तने वङ्गीयकविसमाजेऽपि तादृशी चेष्टा नासुलभा । अतः इदमेव प्रतीयते यत् कविरेकदा केनापि कारणेन सुदीर्घं प्रियतमाविरह-मसहत । तस्मिन् विरहकाले एव स काव्यमिदं रचितवान् इति च प्रतीयते । अङ्गलभाषावित् कश्चित् विपश्चित् अङ्गलभाषया मतमिदं समर्थयन् लिखति—

( क्रमशः

## कस्यचिद्यतेः तच्छिष्यस्य च ।

### ईशस्य सर्वपक्षपातित्वम् ॥

अयि सखे, सर्वज्ञस्य सर्वशक्तिमत ईश्वरस्य लीलेयं न केनापि विज्ञातुं शक्यते । प्राणिनां सुखदशा दुःखदशा च अल्पधियामस्माकं कथं ज्ञातव्या भवेत् स्थूलधियां जनानामियमीशलीला नीतिविरुद्धेति भासमाना विचित्रा विविधा च विद्यते । तस्मात् केषांचित् विरुद्धेव भासमाना नियतिकृता सर्व-जनक्षेमकरणायैव भवतीति मन्तव्यं धीमता जनेन । नात्र दैवमुपालभ्य किमपि फलं पुंसां भवति । यतः तत्तत्कर्म्मानुसारिणी बुद्धिः प्रवर्त्तते जनानां, तदनुरूप-फलदायिनी च भवति । अत्रविषये ममानुभवमेव तुभ्यं विवृणोमि तव दैव-भक्तिदार्ढ्याय ।

यतिवर आह । अहं कदाचित् केनचित् शिष्येण सह प्रत्यहं यात्रां कुर्वे-णासम् । मध्येमार्गं कस्यचिद्धनिकस्य प्रभोर्मन्दिरं निवासायासदं । तत्र च मां

वीक्ष्य तेन प्रभुणा सोपचारं विधिवच्च भिक्षाप्रदानं व्यधायि । भिक्षाप्रदाने च तेन साहस्मुपयुक्तानि पात्राणि सर्वाण्यपि कनकमयान्येवासन् । एवं तेन समुपचरितोऽहं शिष्येण सह तां रात्रिं तत्र नीत्वा प्रातः यथापुरं यात्रायै प्रस्थायागच्छम् ।

एवं गच्छतः मम पथि महती वृष्टिरासीत् । अतिशीतो वायुश्चाववौ । सायंसमयश्च समागत आसीत् । ततश्च सर्वत्र तमः प्रासरत् । तस्मात् तं दिवसं यत्रकुत्रापि यापयितुमभिलषन् शीतार्त्तः क्षुधार्त्तश्च व्यचारयम् । शिष्येण सह संभाषणं कर्तुमपि मे मनः नासीत् । यतः पूर्वेद्युः सोपचारं मां भिक्षाप्रदानेनोपचरितवतो धनिकस्य गृहात् कनकमयं किमपि पात्रं मुषित्वा समागत इति तद्भाण्डदर्शनेन व्यभावयम् । सोऽपि न किमपि तं विषयं अवदत् ; अहमपि तूष्णीमेवातिष्ठम् ।

एवं विचिन्त्य गच्छतो मम किमपि गृहं नयनपथं प्राप्तमासीत् । तमोबहुलतया गमनाशक्तश्च तत्रैव गृहे वस्तुमभिलषन् शिष्येण साकं तद्भवनद्वारमासाद्य पिहितं कवाटमुद्घाटयेति मुहुरुदक्रोशम् । एवमुद्घुष्टेऽपि न कोऽपि कवाटमुदघाटयत् । शीतार्त्तो बहिः स्थातुमपारयन्नहं बहुश आहूयम् । ततश्च कश्चिद्वृद्धः तस्माद्भवनान्तरात्-अतिकृशं दीपमेकं प्रज्वाल्यागत्य कवाटमुदघाटयत् । अहं च तस्य वृद्धस्य वचसा तन्मनोभावं कृपणतां च विभाव्यानन्यगतिकतया तदन्तः प्रविश्यातिष्ठम् ।

ततस्स वर्षीयान् दौर्मनस्येन कदन्नं किमप्यल्पं सशिष्याय मह्यं प्रायच्छत् । एवं भुक्तवति मयि किञ्चित् विश्रान्ते च सति वृष्टिरशाम्यत्, शीतादिकं व्यनश्यत्, निर्मलचन्द्रिका च रजनी अभूत् । तदा च स वृद्धः "वर्षशमनमासीत् खलु इतो गृहाद्युवां यत्र कुत्रापि गच्छतमित्यवादीत् । ततश्च तद्वचनेन अहं तदैव प्रातिष्ठे । तदा च स शिष्यः तद्गृहात् प्रस्थानकाले तं गृहपतिं वृद्धं स्वभाण्डस्थितकनकभाजनप्रदानेन समभावयत् । संभाव्य च मामन्वगमत् ।

तदाचाहं व्यचिन्तयम् । अहो जगदीशस्य विचित्रा पालनरीतिः । कृपणस्य कनकभाजनप्राप्तिः दानशीलस्य प्रभोः विभवनाशश्च । कथमीदृशी भवति जगदीशस्य प्रवृत्तिरिति ।

एवं चिन्तयन्नेव सशिष्योगच्छन् सायंसमये कञ्चनापरं ग्रामं प्राप्य तत्र केनचित्प्रभुणा सभक्तिकं सादरं विधिवद्भोजितस्समुपचरितो रात्रिं तत्र गृहे नीत्वा प्रातः प्रस्थातुकामोऽभवम् । ( क्रमशः । )

# ब्रह्मव्याकरणोपनिषत् ।

ॐ ब्रह्मणे नमः । त्रिधः पुरुषः । मानवादय अङ्गानि । एकस्य अन्येन उत्तमर्णत्वमधमर्णत्वञ्च । ऋणानि पञ्च । देवपितृर्षिनरभूतानि । तद्ऋणानि शोधनीयानि । भृत्य-पुत्र-शिष्य-मातृवत्त्वेन । सेवया तर्पणेन ब्रह्मचर्येण न्याय-दण्डेन स्नेहाश्रयाभयजलदानेनेति । सूर्य चन्द्रव्योम- वायु-मेघाग्नि -जल- पृथ्वी धनादीनि । अग्निष्वात्तादयः मरीच्यादयः । धातृ दातृ-जनयितृ-रक्षयित्रादयः । गोषट्पदधान्याश्वत्थसुवर्णादीनि । दिव्य- भौत--मनोरमाः । शब्दस्पर्शरूप-रसगन्धाश्च । एते जीवनार्थका भोगार्थकाश्च । विशेषेण घृतं वित्तं दक्षिणा अन्नं जलं षोड़शोपचाराश्च सर्वत्र साधारणऋणशोधविषयाः ॥ इति प्रथमा कण्डिका ।

असीमविषयग्रहणार्थे सीमा । साहाय्यार्थे प्रतिनिधिः । अनेकार्थे संख्या—। सूक्ष्मार्थे स्थौल्यं । अस्थिरार्थे सुखयोगः । अद्वार्थे आत्मा प्रमाणम् । विशेषत्वं चित्तस्थैर्याय । अनिर्दिष्टत्वं मूलनाशाय । स्वाधीनत्वं तथैवच । प्रसिद्धप्रकरण-माचरितव्यम् । इति द्वितीया कण्डिका ।

तदृणञ्च दद्यात् । प्रत्युपकारेण ऋणशोधः । बहूपकारेण ऋणादानम् । उपकारिणेऽनुपकारिणेऽपि । अऋणयुत्तमर्णः दैवस्वमाप्नोति । जीवितमृते च यस्य पराशान्तिः । केचिदिह चिरसुखमश्नन्ति केचिच्चिरदुःखं केचिज्जन्मान्धखञ्ज-कुष्ठिनः । केचिदनायासेन फलं लभन्ते । केचिच्चिरायासेन नैव । केचिदाज-न्मतः चौर्यहिंसुकाः सुखिनो म्रियन्ते । केचिदाजन्मनः दातृदयालवः दुःखेन ताड़िताः पञ्चत्वं प्राप्नुवन्ति । इति तृतीया कण्डिका ।

पुनश्च यथा दाहकत्वादग्निः । तथाक्लेशात्मकत्वात्पापं । विरुद्धभोजनं पापं फलं रोगः । द्रव्यविशेषात् सद्यो विलम्बेन वा । अनग्निर्न दहति अपापं न क्लेशयति । अनग्निप्रवेशी न दग्धो भवति । अपापी न क्लेशं प्राप्नोति । तत्पा-पफलं कर्त्ता स्वयं भूंक्ते नान्यः । भोजनसंग्रहसामर्थ्याभावात् शिशोर्भोजन-संग्रहो नास्ति । नच तदकरणात्तस्य पापं । न तथैवात्मरक्षणाकरणात् तस्य पापं । न तथाच बुद्धिविहित कर्म्माकरणात् । येन तदर्थं भोजनं संगृहीतं । आत्मरक्ष-णञ्च कृतम् । पापसम्भावना च न दत्ता । सत्पुरुषो दृढ़नियमोऽभ्रान्तश्च । यथा-ग्नेर्दाहकार्य्ये सूर्यस्य च भ्रमणकार्य्ये । तस्य भ्रमः विश्वलोपहेतुः । तत्कथं । शिशो-र्जन्मान्धता गुरुपापफलं चेन्माता पापयति । तथापि तत्पुरुषस्य भ्रमः । पुनर्यत्र

पुरुषकारो नास्ति न तत्र पापसम्भावना। न तत्र विक्रमजातङ्कः। तस्मादिह पूर्व्वजन्मकर्म्मफलमेव लक्ष्यते। तस्मादाजन्मनः सुखदुःखभोगः व्यक्तिविशेषे सुख दुःखस्यतारतम्यं। कार्य्यविशेषे कुशलता सामर्थ्यप्रियताच। तस्मात् हिंस्रस्य न सद्योदण्डः परं सुखमृत्युः। इति चतुर्थी कण्डिका।

---

## ज्योतिषी।

उत्कलेषु तावत् कटकमण्डलस्य पश्चिमायां दिशि त्रिंशत्क्रोशाभ्यन्तरे खण्डपडानामिकायां राजधान्यां महामनीषी श्रीमच्चन्द्रशेखरसंज्ञको ज्योतिर्विदजनिष्ट।

तत्र महाराजश्रमरवरराय–पदालंकृतस्य राज्ञो नरसिंहस्य कनीयाननुजः श्रीश्यामबन्धुसिंहसामन्तः क्षत्रियकुलतिलकममुं चन्द्रशेखरं शराग्निवसुविधुपरिमिते (1835) खीष्टाब्दे आत्मजत्वेन प्राप्य स्वजन्म चरितार्थमकरोत्। पूर्वजमन्तानद्वयस्य विनाशात् ताताऽतिवात्सल्येन तनयस्यास्य 'पठाणि'' इति नाम ददौ। कनिष्ठतया न राजसिंहासनं; भूपात्मजतया केवलं सामन्तोपाधिन्तु प्रपेदे। तस्मात् पठाणिसामन्तनाम्ना देशेऽस्मिन् प्रख्यातः सन् एकदा पुरीमहाराजप्रविधे "हरिचन्दनमहापात्र"इत्युपाधिं; ततो लण्डनवासिनां परिषदि महामहोपाध्यायोपाधिञ्च लेभे।

अथ शैशवावसरे मातृभाषाध्ययनं समाप्य संस्कृतभाषाध्ययने प्रवृत्तः प्राक् व्याकरण-काव्यालङ्कारादीनि शास्त्राण्यालोच्य किमपि फलितज्योतिषशास्त्रं पितृव्यादधीयानः तत्प्रयत्नतः सूर्यचन्द्रादिग्रहनक्षत्राणामुदयमस्तमयञ्च पर्यवलोकयति स्म। इत्थं नैशगगनस्य पर्यवेक्षणपरीक्षाभ्यां विकसितप्रतिभः पञ्चदशवयस्कः स राजपुस्तकालयस्थाभ्यां टीकाटिप्पणीभ्यां प्राचीनसूर्य्यसिद्धान्तादीन् ग्रन्थान् स्वयञ्चाधीत्य तद्ग्रन्थवर्णितक्रियद्यन्त्रैः पुनः स्वकृतनलिकादियन्त्रैश्च क्रमशो ग्रहनक्षत्रगतिं निरीक्षितुमुद्यतः, स्वरचितनलिकादियन्त्रेषु विषमेषु भग्नेषु दृष्टिरोधकेषु सत्सु 'प्रारब्धमुत्तमगुणा न परित्यजन्ति'' इत्येतद्वचनादिव चेष्टां न जहन् भूयो निर्म्माय बहिर्विनिर्म्मितकुटीरे च विनिद्रो निशां नीत्वा शनैः शनैः दृक्शक्त्या ग्रहादीनां गतिं स्थिरीचकार।

तदैव तस्य गगनेऽभिमुखत्वं नैशसुखसुप्तिपरित्यागञ्चावलोक्य केचन अर्भकाः करतालिं ददतो जहसुः। केचित् पल्लिवासिनो मूढयुवकाः प्रहेलिकादीन्

यायन्तो दुरवगाहगम्भीराम्भोनिधेरिव धैर्य्यशालिनस्तस्य महात्मनः सविधे प्रायशो ननृतुः । अन्येऽपि सृष्टिनैपुण्यनिरीक्षणेन विस्मिताः सकलसनातनमार्य्य-शास्त्रं कुसंस्कारप्रणोदकत्वेन पश्यन्तोऽपरिपक्वमतयः कियन्तो नव्यशिक्षिता वाह्मे परागनिवृत्तं तं विद्वांसं मुहुर्मुहुः परीक्षाकाङ्क्षया अननुमेयं खमण्डलवृत्तान्त मनुसृत्य स्वस्वसंशयं पृच्छन्तोऽल्पीयसा कालेन पुस्तकमन्तरा लेखनीपत्रसाहाय्यं विना चानुरूपोत्तरं कुर्वतस्तस्माच्च सफलाशा बभूवुः । तेन स्वलक्ष्ये गुरुतरप्रत्यूहे समुपस्थिते सति कानपि प्राणिनः प्रति घृणामनवलम्ब्य कालान् निनाय ।

नासावन्धविश्वासी । स्वदृक्परिश्रमेण सर्वं निश्चिकाय । त्रयोविंशवर्षाभ्यन्तरे स्वाध्ययनं समाप्य तस्मात् संवत्सरात् त्रिंशद्वर्षाणि यावत् सिद्धान्तदर्पणनामकं सुमहत् ज्यौतिषशास्त्रं गीर्वाणवाण्या व्यरचयत् । यस्य उपादेयतां नितरामाक-लय्य काशीवास्तव्यो ज्योतिषी सुधाकरशास्त्री तत्र टिप्पणीमारभत इति श्रूयते ।

तस्य मुखबन्धे कटककलेजाध्यापकेन एम् ए उपाधिकेन योगेशचन्द्ररायमहोद-येन राजभाषया लिखितं, पृथिवीमध्ये महामहोपाध्यायेन श्रीमता चन्द्रशेखरेण ज्योतिषविद्यायामुच्चैःस्थानमलभि । श्वेतद्वीपवासिनो बहवो वैज्ञानिकपण्डिता आश्चर्य्यान्विताः सन्त श्चन्द्रशेखरकृतसिद्धान्तदर्पणस्य असाधारणतां स्वीकुर्वन्ति इति । सम्प्रति ज्योतिषज्ञा यथा विज्ञापनप्रदानेन विज्ञापयन्ति नामानि विदुषो । ज्योतिर्वेत्तायं महामहोपाध्यायश्चन्द्रशेखरः कदाचिदपि तथा स्वनाम-ख्यापयितुं न समीहते । तथापि विभिन्नप्रदेशेषु ज्योतिषसम्प्रदाये सुधीवरस्य तस्य नाम कीर्त्यते । विशेषतोऽयं स्वयं कृशाङ्गो मत्स्यमांसाशनपरित्यागी ऋणी तत्र च पुनः शूलरोगग्रस्तः, राजकुमारोऽपि अत्यर्थं कायिकपरिश्रमी अतोऽनुमन्यते महात्मायं न स्वास्थ्यसुखमलभत ।

अथैकदा गुणिना केनापि राजपुरुषेण पर्वतपरिमाणं पृष्टोऽसौ मुहूर्त्ताभ्यन्तरे प्रश्नोत्तरं दत्तवान् । तेन परितुष्टो राजपुरुषोऽस्य महामहोपाध्यायोपाधिप्राप्तये बहुचेष्टतेस्म इति किंवदन्ती श्रूयते ।

यदा सिद्धान्तदर्पणमवलम्ब्य पञ्जिका विरचिता तावत् भ्रममूलकत्वाल्लोके सम्यक् अननुभूतान्येषां पञ्जिकागणना प्रायेण अनादृता । अयं महामहोपाध्यायो यन्त्रं विना स्वदृक्सिद्धान्तेन लक्षितभ्रमं परिहरन् तत्रच पुरीमुक्तिमण्डपपण्डित-सभया संशोध्य अनुपमां स्वपञ्जिकां स्वदेशे प्रचारयति । इदानीमस्य तनया विरचय्य च पञ्जिकाः प्रकाशयन्ति ।

उत्कलेन्दो रेतस्य महात्मनः पुरुषोत्तमक्षेत्रे वेदखाङ्कचन्द्रमितखीष्टाब्दस्य (1904) मे मासस्यैकादशदिवसे परलोकप्राप्तिरभूत्। सिद्धान्तदर्पणग्रन्थे तेन स्वपरिचयः पुस्तककालश्च प्रदर्शितः। यथा—

"इत्युत्कलोज्ज्वलनृपालकुलप्रसूत-
श्रीचन्द्रशेखरकृते गणितेऽतिसिद्धे।
सिद्धान्तदर्पण उपाहितबालबोधे
सानुक्रमो व्यरचि सिद्धमितः प्रकाशः"॥

**अन्यच्च**

"मुकुन्ददेवस्य चतुर्दशाङ्के
काले वृषाष्टेन्दु—(1823) समे च शाके।
वरिशनेर्मार्गपुरोनवम्या
मिदं मया पुस्तक मास्तपूर्णे॥"

पुर्य्यां परलोकं गतवतः प्रथितयशस स्तस्य स्मारकं "चन्द्रशेखर" इत्यनामकं गृहं निर्म्मापयन्ति तत्रत्याः महामहोपाध्यायप्रमुखाः सम्भ्रान्ताः। अधुना तत् हर्म्म्यं साधारणसमितीनां कार्य्यालयत्वेन व्यवह्रियते।

अलौकिकशक्तिसम्पन्नं निरभिमानं सुचरित्रं सत्यवादिनं पुण्यात्मानमेनं सिद्धान्तदर्पणग्रन्थकारं सुरगणाः स्वर्लोके संप्राप्य नित्यसुखेनावतात्। इति।

**राजा श्रीश्रीनरसिंह मर्द्दराज अमरवरराय:**

| | |
|---|---|
| राजा पुरुषोत्तमः | श्यामबन्धुः |
| राजा कृष्णचन्द्रः | चन्द्रशेखरः |
| राजा नटवरः | |

चन्द्रशेखर महामहोपाध्यायः।

## श्रीशब्दसमालोचनम् ।

सम्प्रति रघुनन्दन-समादृतां श्रियं निर्व्वासयितुं दुर्म्मुखस्येव कस्यापि महोदयस्यानभ्युदयः प्रयत्नोऽवलोकितोऽस्माभिः "प्रवासि"पत्रिकायाम् । तस्य महात्मनो देशमिमं विश्रीकं विधातुं कथमेतावानुद्यमः कुतो वेयं परश्रीकातरता महान्तमपि तमाक्रान्तवती । अहो सर्व्वथा श्रीहीनानामस्माकं नामान्येव श्रीयुक्तान्यासन्, तान्यपि श्रीहीनानि भविष्यन्ति । अहो बत महद्दुःखं । कुत इयं शास्त्रीयव्याख्या कामचारिणी भीषणा रावणस्वसेव करालास्या सत्तास्यं विषमत्तमुपगता । शिष्टाचारासिनैवापनसापनेष्यते । अथ क्रमेण शिष्टाचारः प्रदर्श्यते । तत्र शिष्टाचारे शास्त्रप्रमाणं यथा—

देवं गुरुं गुरुस्थानं क्षेत्रं क्षेत्राधिदैवतम् ।
सिद्धं सिद्धाधिकारांश्च श्रीपूर्व्वं समुदीरयेत् ॥ इति ।

तत्र सिद्धाधिकारांश्चेत्यत्र स्वर्गगामित्वादिना सिद्धोऽधिकारो येषां वरागामित्यनेन जीवतां श्रीशब्दादित्वं नाम्नः, न तु मृतानां तथेति शिष्टाचार इति श्रीरघुनन्दनः । नन्वेतदेव श्रीशब्दव्यवहृतेर्म्मूलमतोऽधुनातनीयनामादौ श्रीशब्दव्यवहाररीतिरिति चेत् ।

"श्रीजयदेवकवेरिदं कुरुते मुदं ।
मङ्गलमुज्ज्वलगीति" इत्यत्र रघुनन्दनात् प्राचीनतमेन जीवतैव श्रीजयदेवकविना अयं श्रीशब्दो व्यवहृतः । ननु स्वर्गगामित्वादिना सिद्धाधिकारत्वे पतितानां वर्णाश्रमबहिष्कृतानाञ्च नामादौ श्रीशब्दव्यवहारो न स्यात् तेषां स्वर्गगामित्वाभावादिति चेत् स्वर्गगामित्वादिनेत्यत्र आदिपदेन श्रीभगवद्भजनादिना श्रीभगवद्धामगामित्वादीनामपि ग्रहणम्—तेन

"मा हि पार्थ ! व्यपाश्रित्य येऽपि स्युः पापयोनयः
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ।"

श्वादोऽपि सद्यः सवनाय कल्पते" इत्यादि शास्त्रवचनदर्शनात् तेषामपि सिद्धाधिकारित्वमेव ।

"अपि चेत् सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥
क्षिप्रं भवति धर्म्मात्मा शश्वच्छान्तिं निगच्छति" इति श्रीभगवद्वचनप्रमाणेन पतितस्य पातकिनोऽपि अधिकारः सिद्धोऽस्ति ॥

नतु श्रीशब्दस्य जीवदर्थत्वे नाम्नादौ जीवच्छब्द एव व्यवहर्त्तव्यः, किं श्रीशब्देनेति चेदुच्यते नहि श्रीशब्दो जीवदर्थकः; सतु "सिद्धं सिद्धाधिकारांश्च श्रीपूर्व्वं समुदीरयेत ॥" इति वचनेन जीवतां नाम्नः आदौ प्रयोज्यः । तर्हि यथा सिद्धत्वात् श्रीसनकः श्रीसनातनः श्रीरूपः इति गुरुत्वात् "जीयात् कोविदगर्व्वपर्व्वतपविः श्रीवोपदेवः कविरि"ति तथा सिद्धाधिकारत्वात् श्रीअमुकदेवशर्म्मेति । एतेन पुनरुक्ततादोषाभावात् लेखकेनापि श्रीपूर्व्वं निजनाम लेखनीयम् ।

ननु राजादीनामेव सिद्धाधिकारित्वं न तु जीवतामिति चेत् तर्हि "आसीत् सकलराजलक्षणोपेतः सार्व्वभौमो राजा शूद्रको नाम" इत्यादिस्थलेषु कथं न श्रीशब्दो व्यवहृतः ।

जीवद्भिरेव मल्लिनाथादिभिस्तथालिखितमिति संस्कृतभाषायां मृतानां प्रायशः श्रीयुक्तं नाम दृश्यते इत्येवं वचनं न सङ्गतम् । ग्रन्थकृतैवाध्यायान्ते ग्रन्थान्ते वा निजनाम प्रायशः तथा विन्यस्यते । तथाच

इति श्रीमन्नारायण-चरणारविन्द मधुव्रत-साहित्यार्णव-कर्णधार-ध्वनिप्रस्थापनपरमाचार्य्य-कविसूक्तिरत्नाकराष्टा-दशभाषावारविलासिनी-भुजङ्ग-सान्धि-विग्रहिक-महापात्र-श्रीविश्वनाथ-कविराजकृतौ साहित्यदर्पणे काव्यस्वरूपनिरूपणो नाम प्रथमपरिच्छेदः । अत्र एतावतामुपाधीनां सन्निवेशः परवर्त्तिना न केनचित् कृत इति सम्यग् निर्णीयते ।

यतः जयदेवमल्लिनाथादिभिर्नाम्न आदौ श्रीशब्दः प्रयुक्तोऽतो नास्ति वङ्गदेशादन्यत्र कुत्रचित् नाम्न आदौ श्रीशब्दप्रयोगव्यवहारस्ततोऽसौ रघुनन्दनप्रवर्त्तित इति न वक्तव्यम् । नाम्न आदौ श्रीशब्दप्रयोगो देशीयशिष्टाचारसम्मतः, तं विहाय वैदेशिकशिष्टाचार-ग्रहणमयुक्तम् । को नाम सुपुत्रः स्वपितरमपहाय परकीयपितरं पितरं वदति ?

नहि श्रीशब्दप्रयोगः स्वगौरवद्योतकस्तत्प्रयोगेण न स्वगौरवज्ञापनं भवति । यथा मांस-विशिष्टोऽपि कृशो न मांसलशब्देनाभिधीयते तथा श्रीविशिष्टोऽपि न श्रीलशब्देन । तर्हि श्रीयुक्त-श्रीलादयः शब्दा नह्येकार्थकाः ।

---

# काव्यलहरी ।

( १ )

दुर्जनसंसर्गात् सर्व्वेऽपि दुर्जना भवन्तीत्याह :—

शशिमुकुटललाटे शैलजागण्डपाली
विगलितमृगनाभिव्यक्तघर्म्माम्बुसिक्तः ।
समजनि नरकारिश्यामलो यामिनीशो
जगति मलिनसङ्गात् को न मालिन्यमेति ॥

( २ )

सुजनसंसर्गात् सुजना भवन्तीत्याह :—

क्षितिधरपतिपुत्री मौक्तिकव्यक्तिभङ्गी-
निलय-वलय-माला कान्ति-जालावलीढ़ः ।
हिम-रुचि-रुचिरासीन्नीलकण्ठस्य कण्ठो
भवति विमलयोगान्निर्म्मलत्वं न कस्य ॥

( ३ )

संसर्गफलमवश्यमेव लोका लभन्ते तदित्याह—

मसृणघुसृण-पङ्क-प्रक्रियाभङ्गि-जायत्
कुचकलस-विलासैः कुन्दचन्द्रोज्ज्वलोऽपि ।
अगमदरुणभावं कामिनीकण्ठहारो
जगति भवति रागो रागिसङ्गाच्च कस्य ॥

( ४ )

यस्य यदपहृतं तस्मै तद् दातव्यमित्युपलभ्य धनञ्जयः श्रीकृष्णमाह—

रत्नाकरस्तव गृहं गृहिणी च लक्ष्मीः
देयं किमस्ति भवते पुरुषोत्तमाय ।
आभीरवामनयनाहृतमानसाय
दत्तं मनो यदुपते त्वमिदं गृहाण ॥

( ५ )

दुःखैर्विना सुखं न भवतीत्याह—

श्लाघ्यं नीरसकाष्ठताड़नशतं श्लाघ्यः प्रचण्डातपः
लेपः श्लाघ्यतरः सुपङ्कनिचयैः श्लाघ्योऽतिदाहानलः ।

यत् कान्ता-कुचकुम्भबाहुलतिका-हिल्लोल-लीलासुखं
लब्धं कुम्भवर त्वया नहि सुखं दुःखैर्विना लभ्यते ॥

( ६ )

योषिदाकृष्टहृदयमानवाः सर्व्वान् दोषान् लभन्त इत्याह—

सम्मोहयन्ति मदयन्ति विडम्बयन्ति
निर्भत्सयन्ति रमयन्ति विषादयन्ति।
एताः प्रविश्य हृदयं सदयं नराणां
किं नाम वामनयना न समाचरन्ति ॥

( ७ )

पापी पापशतमाचरितुमपि न शङ्कते पापहीनस्तु एकमपि पापं कर्त्तुमभिशङ्कते इत्याह—

अन्यल्पपापैर्विपदः शुचीनां
पापात्मनां पापशतेन किम्वा।
गोमूत्रस्पर्शेण पयस्तु नष्टं
तक्रस्य गोमूत्रशतेन किम्वा ॥

( ८ )

सर्व्वगुणयुक्तः कृतविद्योऽपि मन्मथशायकहतो बुद्धिहीनो गुणहीनश्च भवतीत्याह,—अशोकारण्ये रावणचेटीं त्रिजटां प्रति सीताप्रश्नोऽयम् तदुत्तरञ्च।

पृच्छामि त्रिजटे सुखेन भवतीं कस्मादयं रावणो
नीतिज्ञो नृपशेखरो हरति मामन्याङ्गनां काननात्।
सीते मन्मथबाणपञ्चकहते का नाम नीतेः कथा
यावत् कामशराहतो न पुरुष स्तावद्विशिष्टायते ॥

( ९ )

अतिसंश्रवदोषान्मानहानिरवश्यमेव जायते तदित्याह—

प्रथमदिवसचन्द्रः सेव्यते सर्व्वलोकैः
सच सकल कलाभिः पूर्णचन्द्रो न सेव्यः।
नव-नव-नव-लीला-कौतुकी सर्व्वलोक-
स्त्वतिपरिचयदोषः कस्य मानं न हन्ति ॥

( १० )

सज्जनस्तु संसारकर्म्मणि निमग्नोऽपि सर्व्वदा परमेश्वरं प्रति निविष्टचेता भवतीत्याह—

पुङ्खानुपुङ्खविषयेतत्परोऽपि
धीरो न मुञ्चति कदापि मुकुन्दचिन्ताम् ।
सङ्गीततालतटनाट्यवशङ्गताऽपि
मौलिस्थकुम्भपरिरक्षणधीर्नटीव ॥

## कालिदासस्य योषिद्रूपवर्णनम् ।

कालिदासस्य नाटकेषु काव्येषु च योषिद्रूपवर्णनस्य किञ्चित् सुकौशल-मस्ति । कालिदासः सरस्वत्या वरेण कविर्भूत्वा आदौ सरस्वतीवन्दनमारभ्य सामान्य-नारीरूप-वर्णन-प्रकारेणैव शिरस आरभ्य पत्पर्य्यन्तं सरस्वत्या रूपं वर्णयामास । कालिदासः कुमार-सम्भवकाव्ये पार्व्वत्या रूपवर्णनायां शिरसः पत्पर्य्यन्तं वर्णनं विहाय पादात् शिरःपर्य्यन्तं वर्णितवान् । योषिज्जनं सम्मुखमानीय ( दण्डायमानं कृत्वा ) तस्याः सर्व्वाङ्गानां रूपवर्णनं कालिदासस्य एतत् प्रथमं एतत् सर्व्वश्रेष्ठञ्च । लोकैरुक्तञ्च सरस्वत्याः सकाशे कालिदासकृतस्य पापस्य प्रायश्चित्तमेतत् । कुमारसम्भवकाव्ये कालिदास ऊनविंशतिसंख्यकैः श्लोकैः पार्व्वत्या रूपं वर्णयामास । यत्तपत्यास्तु रूपवर्णनमेकमात्रश्लोकव्ययेन सम्पादितं । तत्र ( तस्मिन् श्लोके ) ऊनविंशतिमात्रपदानि सन्ति । अपि च रघुवंशकाव्ये इन्दुमत्याः स्वयम्बरे स इन्दुमत्याः रूपं श्लोकैकमात्रस्यापि व्ययेन विना ननु दण्डायमानः सन् सर्व्वाङ्गानि वर्णयामास । परन्तु सुनन्दया राजविशेषस्य सकाशात् राजान्तर-सकाशं नीयमानां इन्दुमतीं प्रति एकैकक्रमेण ऊनविंशतिमात्रविशेषणानि प्रयोजयामास । तेनैव प्रकारेण कापि जाज्वल्यमाना महती रूपवर्णना तेनानुष्ठिता ।

नाटकेषु तु नारीरूपवर्णनमन्यविधम् । प्रतिनाटके स आदौ योषिद्रूपं प्रदर्शयामास, योषिज्जनं तिसृषु भङ्गिषु दण्डायमानं कृत्वा नटान्तरस्य मुखेनैव तस्याः सर्व्वाङ्गानि वर्णयामास । कस्मिंचपि नाटके स तिसृभ्योऽधिकाः चतस्रः अवस्था न प्रदर्शयामास । वस्तुतस्तु तद्रूपप्रदर्शनेन काचित् ऐकतानिकतादोषकणा जायते । तस्मात् कालिदासस्तिसृभिरेव सन्तुष्ट आसीत् । एकैकवारेण च तिस्रः तिस्रः अवस्थाः प्रदर्श्य जगज्जनानां पुरतः किमपि एकमपरूपरूपं विवृणोति स्म ॥

## वङ्गीय-ब्राह्मणसभाया वार्षिके अधिवेशने महनीयचरितस्य अशेषसद्गुणनिलयस्य द्वारवङ्गाधीशस्य सभापतेरभिभाषणम् ।

इयञ्च खलु महती ब्राह्मणानां सभा सर्व्वभूतहिते रता सर्व्वधर्म्मजननी-चातुर्व्वर्ण्यव्यवस्था-संस्थापनी चतुर्व्वर्गप्रदायिनीति विदितमेव । अस्माकन्तु "शमो-दमस्तपः शौचं क्षान्तिरार्ज्जवमेव च । ज्ञान-विज्ञानमास्तिक्यं ब्रह्मकर्म्म स्वभावजम् ।" इति वचनेन स्वाधीनैव गुणगणगरिष्ठा सर्व्वैरन्यैरात्युच्चमाना शमदमादिसम्पत् । एवञ्चैतादृशानां विविधबोधशालिना तादृशैव कार्य्यं समुचितमिति । परमेश्वरेण नित्यया किल वाचा बोधितमादिशरीरिणे, यथा—ओषधयः समवदन्त सोमेन सह राज्ञा यस्मै कृणोति ब्राह्मणस्तु राजन् पारयामसि ।

एकदा सोमं राजानमुपगतवत्य ओषधयो वदन्तिस्म, हे राजन् यस्मै पुरु-षाय ब्राह्मणोऽस्मान् प्रेरयति तं वयं पारयामसि, अचिरेणैव साधयाम इति, तच्च नाब्रह्मवर्च्चसानां सम्पद्यते, एवमेव भावमादाय भूयोभूयः प्रार्थितं किल श्रुतिमुखेन ऋषिभिः परमर्षिभिश्च यथा—

"ओं आब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामाराष्ट्रे राजन्यः शूरः इषव्यो ऽतिव्याधी महारथो जायतान्दोग्ध्री धेनुर्वोढा ऽनड्वानाशुः सप्तिः पुरन्ध्रिर्योषा जिष्णुरथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायतान्निकामे निकामे, नः पर्ज्ज-न्यो वर्षतु फलवत्यो न ओषधयः पच्यन्तां योगक्षेमो कल्पतां ।" एवं यत्रैतादृशा ब्रह्मवर्च्चसविभूषितास्तपोनिकरदीप्तिमच्छरीरा भूसुरा अधिवसन्ति तं देशं सर्व्व-थैव पुण्यं समामनन्ति श्रुतयः ।

यथा—ब्रह्मच क्षत्रश्च सम्यञ्चौ चरतः सह तं लोकं पुण्यप्रज्ञेषं यत्र देवाः सहाग्निना पुण्यलोकमपि ज्ञापयति श्रुतिः यत्र मेदिर्न्न विद्यते इति । एवञ्चार्च्च-नीयचरणे प्राचीने दृष्टे यादृगासीत् सौभाग्यं तादृग्नाद्यापि लोचनमोच-रतां मुञ्चति ।

एतदेव निश्चिनोति छन्दोगानामुपनिषदि ग्रथिता गाथा, महाराजेनाश्व-पतिना स्वकीयराज्यमुद्दिश्य गीता यथा—"न मे स्तेनो जनपदे न कदर्य्यो न मद्यपः । नानाहिताग्निर्नाविद्वान् न स्वैरी स्वैरिणी कुतः ।" इत्याकारिका ।

एतादृक् सौमनस्यं न शासकाधीनं किन्तूपदेशकाधीनमेव, न हि तादृग् बलमस्ति राजशासने यादृग् वरीवर्त्ति समुपदेशवत्यां ब्राह्मणवाचि, यावत् तादृ-शा ब्राह्मणा एव भूषयन्ति स्म एतां भुवं तावदासील्लोकशसिद्धं वैभवं ऐश्वर्य्यं

क्रियाकौशलञ्च स्पृहणीयमन्यदेशीयैरपि, परन्तु "ते हि नो दिवसा गताः ।" इदानीन्तु सर्व्वपूज्याया अपि ब्राह्मणजातेर्म्माहात्म्यं बहुशो बालिशाः निन्दयन्ति, शृण्वन्तोऽपि ते न शृण्वन्ति, पश्यन्तोऽपि न पश्यन्ति, जानन्तोऽपि न जानन्ति, हन्त हतदैवं ब्राह्मणानाम् ।

ब्राह्मणेतरजातयस्तु स्वस्वजाति-समुद्धारविषयं निमित्तीकृत्य सर्व्वतः सज्जीभूता दृश्यन्ते । यतन्ते च बहुशो यथामति । परन्तु कीदृग्विचित्रं दृश्यं दृश्यते, सकलं समुचितं पुण्यलोकलक्ष्मादर्शनीभूतं सर्व्वतोऽपि सञ्चरत्येव मूर्त्तिमानिव कलिरितस्ततः प्रत्यक्षतां गत इव ग्रसमानश्च लोकान् समन्ततो दृश्यते । तथाहि यच्चेदं किल भारतवर्षं-ब्रह्मविभूतिमद् भव्यं प्रतिगृहं वेदघोषघोषितं यज्ञाग्निहोत्रधूमधूपितं बलिहरणरञ्जिताङ्गनञ्चासीत् श्रीसमृद्धम्, तदेवेदं सर्व्वथा भारभूतजीवनमयं सकलं विपरीतमिव दृश्यते । ईदृश्यां घोरायामप्यस्यामापत्तौ भगवद्वाक्यं—नहि कल्याणकृत् कश्चिद् दुर्गतिं तात गच्छति' इति विचार्य्य सर्व्वदैव सदुपदेशं "कर्म्मण्येवाधिकारस्ते" इति चित्ते निधाय सर्व्वभावेन 'क्लैव्यं मास्म गमः पार्थ !" इति सुदृढमन्तरा संस्थाप्य भगवत्या श्रुत्या प्रोक्तस्य सन्मार्गस्य "बलं सत्यादोजीय" इत्यस्यानुसरणं कृत्वा प्रकृतकर्त्तव्ये दत्तचित्तैरस्माभिर्भवितव्यमेवेत्यावश्यकम् । किञ्च विचारिते प्रतिभाति, यथा—गाढन्तमः शनैःशनैरपसरति, प्रकाशवृद्धिः समुपलभ्यते चेतश्चेतः, आलस्यमेघावरणञ्च छिन्नं भिन्नं दृश्यते क्वचित् क्वचित् केवलमरुणोदयः सौभाग्यसूर्य्योदयासन्न इव प्रतीयते । प्रहर्ष-प्रदा वार्त्तेयं—यदस्माकं शास्त्रेषु कथिता बहवः पदार्था यते मिथ्येत्युक्त्वा पाश्चात्यैस्तदनुसारिभिश्च हास्येनैव नीयमाना आसन् । आकाशतत्त्वं, वायुतत्त्वं, विद्युत्तत्त्वं, आकाशयानञ्चेत्यादिकां स्तांस्तान् सकलान् इदानीं न केवलं सत्यमिति कथयन्ति, किन्तु पूर्व्वमिव मनुजै स्तत्रत्यैः गतागतञ्चापि क्रियते तत्तत्त्वविज्ञानं सम्पाद्यैव । एवमेव गङ्गाजलं, तुलसीदलं, गोमयञ्चेत्यादिकं पवित्रं द्रव्यमिति कृत्वा ते विविधान् प्रयोगानपि कृत्वा तद्गतं पवित्रीकरणत्वं शास्त्रवाचां याथार्थ्यञ्चानुसन्धाय प्रख्यापितं दृश्यते तत्कृतेषु ग्रन्थेषु ।

सार, जे० सि० वसुना विदुषां मान्येन धीमता वृक्षादिष्वपि प्राणानां ज्ञानेन्द्रियगणस्य च आस्थितिः समुपदर्शिता, निर्म्माय नानाविधानि यन्त्राणि सोपज्ञानि च, यस्मादतः पञ्चसहस्राः पश्यन्ति पादपाः, तस्माच्छृण्वन्ति पादपाः"

इत्यादिवचननिचयेषु । विद्वद्वरेण्यद्राविड़देशीयेन "टि० एस्० नारायणशास्त्रिणा च यस्त्वचिरमेव स्वर्गतः, यस्य चामुत्र गमने महती हानिर्जाता भारतस्य महता प्रयत्नेन स्वोपज्ञेऽमूल्ये ग्रन्थे निर्णीतमस्ति, यत्कलियुगन्तु पञ्चसहस्राब्दादेवमन्यानि युगानि कल्पाश्च प्रवर्त्तिता आसन्, अत्र पूर्व्वमेव तथा शास्त्रमिति च । पाश्चात्यैस्तदनुयायिभिरन्यैश्च देवानां प्रिये योऽज्ञान-द्योतिका तन्त्रशास्त्र-निन्दा सर्व्वत्र प्रचारिताभूदिदानीं माननीयेन विदुषा सारजनउड्रफेनापि तन्निन्दाया एवायथातथ्यं प्रकटीकृत्य याथार्थ्यञ्च बोधयित्वा सम्प्रचारः समारब्ध आगमशास्त्रस्य । ततोऽस्य सततं कृतज्ञा वयम्।

विद्वद्वरेण 'डाक्तार' स्पुनरेण च स्वकीये किल लेखे सम्यगाख्यापितं यद्भारतवर्षे पण्डितानामदर्शनम् भारतभाग्यविपर्य्ययद्योतकमेव, तदतो ऽवश्यंकृत्वानेकयत्नान् तेषां रक्षा वृद्धिश्च विधेया, सर्व्वथा सविशेषञ्च प्रयतनीयमत्रापि भवेदिति ।

बङ्गदेशाधिकारमधिष्ठितेन सम्राट्—प्रतिनिधिना "लर्डरोनाल्डशे" इत्याख्येन कलिकाता—विश्वविद्यालये प्रतिवार्षिके क्रियमाणे प्रवचने उपाधिप्रदानसमये परीक्षोत्तीर्णानां छात्राणां भारतीयविश्वविद्यालये अवश्यं पठनीयानि एतद्देशीयानि दर्शनानि, सायहं सादरं च इत्युक्तं, तेन सर्व्वथा कृतार्थीकृताः स्म, आशास्महे च अस्य बहुविधं कल्याणम् ।

न व्यर्थं समर्थयितुमीहामहे भवतामर्मूल्यं समयं नोच्चैस्तथा बहूसंख्यकान्युदाहरणान्येतादृशानि स्मृतिपथमुपयान्ति । तथाप्येतैरप्युदाहरणैर्भाविसमुदयकालपूर्व्वापराण्युपस्थितानीत्यवगन्तव्यम् । तथास्माकं धार्म्मिकः कलहः शैव-शाक्त-वैष्णववादिनां यश्च पूर्व्वं दृश्यमान आसीत् प्रतिपदं तस्यादर्शनमेव समन्ततः समायाति शनैः शनैः ।

अपरञ्च भारतीयेषु ब्राह्मणेषु जागतिरप्यायाता । तथाहि स्वीयसमुद्धारे प्रयत्यते यथामति संभूय सर्व्वैः सर्व्वत्र संस्थाप्य सदस्तैरपि, किञ्च प्राचीनानां बहूनां विलुप्तप्रायाणां समुपलब्धिरपि प्राचीनसदाचारानुष्ठाने चातीवोपयुक्तता माददाति, आपादयति च कर्म्म—क्रिया—कौशलं सदाचारवृद्धिं वेदे-शास्त्रे च नैपुण्यं । किञ्च प्रतिदिनं पण्डिता अपि बहुश आचार्य्य-तीर्थादि—विविधोपाधिभूषणभूषिताः पूर्व्वापेक्षया शतशोऽधिका विलोक्यन्ते, यथा पूर्व्वे पञ्चनद-

प्रदेशीय–लवपुरे यत्रापि विद्वांसः कृच्छ्रेणोपलभ्यन्ते स्म, तत्रेदानीं परंशताः शास्त्रिणो विशारदाश्च दृश्यन्ते, किम्पुनरन्यप्रदेशेषु । एवमेव ब्राह्मणैः स्थले स्थले पाठशालास्थापनं ब्रह्मचर्य्याश्रमप्रतिष्ठापनमित्यादिकमपि निश्चयेन ज्ञापयत्येवा-स्मज्जातेर्भाविसमुद्धारम् । प्रतिभान्ति च अस्मद्बुद्धावप्येते सदुपायाः ।

---

## अथ हुक्कादेवीस्तवः ।

कैलासशिखरासीना देवी दुर्गा महेश्वरम् ।
पप्रच्छ दुःखिता विंशशताब्द्याः पापदर्शनात् ॥

श्रीदुर्गोवाच ।– अतः परं महादेव ! श्रोतुमिच्छामि तत्त्वतः ।
हुक्कादेव्याः स्तवं पुण्यं फलश्रुतिसमन्वितम् ॥
येन चात्र कलौ घोरे नानापापपरायणाः ।
मुच्यन्ते मानवा विंशशताब्द्या अवलीलया ॥

श्रीशिव उवाच –शृणु देवि प्रवक्ष्यामि हुक्कादेव्या स्तवं परम् ।
यस्य श्रवणमात्रेण मुच्यते भवबन्धनात् ॥
शासतं भारतं वर्षं जाहाङ्गीराख्यभूपतिम् ।
हुक्कादेवी देवलोकादाविर्भूय जगाद ह ॥

हुक्कादेव्युवाच–जाहाङ्गीर ! त्वमसि वसुधापालकानां वरेण्यो
हुक्कादेवी तव गृहमहं देवलोकाद्धि प्राप्ता ।
पूजां राजन् ! जलधिवलये स्वीयराज्ये समृद्धे
नानादुःखप्रशमनफलां घोषय त्वं मदीयाम् ॥
पूजां प्राप्तुं सुचिरतरां मर्त्यनोकैर्विसृष्टा-
मायाताहं मनुजवसतिं स्वर्गराज्यं विहाय ।
तस्मे पूजां किल प्रतिदिशं घोषय त्वं नरेश !
कीर्त्तिस्ते सा तुहिनविमला भाविनी नात्र चिन्ता ॥

श्रीशिव उवाच ।–हुक्कादेव्या वचः श्रुत्वा जाहाङ्गीरो नरेश्वरः ।
साष्टाङ्गं तां प्रणम्यादौ सगद्गदमभाषत ॥

जाहाङ्गीर उवाच ।–अद्यास्मि सार्थकजनुर्भवतीं विलोक्य
जातं हि देवि सफलं मम नेत्रयुग्मम् ।
त्वत्पादपद्मरजसा भवनं ममाद्य
पूतं,-ममापि सदये ! बत पूत आत्मा ॥

अद्यैव तेऽर्च्चनमहं मम राज्यमध्ये
संघोषयामि,-ननु तत् कृतमेव विद्धि ।
चिन्तां जहीहि, यदि वत्सरमात्रमध्ये
सम्पूजिता न भवती,-न तदास्मि भूपः ॥

श्रीशिव उवाच ।-हुक्कादेवी तथेत्युक्त्वा तद्वाक्यपरितोषिता ।
उत्पपाताथ खं हर्षसंप्लुतहृदयान्तरा ॥

श्रीदुर्गोवाच ।-ततः पुनः कथं वृत्तं हुक्कादेव्याः प्रपूजनम् ।
श्रोतुमिच्छामि तत् सर्व्वं कृपया कथयाशु मे ॥

श्रीशिव उवाच ।-शृणु देवि ! प्रवक्ष्यामि त्वया शुश्रूषितां कथाम् ।
यतस्याः श्रवणेनैव हुक्कादेव्याः प्रिया भवेत् ॥

ततः समाहूय नृपश्च सर्व्वान्
कृत्वा च मन्त्रं सचिवैः सहैव ।
देशे विदेशे सकले स्वराष्ट्रे
संप्रेषयामास विघोषकान् सः ॥

तद्घोषकास्ते सह डिण्डिमेन
सर्व्वत्र तारं कृतघोषणाश्च ।
राजानमासाद्य कृतप्रणामाः
कृतं स्वकार्य्यं जगदुर्हि सर्व्वं ॥

एकस्मिन् दिवसे च भूपतिवरे निद्राति शय्योपरि
हुक्का सा नृपतेर्गृहे सकलिका धूमाकुला चायपौ ।
तां दृष्ट्वा प्रणतं हि सा जलधरध्वानेन हृष्टाऽब्रवीत्
"सन्तुष्टाऽस्मि नृप ! त्वयि प्रभुवरे मत्पूजने तत्परे" ॥

जाहांगीर उवाच ।-धूर्यद्धूमापिहितनयने ! कृष्णवर्णे ! सशब्दे !
सान्निध्याये शिरसि कलिकां मृन्मयीं धारयन्ति !
तैलेनापि प्रतिदिनमहो चिक्कणीभूतकाये !
नृणां चित्ते सततसुखदे ! देवि ! हुक्के ! नमस्ते ॥

जाहांगीरस्तवं श्रुत्वा हुक्कादेवी तुतोष च ।
ततः प्रभृति संसारे पूजा तस्याः प्रवर्त्तिता ॥

# महापुराणसारः ।

अस्ति हि अष्टादशसु विद्यास्थानेषु पुराणमन्यतमं विद्यास्थानम् । तच्च पुराणं महापुराणोपपुराणभेदेन द्विविधम् । महापुराणं द्वैपायनव्यासप्रणीतत्वेन ख्यातम् । उपपुराणञ्च अन्यैर्मुनिभिः कृतमिति । महापुराणञ्च ब्राह्म-पाद्म-वैष्णव-शैव-भागवत-नारदीय-मार्कण्डेयाग्नेय-भविष्य ब्रह्मवैवर्त्त-लिङ्ग-वराह-स्कन्द-वामन-कूर्म्म-मत्स्य गरुड़-ब्रह्मभेदाद् अष्टादशविधम् । उपपुराणमपि तावत्-संख्यकमेव । तथा च विष्णुपुराणे—'ब्राह्मं पाद्मं वैष्णवञ्च शैवं भागवतं तथा । तथान्यन्नारदीयञ्च मार्कण्डेयञ्च सप्तमम् ॥ आग्नेयमष्टमञ्चैव भविष्यं नवमं स्मृतम् । दशमं ब्रह्मवैवर्त्तं लैङ्गमेकादशं स्मृतम् ॥ वाराहं द्वादशं चैव स्कान्दञ्चैव त्रयोदशम् । चतुर्दशं वामनञ्च कौर्म्मं पञ्चदशं स्मृतम् ॥ मात्स्यं च गारुड़ञ्चैव ब्रह्माण्डञ्च ततः परम्" इति ॥

तत्र महापुराणञ्च सात्त्विक-राजसिक-तामसिकभेदेन त्रिविधम्, यथोक्तं नारदीये—"मात्स्यं कौर्म्मं तथा लिङ्गं शैवं स्कान्दं तथैव च । आग्नेयञ्च षड़ेतानि तामसानि निबोधत ।

वैष्णवं नारदीयञ्च तथा भागवतं शुभम् । गारुड़ञ्च तथा पाद्मं वाराहं शुभदर्शने । सात्त्विकानि पुराणानि विज्ञेयानि शुभानि वै ।

ब्रह्माण्डं ब्रह्मवैवर्त्तं मार्कण्डेयं तथैव च । भविष्यं वामनं ब्राह्मं राजसानि निबोधत । सात्त्विका मोक्षदाः प्रोक्ताः राजसाः स्वर्गदाः शुभाः । तथैव तामसा देवि ! निरय-प्राप्ति-हेतवः ।"　　(पद्मोत्तरखण्डे ४२ अध्यायः)

तत्र महापुराणानामतिविस्तीर्णतया तदध्ययन-विहीनानाम् इदानीन्तनानामालस्यपरायणानां जनानाम् अनायासेन अल्पसमयेन च पुराणार्थं जिज्ञासूनां सुखबोधार्थं स्वल्पग्रन्थः पुराणसारः सङ्कल्यते । यद्यपि तत्र केषुचित् महापुराणेषु शिवस्येश्वरत्वेन केषुचिन्नारायणस्य केषुचिद्वा गणेशस्य ब्रह्मणो भारत्या रमाया दुर्गाया वा ईश्वरतया वर्णनमापाततो ऽसमञ्जसमिव प्रतिभाति, तथापि तेषां सर्व्वेषां हरिहरादीनां लीलाविग्रहावच्छिन्नानां सच्चिदानन्दब्रह्माभिन्नतया सर्व्वशक्तिमत्तया च सामञ्जस्यं संविधातुं यतिष्यते चेति ।

पूर्व्वं मरीचिना पृष्टो ब्रह्मा पुराणसारं कथितवान् । तत् सर्व्वं सनातनो नारदाय कथयामास । व्यासस्तु तत्सर्व्वं शिष्येभ्यः प्रकाशयामास

तत्र प्रथमं ब्रह्मपुराणं—तच्च दशसहस्रश्लोकात्मकम्, तत्पूर्व्वभागे प्रथमे देवानामसुराणाञ्च उत्पत्तिः कीर्त्तिता, ततो दक्षादीनां लोकेश्वरस्य सूर्य्यस्य च वंशानुकीर्त्तनम्, यत्र वंशे चतुर्व्यूहरूपेण परमात्मा परमानन्दरूपो रामोऽवततार । ततश्चन्द्रवंशस्य कीर्त्तनम्, ततो जगदीशस्य कृष्णस्य कल्मषापहं चरित्रं वर्णितम् । ततो द्वीप-वर्ष-सिन्धूनां वर्णनम् । ततः पाताल-स्वर्ग-नरकाणां समाख्यानम् । ततः सूर्य्यस्तुतिकथनम्, ततः पार्व्वत्या जन्म विवाहश्च निगदितः । ततो दक्षयज्ञवर्णनम्, तत एकाम्रक्षेत्रवर्णनमिति पूर्व्वभागः ।

तदुत्तरभागे प्रथमे पुरुषोत्तमवर्णनम्, ततो विस्तरेण तीर्थयात्राविधानं वर्णितम्, तत्र कृष्णचरित्रं विस्तरात् समुदीरितम् । ततो यमलोकस्य वर्णनं, पितृश्राद्धविधिश्च; ततो वर्णधर्म्मा आश्रमधर्म्माश्च वर्णिताः । ततो विष्णुधर्म्मयुगाख्यानम्, ततः प्रलयवर्णनम्, ततो योगानां सांख्यानाञ्च समाख्यानम्, ततो ब्रह्मवादसमुद्देशः । एतत् भागद्वयसमन्वितं ब्रह्मपुराणमिति ।

द्वितीयं पद्मपुराणम्—तच्च सृष्टि-भूमि-स्वर्ग-पातालोत्तरभेदेन पञ्चखण्डात्मकं, पञ्चपञ्चाशत्सहस्रश्लोकात्मकञ्च । तत्र प्रथमे सृष्टिखण्डे पुलस्त्येन ऋषिणा भीष्माय सृष्ट्यादिक्रमेण नानाख्यानेतिहासादिभिर्धर्म्मविस्तरो वर्णितः । ततः पुस्करक्षेत्रमाहात्म्यं वर्णितम्, ततो वेदपाठादिलक्षणं ब्रह्मयज्ञविधानञ्च वर्णितम् । ततो दानानां कीर्त्तनम्, ततः शैलजाया विवाहः । ततस्तारकासुराख्यानम्, ततो गवादीनां माहात्म्यं कीर्त्तितम्, ततः कालकेयप्रभृतिदैत्यानां वधवर्णनम्, ततोऽग्रहाणामर्च्चनम् दानञ्च विस्तरेण कीर्त्तितम्, एतत् सृष्टिखण्डमिति ।

द्वितीये भूमिखण्डे पितृमात्रादीनां पूज्यत्वम्, तत्र शिवशर्म्मवृत्तान्तकीर्त्तनम्, ततः सुव्रतस्योपाख्यानम्, ततो वृत्रासुरवधवर्णनम्, ततः पृथोर्वेणस्य च आख्यानम्, ततो धर्म्माख्यानम्, ततः पितृशुश्रूषणाख्यानम्, ततो नहुषस्य ययातेश्च चरितं वर्णितम् । प्रसङ्गेन ततो गुरुतीर्थ-निरूपणम् । राज्ञा जैमिनिसंवादः, अशोकसुन्दरीकथा, हुण्डदैत्यवधवर्णनम् । ततो विहुण्डदैत्यवधसंयुतं कामोदाया आख्यानम्, ततो महात्मना च्यवनेन कुञ्जलस्य संवादः । ततः सिद्धाख्यानं, ततोऽस्य फलोहनं सूतशौनकसंवादः, एतत् भूमिखण्डमिति ।

तृतीये स्वर्गखण्डे सौतिना ब्रह्माण्डोत्पत्तिर्वर्णिता । ततो भूमिलोकसंस्थानसहितं तीर्थाख्यानम् । ततो नर्मदाया उत्पत्तिः तत्तीर्थकथा च वर्णिता । कुरुक्षेत्रादितीर्थानां पुण्यकथा वर्णिता । ततः कालिन्दीमाहात्म्यवर्णनम् । ततः

काशीमाहात्म्यम्, ततो गयाया प्रयागस्य च माहात्म्यं वर्णितम्, ततो वर्णाश्रमानुरोधेन कर्म्मयोगनिरूपणम्, ततो व्यास-जैमिनिसंवादः, ततः समुद्रमन्थनाख्यानम्, ततो व्रताख्यानम्, ततः ऊर्ज्ज-(कार्त्तिक) पञ्चाहमाहात्म्यम्, ततः सर्व्वापराधभञ्जनस्तोत्रम् । एतत् स्वर्गखण्डमिति ।

चतुर्थे पातालखण्डे प्रथमं रामचन्द्रस्य राज्याभिषेकः, अगस्त्यादीनां महर्षीणामागमनम्, पौलस्त्यवंशकीर्त्तनम्, रामाय अश्वमेधोपदेशः, ततः अश्वमेधीयाश्वस्य नानादेशविचरणम्, प्रसङ्गेन नानाराजकथा वर्णिता । ततो जगन्नाथानुवर्णनम्, ततो वृन्दावनस्य माहात्म्यं वर्णितम्, ततः श्रीकृष्णस्य नित्यलीलावर्णनम्, ततो माधव—(वैशाखमास) स्नानमाहात्म्यप्रसङ्गेन स्नानदानार्च्चनानां फलकीर्त्तनम्, ततो वराह-पृथिवी-संवादः, यम-ब्राह्मणयोः कथा, ततो राजदूतसंवादः, ततः कृष्णस्तोत्रम्, शिवशम्भुसमायोगः, ततो दधीचिमुनेराख्यानम्, ततो भस्ममाहात्म्यं शिवमाहात्म्यञ्च वर्णितम्, ततो देवरातसुतस्याख्यानं पुराणज्ञस्य प्रशंसा, गौतमाख्यानञ्च, ततः शिवगीता, ततः कल्पान्तरीयरामकथा भरद्वाजाश्रमस्थितिविषये । एतत् पातालखण्डमिति ।

पञ्चमे उत्तरखण्डे प्रथमं श्रीगौर्य्यै शिवेन पर्व्वताख्यानं वर्णितम्, ततः जालन्धरकथा, ततः श्रीशैलवर्णनम्, ततः परं राजर्षेः सगरस्य वर्णनम्, ततो गङ्गा-प्रयाग-काशी-गयादीनां माहात्म्यं वर्णितम्, तत आम्रादिदानमाहात्म्यम्, ततो महाद्वादशीव्रतस्य चतुर्व्विंशत्येकादशीव्रतानाञ्च माहात्म्यं कथितम्, ततो विष्णुधर्म्मसमाख्यानं, विष्णुसहस्रनामकथनं, कार्त्तिकव्रतमाहात्म्यं माघस्नानफलं, जम्बुद्वीपस्य तीर्थानां माहात्म्यं, साभ्रमत्याश्च माहात्म्यं वर्णितम्, ततो नृसिंहोत्पत्तिकथनं, देवशर्म्मादिकानामाख्यानं, ततो गीतामाहात्म्यं श्रीमद्भागवतस्य भक्तेश्चमाहात्म्यं, ततः बहुतीर्थकथायुतं इन्द्रप्रस्थस्य माहात्म्यं, मन्त्ररत्नाभिधानञ्च, ततःत्रिपाद्विभूत्यनुवर्णनम्, अतःपरं मत्स्यादीनाम् अवतारकथा । रामनामशतं तन्माहात्म्यं, भृगुणा श्रीविष्णोर्वैभवस्य च परीक्षणम् । एतद् उत्तरखण्डमिति ।

**तृतीयं विष्णुपुराणं**–तच्च त्रयोविंशतिसहस्रश्लोकात्मकम् । तस्य आदिभागे षट् अंशा निर्द्दिष्टाः । तत्र प्रथमभागस्य प्रथमांशे आदिकारणसर्गः देवादीनाञ्च उत्पत्तिर्वर्णिता, ततः समुद्रमन्थनाख्यानं दक्षादीनां प्रजापतीनाञ्च आख्यानम्, ततो ध्रुवचरितं पृथोश्च चरितं वर्णितम्, ततः प्रचेतसाख्यानं प्रह्लादचरितञ्च वर्णितम् । इति प्रथमांशः ।

प्रथमभागस्य द्वितीयांशे—प्रियव्रताख्यानं द्वीपवर्षनिरूपणं, पातालनरकवर्णनं, सप्तसर्गनिरूपणं, सूर्य्यादिग्रहगतिकथनं, भारतस्य चरितं, मुक्तिमार्गनिदर्शनं, निदाघऋभुसंवादश्चेति। इति द्वितीयांशः।

प्रथमभागस्य तृतीयांशे—मन्वन्तरसमाख्यानं, वेदव्यासस्यावतारकथा, नरकोद्धारकञ्च कर्म्म निगदितम्, ततः सगरौर्व्वसंवादे सर्व्वधर्म्मनिरूपणं श्राद्धकल्पश्च वर्णितः, ततः सदाचारो मायामोहकथा च वर्णिता। इति तृतीयांशः।

प्रथमभागस्य चतुर्थांशे—सूर्य्यवंश-चन्द्रवंश-कथनम् अनेकराजगणकथासहितमिति।

प्रथमभागस्य पञ्चमांशे-कृष्णावतारसंप्रश्नः, गोकुलवृत्तान्तवर्णनं, पूतनादिवधः कृष्णेन बाल्यकाले, कौमारे अघासुरादीनां हिंसनं, कैशोरे कंसादीनां निधनञ्च कृतम्। ततो माथुरवृत्तान्तवर्णनं, कृष्णस्य यौवनावस्थायां द्वारवतीलीला प्रोक्ता। अत्रानेकदैत्यवधः विवाहश्च वर्णितः। ततः योगेश्वरेश्वरस्य कृष्णस्य भूभारहरणं, अष्टावक्रीयाख्यानञ्चेति पञ्चमांशः।

प्रथमभागस्य षष्ठेऽंशे—कलिस्वभाववर्णनं, नित्यनैमित्तिकात्यन्तिक-प्राकृतिकभेदेन चतुर्व्विधलयवर्णनम्। केशिध्वजेन खाण्डिक्याय ब्रह्मज्ञानसमुद्देशः कृत इति षष्ठांशः।

चतुर्थं वायुपुराणम्। एतत् पुराणं चतुर्व्विंशतिसहस्रश्लोकात्मकम्, अत्र श्वेतकल्पीयधर्म्माणि वायुना कथितानि, श्वेतकल्पस्तु त्रिंशत्कल्पानां प्रथमतया निर्द्दिष्टः। कल्पकालस्तु ब्रह्मपरमायुःशतवर्षपर्य्यन्तः। अत्र भागद्वयं वर्त्तते, तत्र पूर्व्वभागे स्वर्गादीनां लक्षणं सविस्तरं वर्णितं, मन्वन्तरेषु राज्ञां वंशाः कीर्त्तिताः, मन्वन्तरपदेन दिव्यपरिमाणेन सप्ततियुगकालः कथ्यते। गयासुरस्य हननं, गयाश्राद्धविधानञ्च अत्र कीर्त्तितम्। मासानां माहात्म्यं, माघमासस्य फलाधिक्यं वर्णितम्। दानधर्म्मा राजधर्म्माश्च कीर्त्तिताः। भूमि-पाताल-व्योम-चारिणां निर्णयः, व्रतानाञ्च इति पूर्व्वभागः।

तदुत्तरभागे प्रथमे नर्म्मदातीर्थवर्णनं, ततः शिवसंहिता वर्णिता। शिवेन लोकगुरुणा लोकहिताय स्वशरीरात् कापि सरिद्रूपा शान्तिरवतारिता। सा रेवेयमाख्याता। ओङ्कारेश्वरमाहात्म्यं, पश्चिमसागरं यावत् पञ्चत्रिंशन्नदीनां सङ्गमाः वर्णिताः। रेवातीरे प्रसिद्धानि चतुःशतानि तीर्थानि सन्ति। इत्युत्तरभागः।

पञ्चमं श्रीभागवतं पुराणं—तच्चाष्टादशसहस्रश्लोकात्मकम्, एतत्

सुरपादपस्वरूपं द्वादशस्कन्धयुक्तम्। तत्र प्रथमस्कन्धे सुतेन सह ऋषीणां सङ्गतिः, व्यासस्य पाण्डवानाञ्च चरितं, परीक्षितो राज्ञ उपाख्यानमिति प्रथमस्कन्धः।

द्वितीये स्कन्धे–परीक्षित्शुकसंवादः, सृतिद्वयनिरूपणं, (सृतिः पन्था इत्यर्थः), ब्रह्म-नारद-संवादः, अवतारचरितं, पुराणलक्षणञ्चेति द्वितीयस्कन्धः।

तृतीयस्कन्धे–विदुरचरितं; मैत्रेयेण सह विदुरसमागमः। सृष्टिप्रकरणं, देवहूतिपुत्रेण कपिलेन सांख्यशास्त्राख्यानम्, इति तृतीयस्कन्धः।

चतुर्थस्कन्धे-आदौ सतीचरितं, ततो ध्रुवचरितं, ततः राजर्षेः पृथोराख्यानं, ततः प्राचीनवर्हिष उपाख्यानमिति चतुर्थस्कन्धः।

पञ्चमस्कन्धे-प्रियव्रतस्य मनोः पुत्रस्य तद्वंश्यानाञ्च चरितं, ततो ब्रह्माण्डान्तर्गतानां चतुर्द्दशभुवनानाञ्च नरकाणाञ्च संस्थितिः वर्णितेति पञ्चमस्कन्धः।

षष्ठस्कन्धे-अजामिलस्य चरितं, ततो दक्षसृष्टिप्रकरणं, ततो वृत्रासुराख्यानं, ततः मरुतामुत्पत्तिरिति षष्ठस्कन्धः।

सप्तमस्कन्धे-प्रह्लादचरितं, वर्णधर्म्माश्रमधर्म्मयोर्निरूपणम्। वासनाकर्म्म च निरूपितमिति सप्तमस्कन्धः।

अष्टमस्कन्धे-गजेन्द्रमोक्षणाख्यानं, मन्वन्तरनिरूपणं, समुद्रमन्थनाख्यानं, बलेर्दैत्यराजस्य वैभवं बन्धनञ्च, मत्स्यावतारचरितञ्चेति अष्टमस्कन्धः।

नवमस्कन्धे-सोमसूर्य्ययोर्वंशनिरूपणं, तद्वंशीयानाञ्च राज्ञां चरितं वर्णितमिति नवमस्कन्धः। दशमस्कन्धे-कृष्णस्य बालचरितं, कौमारचरितं, व्रजस्थितिश्च वर्णिता। कैशोरे मथुरागमनं तच्चरितञ्च, यौवने द्वारकागमनं तद्वृत्तं भुभारहरणञ्चेति दशमस्कन्धः।

एकादशस्कन्धे-नारद-वसुदेव-संवादः, यदोर्दत्तात्रेयेण श्रीकृष्णेन च उद्धवस्य संवादः, यादवानां परस्परं युद्धे विनाशो मुक्तिश्चेति एकादशस्कन्धः।

द्वादशस्कन्धे–भविष्यकलिवर्णनं, राज्ञः परीक्षितो मोक्षः, वेदशाखाप्रणयनं, मार्कण्डेय-तपस्या, सौरीसात्वतीविभूतिश्च कथिता, ततः पुराणसंख्याकथनमिति द्वादशस्कन्धः। इति श्रीभागवतपुराणमिति।

**षष्ठं नारदीय-पुराणमिति।** तच्च पञ्चविंशतिसहस्रश्लोकात्मकमिति। तत्र पूर्व्वभागे प्रथमपादे सूतशौनकसंवादः, सृष्टेः संक्षिप्तविवरणं, प्रवृत्तिमूला नानाधर्म्माश्च सनकेन निरूपिता इति १मपादः।

पूर्व्वभागे द्वितीयपादे मोक्षधर्म्माः, मोक्षोपायाश्च निरूपिताः। ततो वेदा-

ङ्गानां कथनं, ततः शुकस्य उत्पत्तिः विस्तरात् नारदाय सनन्दनेन निगदितेति द्वितीयः पादः ।

पूर्व्वभागतृतीयपादे महातन्त्रे पशुपाशपशुमोक्षणं समुद्दिष्टम्, ततो मन्त्राणां शोधनं, दीक्षा, मन्त्रोद्धारः, पूजनप्रयोगः, कवचं, सहस्रनामस्तोत्रञ्च गणेश-सूर्य्य-विष्णूनां शिवशक्त्योश्चानुक्रमेण सनत्कुमारेण नारदाय कथितमिति तृतीयः पादः ।

पूर्व्वभागे चतुर्थपादे पुराणलक्षणं प्रमाणञ्च दानञ्च दानकालपुरःसरं पृथक् पृथक् समुद्दिष्टं, चैत्रादिसर्व्वमासेषु प्रतिपदादीनां तिथीनां व्रतञ्च पृथक् पृथक् सनातनेन मुनिना नारदाय समुपदिष्टम्, एतत् बृहदाख्यानसंज्ञमिति चतुर्थपादः ।

तदुत्तरभागे एकादशीव्रतप्रसङ्गे—वशिष्ठ-मान्धातृ-संवादः रुक्माङ्गदस्य राज्ञः कथा, मोहिन्या उत्पत्तिः कर्म्म च, मोहिन्यै वसुना शापः, पश्चादुद्धरणञ्च वर्णितं, ततो गङ्गामाहात्म्यं, गयायात्रानुकीर्त्तनं, काश्या माहात्म्यं, पुरुषोत्तमस्य वर्णनं, तद्यात्राविधानं, तत् क्षेत्रस्य च माहात्म्यं वर्णितं, ततः प्रयागस्य कुरुक्षेत्रस्य हरिद्वारस्याख्यानं माहात्म्यञ्च वर्णितं, ततः कामदाख्यानं वदरीतीर्थमाहात्म्यं कामाख्यायाः प्रभासस्य च माहात्म्यं वर्णितं, ततः पुराणाख्यानं, गौतमाख्यानं वेदपादस्तवश्च निरूपितः, ततः गोकर्णक्षेत्रमाहात्म्यं लक्ष्मणस्याख्यानकं सेतु-माहात्म्यं, नर्म्मदातीर्थमाहात्म्यं, अवन्ती-मथुरा-वृन्दावनानाञ्च माहात्म्यं, वसोश्च ब्रह्मान्तिके गमनं, मोहिनी-चरितञ्चेति नारदीयपुराणम् ।

सप्तमं मार्कण्डेयपुराणं—तच्च नवसहस्रश्लोकात्मकम् । तस्य उपक्रमणिका यथा प्राक् किल भगवान् वादरायणान्तेवासी जैमिनिरधीतसाङ्गवेदेतिहासादि-रपि महाभारताख्यानेषु केषु केष्वपि सन्दिहानो द्वैपायनावसरमलभमानश्चिरजी-विनं महर्षिमार्कण्डेयमुपगम्य पप्रच्छ, भगवन् कथं भगवान्नारायणो मानुषेषु जज्ञे? कथम्वा पाण्डुपुत्राणां एकैव द्रौपदी भार्य्या बभूव? कथञ्च भगवान् वलरामो ब्रह्महत्यायाः प्रायश्चित्तं तीर्थयात्राप्रसङ्गेन चकार? कथञ्च द्रौपदेयाः पञ्च कृष्ण-सनाथा अपि अनाथवदकृतदारपरिग्रहा एव मृताः? एतत् सर्व्वं मम सन्देहविषयं ब्रूहीति। ततस्तेनोक्तो मार्कण्डेयोऽपि प्राह स्म, नायमस्माकं कथावसरः, समुपस्थितः क्रियाकाल स्त्वदेतान्प्रश्नान् विविधविद्याविशारदान् विज्ञातशब्दब्रह्मपतत्त्रिणो मुनितनयान् प्रागजन्मनि पितृशापेन पक्षियोनिमापन्नान् अविनष्टप्रागजन्मार्ज्जित-ज्ञानविज्ञानान् विन्ध्यकन्दरनिवासिनो द्रोणपुत्रान् पिङ्गाक्ष-विराध-सुपुत्र-सुमुख-

संज्ञकान् चतुरः पक्षिणः पृच्छ, ते किल सकल-सन्देहविषयम् अनन्धिगं वक्ष्यन्तीति, अथ तदुपदिष्टो जैमिनिरपि विन्ध्याचलं गत्वा शिलापट्टासीनांस्तानेतानेव प्रश्नान् पप्रच्छ । ते च क्रमेण एतान् प्रश्नान् निरूप्य क्रमेण तत्पृष्टान् अन्यानपि प्रश्नान् मार्कण्डेय-क्रौष्टुकि-संवादानुक्रमेण कथयामासुः ।

तत्र मार्कण्डेयजैमिनिसंवादः, धर्म्मपक्षिणां जन्मनिरूपणं, तेषां पूर्व्वजन्म-कथा, इन्द्रस्य विक्रिया, बलदेवस्य तीर्थयात्रा, द्रौपदेयानां कथा, हरिश्चन्द्रस्य कथा च निरूपिता । तत आडीबक-युद्धं, पितापुत्रसंवादश्च वर्णितः । ततः दत्तात्रेय-कथा, हैहयचरितं च, ततः महालसाया आख्यानं अलर्कचरितं च वर्णितम् । ततः सृष्टि-संकीर्त्तनं, कल्पान्तकालनिर्द्देशश्च, ततो यक्षसृष्टिनिरूपणं ततः रुद्रादिसृष्टिकथा । ततो द्वीपानां वर्षाणाञ्चानुकीर्त्तनं, ततश्चतुर्द्दशमनुवर्णनं, तत्राष्टम मन्वन्तरे भगवत्या दुर्गाया माहात्म्यवर्णनम् । ततः प्रणवोत्पत्ति-कथनं, मार्त्तण्डस्य जन्म तन्माहात्म्यं च । वैवस्वत-वंशः, ततो वत्सप्रीचरितं, खनित्र-चरितं, अविक्षित-चरितं, किमिच्छव्रतकथनं, नरिष्यन्तचरितं, इक्ष्वाकुचरितं तुल-स्याश्च चरितं वर्णितम् । ततो रामचन्द्रस्य चरितं, कुशस्य वंशकथनं, ततश्चन्द्रवंशानुकीर्त्तनं, पुरूरवश्चरितं नहुष-ययातीनां चरितं यदुवंशानुकीर्त्तनञ्च । ततः श्रीकृष्णस्य बाल्य-यौवन-वार्द्धक्येषु क्रमेण व्रज-माथुर-द्वारकालीलावर्णनम् । सर्व्वाव-तारज-कथा, ततः साङ्ख्यज्ञानस्य समुद्देशः प्रपञ्चासत्यत्वकीर्त्तनं मार्कण्डेयस्य चरितं पुराण-श्रवण-फलञ्चेति मार्कण्डेयपुराणम् ।

अष्टमम् आग्नेय-पुराणं—तत्र ईशानकल्पवृत्तान्तं वशिष्ठाय वह्निरब्रवीत् । तच्च पञ्चदश-सहस्रश्लोकात्मकम् । तत्र प्रथम पुराणप्रश्नः, सर्व्वावतारजकथा, सृष्टिप्रकरणं, विष्णुपूजाविधानम् आदिकार्य्यं, ततः मन्त्रमुद्रालक्षणं सर्व्वदीक्षा-विधानं अभिषेकनिरूपणं मण्डलादीनां लक्षणं, कुशमार्ज्जनं पवित्रारोपणविधिः देवालयादिविधिश्च निरूपितम्, ततःशालग्रामपूजा, मूर्त्तीनां पृथक् पृथक् लक्षणं, न्यासादीनां विधानं, प्रतिष्ठाकर्म्म, पूजाकर्म्म च निरूपितं, ततो विनायकादि-दीक्षाणां विधिर्न्नयः ।

ततः सर्व्वदेवानां प्रतिष्ठाविधिः ततो ब्रह्माण्डस्य निरूपणं, गङ्गादितीर्थमाहात्म्यं, जम्बुद्वीपादिवर्णनं, ऊर्द्ध्वाधोलोकरचना, ज्योतिश्चक्रनिरूपणं, ज्योतिःशास्त्रञ्च युद्धजयवर्णनं, ततः षट्कर्म्मनिरूपणं मन्त्रयन्त्रौषधिगणश्च वर्णितः, ततः कुब्जिकादिसमर्च्चा, पीठान्यासविधिः कोटिहोमविधानञ्च निरूपितम् । ततो

ब्रह्मचर्य्याद्याश्रमविधिः श्राद्धकल्पविधिश्चेति । ततो ग्रहयज्ञः श्रौतं स्मार्त्तं कर्म्म च निरूपितं, ततः प्रायश्चित्तानुकीर्त्तनं तिथीनां वाराणांच व्रतादिकार्य्यं निर्णीतम् । ततो नक्षत्रव्रतनिर्द्देशो मासिकव्रतसमुद्देशः, दीपदानविधिश्चेति । नवव्यूहार्च्चनं, दाननिरूपणं, नाडीचक्रसमुद्देशः, सन्ध्याविधिः गायत्र्यर्थकथनं, लिङ्गस्तोत्रं, राज्याभिषेकविधानं, राज्ञां धर्म्मकृत्यं स्वप्नाध्यायः शुभाशुभशकुन-निरूपणं मण्डलनिरूपणं, युद्धदीक्षाविधिः, रामोक्तनीतिनिर्द्देशः, रत्नानां लक्षणं धनुर्व्विद्याकथनं, व्यवहारप्रदर्शनं, देवासुरविमर्द्दकथनं, आयुर्व्वेदशास्त्रकथनं, वृक्षायुर्व्वेदकथनं, हस्त्यश्वादिचिकित्सा, तेषां शान्तिः, सर्पचिकित्सा, नाना-पूजाविधिः, नाना शान्तयश्च छन्दःशास्त्रं साहित्यशास्त्रञ्च, सिद्धशिष्टानुशिष्टं अर्थाद् व्याकरणशास्त्रं स्वर्गादिवर्गभेदेन कोषो निरूपितः । प्रलयलक्षणं, शारी-रिकनिरूपणं, नरकवर्णनं योगशास्त्रं, ब्रह्मज्ञानञ्चेति, ततः पुराणफलश्रुतिरित्या-ग्नेयपुराणम् ।

नवमं भविष्यपुराणं—तच्च चतुर्द्दशसहस्रश्लोकात्मकं ब्राह्म-वैष्णव-शैव-सौर-प्रतिसर्गात्मकं पञ्चपर्व्वान्वितं अघोरकल्पवृत्तान्तयुतञ्चेति । तत्रादिमं ब्राह्म-पर्व्व, तत्र पुराणोपक्रमः सूतशौनकसंवादः, पुराणप्रश्नः, आदित्यचरितं नाना-ख्यानयुक्तं सृष्ट्यादीनां लक्षणं, पुस्तकलेखकलेखानां लक्षणं, सर्व्वेषां संस्काराणां लक्षणञ्च कीर्त्तितम् । प्रतिपदादितिथीनां सप्तकल्पाः । अष्टम्यादीनां कल्पः वैष्णवे पर्व्वणि निरूपितः । शैवे पर्व्वणि विविधाः कथाः, सौरे पर्व्वणि अन्त्यक-थाचयः ( भविष्यद्वर्णनं ) प्रतिसर्गाध्याय-पर्व्वणि नानाख्यानानि विद्यन्ते । पुरा-णस्योपसंहारश्चेति । एषु पञ्चसु पर्व्वसु प्रथमपर्व्वणि आधिक्येन ब्रह्ममहिमा, द्वितीयादौ शिवस्य विष्णोः सूर्य्यस्य च महिमा वर्णितः, प्रतिसर्गपर्व्वणि नाना-ख्यानेन भविष्यं विनिर्द्दिष्टमिति भविष्यपुराणम् ।

दशमं ब्रह्मवैवर्त्तं—तच्च अष्टादशसहस्रश्लोकात्मकं, ब्रह्मप्रकृति-गणेश-जन्म-खण्डभेदेन चतुर्भागात्मकञ्चेति, तत्र प्रथमे सूतर्षिसंवादः पुराणोपक्रमः सृष्टिप्रक-रणं नारदवेधसोर्विवादः, द्वयोः पराभवः, शिवलोकगमनञ्च शिवात् मुने र्ज्ञान-लाभः। ततः नारदस्य मननमिति ब्रह्मखण्डम् । द्वितीये प्रकृतिखण्डे नारद-सा-वर्णिसंवादः कृष्णमाहात्म्ययुक्ता नाना कथा च, ततः प्रकृते स्तदंशानां कलानाञ्च माहात्म्यं पूजादिकञ्च विस्तरेण निरूपितमेतत् प्रकृतिखण्डम् । तृतीये गणेश-खण्डे—गणेशजन्मप्रश्नः, पुण्यकमहाव्रतञ्च ततः पार्व्वत्याः कार्त्तिकेन सह विघ्ने-

शजन्म जामदग्न्यस्य कार्त्तवीर्य्यस्य चरितञ्चेति, ततो गणेश-परशुरामयोर्विवादः, एतद्गणेशखण्डमिति ।

चतुर्थे श्रीकृष्णजन्मखण्डे—श्रीकृष्णजन्मप्रश्नः श्रीकृष्णस्य जन्म, गोकुले गमनं, पुतनादिवधः, ततो बाल्यकौमारजा लीला वर्णिता। शारदी रासक्रीड़ा गोपीभिः सह कीर्त्तिताः, रहस्ये राधया सह बहुधा क्रीड़ा वर्णिता, ततः अक्रूरेण सह श्रीकृष्णस्य मथुरागमनं कंसादीनां वधश्चेति । ततः सन्दीपनेः सकाशात् विद्योपादानं, ततो यवनवधः, ततो द्वारकागमनं, ततो नरकादीनां वधः एतत् श्रीकृष्णजन्मखण्डमिति, एतत् ब्रह्मवैवर्त्तपुराणम् ।

एकादशं लिङ्गपुराणं—शिवमाहात्म्यप्रकाशकं एकादशसहस्रश्लोकात्मकमिति । तत्र पूर्व्वभागे पुराणोपक्रमः, योगाख्यानं, ततः कायाख्यानं, लिङ्गोद्भवः, लिङ्गपूजाविधानञ्चेति, ततः सनत्कुमारशैलादिसंवादः, दधीचिचरितं, युगधर्म्मनिरूपणं भुवनकोषाख्यानं, सूर्य्यसोमवंशवर्णनं चेति । ततो विस्तरेण सर्गवर्णनं, त्रिपुरासुराख्यानं, लिङ्गप्रतिष्ठा, ततः पशुपाशविमोक्षणं, ततः शिवव्रतानि । ततः सदाचारनिरूपणं, प्रायश्चित्तकथनम्, अरिष्टनिरूपणं, काश्याः श्रीशैलाख्यावर्णनम्, अन्धकासुराख्यानं, वराहचरितं, नृसिंहचरितञ्चेति, ततोजलन्धरवधः ततः शैवसहस्रनाम कीर्त्तनं, ततो दक्षयज्ञविनाशनं, कामस्य दहनं, गिरिजायाः करग्रहः, ततोविनायकाख्यानं, शिवस्य नृत्याख्यानम्, उपमन्युकथा चेति पूर्व्वभागः । तदुत्तरभागे विष्णुमाहात्म्यकथनम्, अम्बरीषकथा, सनत्कुमारनन्दीशसंवादः, शिवमाहात्म्ययुक्तस्नानयागादिवर्णनम् । सूर्य्यपूजाविधिः शिवपूजा मुक्तिदा, दानानि बहुधोक्तानि, ततः श्राद्धप्रकरणं, ततः प्रतिष्ठा, ततः अघोरमन्त्रकीर्त्तनं, ततो व्रजेश्वरीमहाविद्या, ततो गायत्रीमहिमा च वर्णितः, ततः त्र्यम्बकस्य च माहात्म्यं, पुराणश्रवणफलञ्चेति लिङ्गपुराणम् ।

द्वादशं वराहपुराणं—एतत् चतुर्विंशतिसहस्रश्लोकात्मकं, विष्णुमाहात्म्यप्रकाशकं मानवकल्पीयवृत्तान्तयुक्तं चेति । तत्रादौ भूमिवराहसंवादः ततः आदिसृष्टिवृत्तान्तो, रभ्यस्य चरितं श्राद्धकल्पञ्चेति, ततो महातपस आख्यानं, ततो गौर्य्या उत्पत्तिः ततो विनायकस्य नागानां कार्त्तिकेयस्य आदित्यस्य गणानांच आख्यानं, ततो देव्या धनदस्य वृषस्य च आख्यानं, ततः सत्यतपसो व्रताख्यानं ततोऽगस्त्यगीता, रुद्रगीताच । ततो महिषासुरविध्वंसे त्रिशक्तिमाहात्म्यं वर्णितं, ततः पर्व्वाध्यायः, ततः श्वेतोपाख्यानं, ततो गोप्रदानिकञ्चेति, आदिसृष्ट-

वृत्तान्तो वर्णित इति प्रथमोद्देशः। ततः भगवद्धर्मके व्रततीर्थयोः कथा, द्वात्रिंशदपराधानां प्रायश्चित्तञ्चेति। सर्व्वेषां तीर्थानां पृथक् पृथक् माहात्म्यवर्णनं, मथुराया माहात्म्यं श्राद्धप्रकरणञ्चेति, धर्म्मपुत्रप्रसङ्गेन यमलोकवर्णनं, कर्म्मणां विपाकश्च, ततो विष्णुव्रतनिरूपणं गोकर्णस्य माहात्म्यञ्चेति पृथग् भागः। उत्तरभागे पुलस्त्यकुरुराजयोः संवादे सर्व्वतीर्थमाहात्म्यम् अशेषधर्म्माश्च व्याख्याताः, पौष्करं पुण्यपर्व्व च वर्णितमिति एतत् वराहपुराणम्। (क्रमशः)

## ऋणापव्ययपरित्यागपथप्रदर्शनम्।

अयि! गीर्वाणवाणीप्रवीणाः! धर्मधुरन्धराः! लौकिकव्यवहारनिपुणाः! दुःखजिहासवः! सुखाभिलाषुकाः! विद्वांसः! विद्यार्थिनश्च किमप्यत्र विचार्य प्रदर्श्यते मयेति। वितथमवितथं वा उपयुक्तमनुपयुक्तं वा सारमसारं वा श्रीमद्भिः विविच्य ग्रहणीयमेतत् स्वपरोपकाराय। इह खलु जगति भवतामपि न वैमत्य विदितञ्च, सर्वे लोकाः सुखाभिलाषुकाः सन्तीति। परन्तु अर्थानां व्ययेऽवधानं विना ऐहलौकिकं पारलौकिकञ्च सुखं न लभ्यते जनैः इति कुत्र कुत्र कथम् अर्थव्यवहारः कर्तव्यः, स एव पन्थाः प्रथमं प्रदर्शनीयः प्रकृतोपयोगाय। सर्वेषां जनानाम् आर्थिकी दशा न तुल्या, कस्यचिदायः स्वल्पः, कस्यचिदायोऽधिकः। केचन स्वकीयादायात् प्रतिमासं व्यये कृतेऽपि किञ्चित् रक्षितुं शक्नुवन्ति, केचित् निजार्जनात् स्वभरणपोषणादीन् सम्यक् कर्त्तुं न पारयन्ति। कस्यचित् पञ्चशतानि मुद्राः उपार्जनानि सन्ति, स खलु शतद्वयं व्ययीकृत्य शतत्रयं रक्षितुं समर्थः। कश्चित् सप्तशतानि प्रतिमासं मुद्राः लभते, तथापि उत्तमर्णपादत्रासभीत एव दृश्यते। अस्त्येवास्य कारणद्वयम्। पूर्वतः मया एतदेव प्रदर्श्यते कस्य नाम व्यय इति। स एव वास्तविको व्ययः आत्ममनोदेहोन्नतिलाभाय यः क्रियत इति। विद्यालाभाय शरीररक्षायै धर्मपालनाय देशकालानुसारतः परस्परं प्रीतिवर्द्धनाय च व्ययो भवति। व्ययस्यैतानि त्रिचतुराणि द्वाराणि। सर्वे जना एवमेव व्ययं कुर्वते। किन्तु भिन्नरुचित्वादेषां व्ययप्रकारोऽपि विविधः। कश्चित् केनचित् प्रकारेण व्ययं कुरुते, कश्चित् अन्येन प्रकारेण। प्रातःकाले सायंकाले च निर्जनप्रदेशवायुसेवनं सर्वेषां सुखकरं स्वास्थ्यवर्द्धकम् आवश्यकम्। रथेन गच्छतु पद्भ्यां वा गच्छतु, फलं भावि एव भ्रमणस्य।

केन प्रकारेण भ्रमणस्य कियान् लाभो भवतीति विचारस्तु न सम्प्रति क्रियते।

परन्तु कार्यत एकतोऽस्मादेव प्रकटीभवति, एकस्यैव कार्यस्य संपादनार्थं जनस्यैकस्य बहुव्ययो भवति, अन्यस्य तु एककपर्दिकाव्ययोऽपि न । यः खलु रथमारुह्य भ्रमति, तस्य यानरक्षणं तुरगपालनं रथरक्षकरक्षणं रथचालनभृत्यरक्षणञ्चावश्यकं भवति । वयं त्वेवं वक्तुं शक्नुमः । एकस्य यो व्यय आवश्यकः प्रतिभाति, सः अन्यस्य तु अनावश्यकः । अन्येष्वपि कार्येषु यो व्ययो भवति, तस्यापि ईदृशी गतिः । सारमेतत् प्रतिभाति यत् अस्मासु आवश्यको मितव्ययोऽनावश्यकोऽपव्यय एवसमाख्यातोऽस्ति । योधनिकः यस्यायोऽधिकः सोऽपि यदि आयादधिकं व्ययं करोति, तदा निरर्थकं धनमेव नाशयति, तस्यापि एतत्करणमनुचितमेव । यस्य स्वल्पायो व्ययस्तु विशेषः, स्वकीयामवस्थां ज्ञात्वापि बहुव्ययं करोति, अधिकमुपार्जितुमपि न शक्नोति, एकमुद्राव्ययस्थाने मुद्रात्रयव्ययं करोति स तु अतिगर्हितं करोति । यस्य गृहे मूषको भ्रान्त्वान्नकणमपि न लभते क्षुधाव्याकुलः, स एव जनः अहं धनिक इति बहिः प्रदर्शयितुं बहुमूल्यवस्त्रभूषणादिसज्जितो भवति, तस्माज्जनात्कोऽतिमूढः । अयमेवापव्ययः ऋणस्य मुख्यं कारणम् । धनाभावोऽपि द्वितीयः । व्ययबाहुल्ये मनुष्यः कथं स्वपुत्रकलत्रादीनां भरणपोषणादीनि सम्पादयेत् । न कश्चित् तादृगुपाय उपलभ्यते, येन स्वकार्यं साधयेत् । अगत्या ऋणग्रहणमेव स्वकीयकार्यसाधने सहायमवगच्छति । यथा एकस्य जनस्य प्रतिमासं दशमुद्राप्राप्तिः, किन्तु दशसंख्यकपुत्रकलत्रादिकारणाद् बहुव्ययः, कथयतु भवान्, तस्य निर्वाहः कथं भवेत् ऋणं विना । तदातु जनः ऋणग्रहणेनावश्यमेव कार्यं साधयिष्यति । तस्य गत्यन्तराभावे ऋणग्राहित्वं स्वयमेवापतेत् । मनुष्यो अनयावस्थया ऋणी भवेत् । किन्तु कारणद्वयेनानेनैव दुःखी भवति, ऋणग्रहणेनापव्ययेन च । प्राप्तिरल्पा, अधिको व्ययः । बहुव्यय आवश्यकतावशाद् भवेत् यदि, तस्य तु अन्यैव कथा । यः खलु अदूरदर्शी इन्द्रियपरायणतया कामेन स्वेच्छया वा अधिकमपव्ययं करोति, सोऽधिकं दुःखोपार्जनं करोति । न विचारयति भविष्यति किं भविष्यति इति । ऋणम् अतिदुःखस्य कारणम् । ऋणग्रस्तो जनः स्वसमयं सदा दुःखदुःखेन यापयति । ऋणग्रहणस्वभावो यो मनुष्यो भवति, तस्य पृष्ठानुधावनं न त्यजति ऋणशत्रुः । विशेषप्रयोजनाभावेऽपि सदैव ऋणेच्छा बलवती वर्तते । झटिति ऋणं गृह्णाति । ऋणार्त्तस्य जनस्य कुतो विवेचनाशक्तिः, विवेकशक्त्यभावे कः पुमान् सुखी ? ऋणी मानवः महतीम् आपदं भुंक्ते, स एव जानाति कष्टस्य परां काष्ठाम् । अन्यो जनो ज्ञातुं न शक्नोति । ऋणम् यस्मै दासपदवीं ददाति,

तस्य पिण्डं बहुधा न जहाति । अतो व्यवहारकुशलो जनः ऋणग्रहणेन आत्मानं न दुःखिनं करोति । ऋणम् सदैव उपेक्षाविषयः, नादरणीयम् । अत्र बुद्धिमद्भिः भवद्भिर्वक्तुं शक्यत एतत्—बहुकुटुम्बानां स्वल्पेन व्ययेन जीवनयात्रानिर्वाहः कथं भवेत् विहाय ऋणम् । अस्योत्तरं वयं ब्रूमः । यदि स्वल्पेन कष्टेन ऋणग्रहणं विना कार्यसिद्धिर्भवेत् किं ऋणग्रहणेन । तदा परिहरणीया राक्षसी एषा । बहुसुखाभिलाषस्य तिरस्कारेण मनोवृत्तिनिरोधेन च ऋणभीतिः क्व । वशीकृतानीन्द्रियाणि मित्रायन्ते, स्वतन्त्राणि तान्येव सपत्नायन्ते । स्थूलाच्छादनं नक्तंदिवं च एकधैव भोजनम् उत्तमं श्रेयस्करं च । किन्तु उत्तमर्णसमीपदस्य प्रणारणम् अतिलज्जाकरं दुःखजनकञ्च । कञ्चित्कालं दुःखसहिष्णुत्वसंपादनेन दुःखं दूरीभविष्यति । नहीह न कश्चित् दुःखी सुखी वा । चक्रनेमिवत् दुःखं सुखं च आयाति याति च । अतिदुःखापन्नस्यापि जनस्य कदाचिद् दिनानि शुभानि आयान्ति । भगवतः महती शक्तिरतिविचित्रा । दुःखानन्तरं सुखमवश्य मेवागच्छति । एवं विचार्य सर्वैः मनसि धैर्य्यस्थानं देयम् । उद्योगो न कदापि परिहरणीयः । अपितु उद्योगिना भवितव्यम् । पुरुषार्थे लक्ष्मीः प्रतिवसति । धैर्य्यवृत्तिमाश्रित्येश्वरे रक्षणीया आस्था । दुःखं सोढव्यम् । परन्तु हृदि उत्तमर्णकटुवचनविदारणं न सहनीयम् । अत्रेदं सम्भवति, कश्चित् वदेत्, इदं तु न भविष्यति, प्रतिवेशिपुत्रः शष्कुलीर्भक्षयतु, मम सुतस्तन्मुखं पश्यतु । अहं स्वपुत्रस्य दुःखं द्रष्टुं न शक्ष्यामि । येन केनाप्युपायेन स्वसुतस्य शष्कुली देया एव । अहरहो धनिकस्य प्रतिवेशिनः सुतः भोजनाच्छादनादिजन्यसुखान्यनुभवति, तदा दुर्गता जननी कथं स्वपुत्रदुःखं सहताम् ।

अत्र वयं कथयामः । यो बुद्धिमान् दूरदर्शी अस्ति, स खलु यथाशक्ति शुष्कभोजनमेव स्वपुत्रस्य दातुं वरं मन्यते । स्वमरणानन्तरं ऋणभारेण पीड़यितुं नाभिलषति ।

यः खलु अन्यं दृष्ट्वा अपव्ययं करोति, सः स्वहस्तधृतकुठारेण स्वचरणौ छिनत्ति । स्त्रियस्तु बहुधा अन्यां स्त्रियं विलोक्य कार्यं कुर्वन्ति । स्त्रीणां स्वभावोऽतिकोमलो भवति । अतः स्वबालस्य तथा कुटुम्बिनः दुःखं द्रष्टुं न शक्नुवन्ति । अतः ऋणं गृहीत्वा कार्यं सम्पादयन्ति । परन्तु यद्गृहे स्त्रियः बुद्धिमत्यो न भवन्ति, तद्गृहमवश्यमेव मृत्तिकायां मिलति । यदि स्त्रियः विचिन्त्य निजकार्यं कुर्वन्ति तदा ऋणराक्षसमुखदर्शनं कथं भवेत् ? वयम् अवोचाम उपरितने पत्रे ऋणग्रहणं

नोचितम् । ऋणम् कदापि न ग्रहीतव्यम् । जनस्त्वेवं प्रलपति ऋणग्रहणमन्तरा प्रयोजनसिद्धिर्न भवति । दशमुद्राव्ययेन वध्वाः शाटिकाक्रयणम् । मुद्रासहस्रेणालङ्कारादिक्रयणम् । पुत्रनिमित्ताय शतरूप्यकेन समयज्ञापकयन्त्रस्य शृङ्खलाक्रयणम् । वधूवरयोः शोभावृद्धये सर्वप्रकाराणि भूषणादीनि क्रेतव्यानि । यः खलु आंग्लदेशीयाचारं बहु मन्यते, स तु शरीरमार्जनादिपेटिकादि क्रीत्वा बहुव्ययं करोति । अहह यत्र मृदा कार्यसिद्धिस्तत्रापि व्ययः, उद्वाहे वेश्यानर्त्तनम् । अनेकेषां जनानाम् एकत्र करणेन कन्यापितृद्रव्यव्ययकरणम् । वरयात्रिकाणां भोजने महान् व्ययः । विवाहार्थं वराय बहुमुद्राप्रदानम् । एवंविधा अपव्ययाः मनुष्यान् आक्रामन्ति ज्वररोगवत् । काचित् घटना भवेत् । दुर्भिक्षं भवेत् । रोगः कमपि संतापयेत् । तदा व्ययं विना निर्वाहो न भवति । तथापि ऋणग्रहणाद् भेतव्यम् । यदा आवश्यककार्यवशात् ऋणग्रहणं विना कार्यसिद्धिर्न भवेत् तदा ग्रहणीयम् ऋणम् । परन्तु शीघ्रमेव प्रत्यर्पणस्य चेष्टा विधेया । विलम्बने प्रत्यर्पणस्य चिन्ता न्यूना भवति । तदा ऋणम् भारायते । प्रत्यर्पणाभावे धर्महानिः प्रतिष्ठाक्षतिः सर्वसुखविनाशश्च जायते । ऋणसंशोधेन आत्मरक्षा करणीया । उपार्जितेभ्यः द्रव्येभ्यः किञ्चित् किञ्चित् मञ्चेतव्यम् । एककरणेन ऋणबाधा न भवेत् । यदा उपार्जितधनरक्षा न भवेत् तदा स्वयमेव वन्यवृत्तिरापतेत् । वन्यो मनुष्यः सिंहो व्याघ्रः स्वखाद्यद्रव्यं लब्ध्वा यथेष्टं भुक्त्वा इतस्ततः क्षिपति, दिनान्तरे किं भविष्यतीति न शोचति । ईदृशी चिन्ता नोदेति तेषां विवेकशक्त्यभावात् । विचारशीलो मनुष्यः आपदम् अविचार्य कथं व्ययं कुर्य्यात् । मननात् मनुः तस्माज्जातः मानवः कथं मननं न विदधातु—अहो । संचयावसरे वराटिकोपरि दृष्टिः निपातनीया । यः एवं ब्रवीति, इयता पणेन रूप्यकेण किं भविष्यति । स्वल्पपणसंचयेनालम् । सोऽवश्यमेव व्यत्रति । यथा वृष्टिविन्दूनां निपातेन घटः पूर्तिं गच्छति, तथा पणसंचयेन मासान्ते पणपूर्तिर्भवति । वर्षान्ते स एव बहुलायते । एवं कालान्तरे धनराशिर्दृष्टिगोचरीभवति । य आरम्भादेव पणसंचयम् अभ्यस्यति, तस्य कालक्रमेण बह्व्यः मुद्राः पुञ्जीभूता भवन्ति । आपत्कालेऽन्यस्मिन् आवश्यके कार्ये अधिकस्य द्रव्यस्यावश्यकतायां च सुतस्योत्तमर्णाभ्यर्णहस्तप्रसारणावसरो न भवति । यः शिथिलविवेको भवति आलस्यरोगपीडितः, सः अद्य श्वः इति गणनया समयं मुधैव यापयति, कदापि धनसंग्रहस्यावसरं न च लभते । आजन्म परपाणिमवलोकयति । सर्वे जनाः संचेतुमिच्छन्ति । परन्तु कतिपया एव संचयप्रकारं जानन्ति । संचयस्यापि अस्ति

नियमः । ये खलु नियमानुसारतः वर्तन्ते, ते एव संचयं कर्तुं पारयन्ति । नान्ये । यं विना कार्यं न सिध्येत् तस्मिन् एव व्ययं कुर्य्यात् । नान्यस्मिन् । एष नियमो धनसंचयस्य । यः ऋणी, तस्यायं नियमोऽतिलाभदायकः । यस्मिन् समये आयाधिक्यं व्ययाल्पत्वं च । सोऽपि समयो धनसंचयस्य । परन्तु दुःखस्यायं विषयः । तदानीमेव व्ययकरणे मनुष्यः तत्परो भवति । तस्मिन् समये तु चेतसि बहुविधभोगवाञ्छा जायन्ते । तदानीं जना अवगच्छन्ति भविष्यति—बहुलाभा भविष्यन्तीति । कष्टम् —समनन्तरं लब्धिहीनदशा आयाति । अतः सर्वैं मानवैः व्ययाल्पत्वकरणायाहित्वाभावे च यत्नो विधेयः परमानन्दाय ।

## कस्यचिद् यतेः तच्छिष्यस्य च ।

### ( अस्यैव खण्डस्य ७७ पृष्ठतोऽनुवृत्तः । )

तदा प्रयाणसमये स गृहपतिः शयनात् नाबुध्यत । तदा च मम शिष्यः प्रतिष्ठमानं मां विलोक्य द्रुतं तस्य गृहस्थस्य वेश्म प्रविश्य अन्तरे दोलायां शायितं षाण्मासिकं प्रियदर्शनं निद्रान्तं तद्गृहपतेः चिरात् जातं एकं कंचन शिशुं अभ्येत्य तं कण्ठे गृहीत्वा पशुमारं मारयित्वा द्रुतपदं मामनुससार ।

एवं तस्य शिष्यस्य तथाविधं कृत्यं साक्षाद्विरीक्ष्य अहमपि चकितः स्वस्याप्यपराधित्वं भवेदिति शंकया त्वरितं गतोऽभवम् ।

अथ कियद्दूरं गतः तच्चिन्तयैव निवृत्य पुनः पुनर्वीक्षमाणश्च कंचन तस्य प्रभोर्भृत्यम् अतित्वरितमनुधावन्तं निरीक्ष्याऽहमचिन्तयम् । "अहो ! किमितः परं कुर्याम् ? यदनेन शिष्यकृतकर्मणा नूनं कुपितः स प्रभुः भृत्यमुखेनानीय दण्डयितुं प्रवृत्तः । कष्टमापतितम्, अनेन दुष्टेन शिष्येण निजकर्मणा निरपराधोऽहमपि शिक्षापात्रमभव"मिति ।

एतदन्तरे द्रुतं मत्सविधमागतः स भृत्यः सभक्तिकं मां प्राणमत् । तादृशं तं विलोक्य "किमर्थं त्व प्रधाव्यागत इत्यपृच्छं तम् ।

स चाऽब्रवीत्—"स्वामिन् ! इदानीमेव शयनादुत्थितो मम यजमानः पूर्वमेव प्रस्थितं भवन्तं श्रुत्वाऽतिव्यथितः युष्माकं साहाय्यकरणाय मां न्ययुंक्त । यतोऽत्र युष्मन्मार्गे किञ्चिदितोऽतिक्रान्ते काचन क्षुद्रसरित् गभीरावर्त्तबहुलाऽगाधसलिला वर्त्तते । तामतीत्यैव युष्माभिर्गन्तव्यम् । तामनुल्लंघ्य न कोऽपि मार्गो लभ्यते परं देशं गन्तुम् । तस्याश्च लंघनार्थम् अतिक्षीणीयान् एकनरगम्यो दारुमयः कश्चन सेतुबन्धोऽस्ति । तस्मात् तत्प्रदेशगमनानभिज्ञतया युष्माकं तन्मा-

र्गप्रदर्शनार्थं तावत्पर्यन्तं युष्मदनुगमनाय गृहपतिरिह मां प्राहिणोत् । तदहं पुरो गच्छामि युवामनुगच्छतं माम् । तां सरितञ्च युवां तारयित्वा पश्चादहं स्वामिनस्सविधं व्रजेयमि"ति जगाद ।

एवं तद्वचनं श्रुत्वा किञ्चिदाश्वस्तमानसोऽहं तथेति पुरो व्रजन्तं तं भृत्यं सशिष्योऽन्वगच्छम् । किञ्चिदध्वातिक्रान्ते च मार्गे सा क्षुद्रसरिददृश्यत ।

ततश्च तामतिगभीरजलां सरितम् अतिकृशेन वृष्टिजलपतनमसृणेन दारुमय सेतुमार्गेण मन्दमन्दं सभयं च तमेव भृत्यमवलंब्य कथंचित् सशिष्योऽलंघयम् ।

तस्याः सरितः अपरं तीरमासादितवति मयि स भृत्यः मां प्रणम्य प्राञ्जलिबन्धं "स्वामिन् ! अनुजानातु भवान्; अहं निजस्वामिसकाशं गन्तुमिच्छामी" ति अवदत् ।

तथेति तद्वचनमंगीकुर्वति मयि स भृत्यः तेन सेतुमार्गेण अगच्छत् । तदा च मम शिष्यः सत्वरम् अलक्षित एव तस्य पृष्ठतो गत्वा तमेव भृत्यं मध्येसरितं प्रक्षिप्य न्यमज्जयत् । स भृत्यश्च गभीरे सलिले पतितः प्राणान् जहौ ।

एवं कर्म कृत्वा पुनरपि मामनुगन्तुमागतं शिष्यं निरीक्ष्य अतिमात्रसंजातकोपे "अरे ! चण्डालादपि पापकर्मकरणदीक्षित ! न मामितःपरमनुगच्छे"ति सक्रोधं भाषमाण एव मयि स शिष्यः कुत्रापि पलाय्य तिरोदधे ।

ततश्चाहमतिव्यथितमानसः विचित्रां जगदीशप्रवृत्तिं विचार्य "किमर्थमेवं भगवतो लीला विद्यते । यतो धार्मिकेषु दुःखपरंपरापातं कृपणेषु वैभवसमृद्धिप्रभवं पश्यतामतिव्यथाकरं भिन्नभिन्नमीश्वरचरितं दृश्यते । सर्वत्रापि जगदीशो निखिलप्राणिवर्गेषु करुणानिधिरतिवत्सलश्चेति खलु महान्तो जना वदन्ति । इदं च साक्षादनुभवसिद्धं नितरामतिदुःखकरं विपरीतं चास्ति । कथं संगच्छते महतां वचनमिति न जानामीति भृशं व्याकुलचित्तस्सन् तस्मात्प्रदेशात्क्षिप्रमेव गत्वा कमपि ग्राममासाद्य अध्वसञ्चारश्रान्तः कुत्रचित्प्रच्छायशीतले विटपिमूले अस्वपम् । (क्रमशः ।)

---

## विविधवार्त्ताः ।

### बरोदाराज्य-ग्रन्थागार-व्यवस्थापकः ।

माननीयः जे० एस० कुदलकार एम्० ए० एल्० एल्० बिः बरोदाराज्य-राजकीय-ग्रन्थागार-वृन्दस्य व्यवस्थापकः 'डिरेक्टरः' । साम्प्रतमनु-

ष्ठितस्य मान्द्राज-राज-प्रतिनिधिना "लर्ड इलिंडनेने"द्बोधितस्य मान्द्राज-निखिलभारतीय-पुस्तकालय-समूह-सम्मेलन-सदस: पतिरयं बभूव । मान्योऽयं कुदलकारो 'मुम्बइ' नगर्य्यां द्व्यशीत्युत्तराष्टादशशत-मिताब्दे समजायत अथ"मुइल्सन-कालेजा"द् "एम० ए०" इत्युपाधिं प्राप्य लाहोरस्थ डि० ए० भि० कलेजस्य संस्कृताध्यापको बभूव । कतिपयदिवसात्यये चायं वरोदा-राज्यस्य राजकीयकार्य्ये लब्धप्रवेशो राजकीय-ग्रन्थागाराध्यक्षता-पदमवाप । ततः पुस्तकागार-विभागाध्यक्षे आमेरिकावास्तव्य डब्लिउ ए० वर्डेन महोदये स्वदेशं गन्तुकामे चायमेवाद: पदं लेभे । महाराज-गायकोयारेण प्रेरितोऽधुनातन पुस्तकालय-परिचालन-रीति-नीति-शिक्षालाभाय वर्डेन महोदयेन सममामेरिका-भूभागं यूरोपञ्च जगाम । ततो लब्धशिक्षश्च 'जापान'-देशं "ष्ट्रेटसेटेलमेण्ट" प्रदेशं ब्रह्म-देशञ्च पर्य्यटन् भारतवर्षमाजगाम । साम्प्रतमयं "लाइब्रेरी मिसेलानि" नामकस्यैकस्य मासिक-पत्रस्य सम्पादकः सन् बरोदा-राज्य-पुस्तकागार-विभागस्य सर्व्वमयकर्त्तृत्वभारमावहन् वर्त्तते । अधुना वरोदा-"सेण्ट्राल" पुस्तकालये सप्तलक्षाधिकाः सन्ति ग्रन्थाः । तत्र वरोदाराज्ये एतदतिरिक्ताश्च सार्द्धषट्शतसंख्यकाः सन्ति ग्रन्थागाराः पाठागाराश्च ।

---

## "मनुष्यपरिवार:" ।

वर्त्तमान-युगेऽन्यून-सार्द्धचतुर्र्व्वुदाधिकैकवृन्दगणनीयजनैरध्युष्यमाणेऽस्मिन्-खण्डावनीमण्डले मनुजचरणाचिह्नितमुल्लेखनीयं स्थानं न वर्त्तते । तत्राशीति-कोटिमानवानामधिवासे चाशियाख्यमहादेशे न्यूनत्वेनाधिक्येन च प्रतिवर्ग-पाद-क्रोशमतीवघन-सन्निवेशं निवसन्ति शतं मानवाः; शतञ्च तथैव रीत्या द्वादश-कोटि-जन-सदनरूपे यूरोपे ऽसुनिविड़मप्यावासस्थान-संघेऽधिकसान्द्रतया । आफ्रिका-महादेशे ऊनत्रिंशत्कोटिसंख्यकाः, महादेशेषु विरलवसतेरा'मेरिका'-भूभागस्य दक्षिणादि-विषयत्रये एकादशकोटयोऽवरानवरद्वीप-निवहे कोटिश्च मनुनन्दना निवसन्ति । सितासित मनुजा अनुपाततः पञ्च त्रयश्च । शेषाः सप्ततिकोटिसंख्याता धूसराः पिङ्गलाश्च । मनुजानां पञ्चार्व्वुदाः पिधानाय परिच्छदं वसन-परिच्छदादिकं, वासाय गृहाट्टालिकादिकञ्चाप्नुवन्ति; सप्तार्व्वुदाः विहिताट्टकाया उटज-कन्दर-निकायाः, पञ्चविंशतिकोटि-गणिताश्च नग्नत्वेऽभ्यस्ता, यायावरा निर्व्वासमो निर्व्वासाश्च तिष्ठन्ति ।

## 'आम्रिक'राष्ट्रे धान्यम् ।

नासीत् पुरा किला 'मेरिकायां' तण्डुलोत्पत्तिः । 'आमेरिका'-वासिनां मुख्यत्वेनाभक्ष्यतया तण्डुलानां नाकारि कैरेव धान्यावापः । ये तावत् भारतसन्तानाश्चीनवासिनश्चामेरिकामधिवसन्ति, प्रेरिता अभवन् खलु तण्डुलास्तेभ्यो भारतवर्षतो ब्रह्मदेशतश्च । विज्ञापितं साम्प्रतं इंलण्डीय-"टाइमस" इति विख्याते वार्त्तावहे संवत्सरेऽस्मिन् "आमेरिकाया" मेतादृक् धान्यमुत्पादितं, तेन स्थानीयाभावे मुक्तेऽपि प्रायेण सार्द्धकोटि-'मण'-परिमितानि धान्यान्युद्वर्त्तिष्यन्ते । विदेशेऽवश्यं प्रेरयितव्यास्ते उद्वृत्ताः तण्डुलाः । निर्द्दिष्टश्चाभवदत्रान्तरे किल लक्ष'मण'परिमितानां तण्डुलानां क्रेता । एशियामहादेशोत्पन्नात् मार्किणजातं धान्यं प्रशस्यतरमिति श्रूयते । इदानीमन्नकष्टेन पीड़िते भारतवर्षे धान्यस्य मूल्यं किञ्चिन्न्यूनतां प्राप्स्यति, इत्येवं सम्भवति । परन्तु मार्किणस्य धान्येन सार्द्धं भारतीयधान्यं प्रतियोगितायां स्थातुं न शक्नुयाच्चेत्, तर्हि देशस्यितानामेषां कृषकाणां महान् अनर्थः संघटिष्यते, अतो विज्ञान-सम्मतरीत्या अक्रियमाणे कृषिकर्म्मणि भारतीय-कृषकैः मार्किण-कृषकैः सार्द्धं प्रतियोगितां कर्त्तुं न शक्यते; इति सुधीभिरुपायश्चिन्त्यताम् ।

---

मानवो येन पक्षीव पक्षभरेण स्वदेहशक्त्योत्पतितुं शक्नुयात् एतद्विषयिणी परीक्षा भवतीति वार्त्ता लण्डन-नगरस्य कस्मिंश्चिद् वार्त्तावहे प्रकाश्यते । 'इउरोप'वासिन आमेरिका-वासिनश्च अतिमात्रं परिश्रमशीला अध्यवसायिनश्च, तेन सम्भाव्यते यदायत्यां एतदपि शक्यते ।

---

उत्तर-पश्चिम-युक्तप्रदेशीय-व्यवस्थापक समितौ "लक्ष्णौ"नगरे कस्यचिद् विश्वविद्यालयस्य संस्थापनाय प्रस्तावः प्रवर्त्तते । सादरं परिगृहीते च तस्मिन् तत्रत्यैः सभासद्भिः, नेतृ-सम्प्रदायेन पुनरभिहितं—"उक्तनगरे विश्वविद्यालयः संस्थापयिष्यते, केन प्रकारेण संस्थापयितव्यं तत् समुदयं निर्णीय शासकसंघ-महोदयेन कार्य्यं प्रारप्स्यते" इति । युक्त प्रदेश-शासकसंघमहोदयस्यैतादृशीं नीतिगर्भामुदारां वार्त्तामाकर्ण्य नितरां प्रीतिं वयमनुभवामः ।

---

## नर्म्मालापः—

वङ्गीय-बङ्किमचन्द्र-चट्टोपाध्याय-महोदयः श्रीकृष्णचरितान्तर्गत-व्रजलीला-विवरणम् प्रक्षिप्तमिति मत्वा यदा तत् परिजहार, तदानीं माननीय-भूदेव-मुखोपाध्याय-महोदयेन अभिहितमिदम्—"निगमकल्पतरोर्गलितं शुकमुखादमृत-द्रवसंयुतम् ।" फलमिदं यदि युरोपीयकर्त्तरिकास्पृष्टं भवेत् तदा सर्व्व एवास्य रसः धूलिषु लालितः स्वयमपि निष्फलं भविष्यति । एकमात्रमस्य बीजं द्वितीय-मावरणञ्च द्वयमेव तदा निष्कारणतां गमिष्यति न कोऽपि श्रीकृष्णचरितमिति कृत्वा समादरेण ग्रहीष्यति ।

---

## विवाहयौतुकानधिगतौ आत्मघातः ।

साम्प्रतं "बेङ्गली" नामधेयपत्रके प्रकाशितं यत् मतिलाललाहानामधेयस्य कस्यचिदष्टादशवर्षीययुवकस्य मृतदेहः विगतफाल्गुनस्य पञ्चविंशदिवसे कलिकातानगर्य्यां 'रामघोष'रथ्यायां परिदृष्टोऽभूत् । श्रूयते हि उपरतोऽयं युवा साम्प्रतमेव कृतोदाहः सञ्जातः, परं श्वशुरप्रतिश्रुतं निखिलयौतुकद्रव्यं नाधुनापि समधिगम्य परं विषादं भेजे । अनेनैव हेतुना आत्मघातमपि कर्त्तुं प्रयत्न आसीत्तस्य इत्येवमस्त्तदा काचिल्लिपिः मृतशरीरसन्निधाने समधिगता । अहो दुर्विलसितं दैवस्य येन वङ्गीययुवा कश्चित् जनकोपघात् श्वशुरसकाशात् यौतुकमनधिगम्य प्राणांस्त्यक्तुमुत्सहते ।

इतः प्राक् पणप्रदानाक्षमं पितरं विचिन्त्य काचित् वङ्गबालाऽपि सुकुमारतरं आत्मकलेवरं स्वेच्छया चिराय मृत्युपतिभवनं प्रेरितवती । अहो किं वैषम्यं देशकालयोः ।

---

## संस्कृतमहामण्डलम ।

विगतभाद्रमासस्य त्रयोविंशे दिवसे बुधवासरे १ । ३ संख्यक-"वेष्ट्रीट्"स्थितसंस्कृतमहामण्डलभवने शोणपुराधिपतिं माननीय-महाराजसार-रवीरमित्रोदयसिंहदेवं समभिनन्द्य "ज्ञानगुणाकरः" इत्युपाधिना अलङ्कृत-वन्तः तत्रत्याः सभ्याः । नैयायिकप्रवरेण महामहोपाध्यायश्रीयुक्तकामाख्या-नाथतर्कवागीशमहाशयेन सभापतिपदं समलंकृतम् । महामहोपाध्याय-श्रीयुक्तप्रमथनाथतर्कभूषणप्रमुखैः महात्मभिः सदसोऽपूर्व्वशोभा विवर्द्धिता ।

समभिनन्दितोऽसौ महाराजः संस्कृतमहामण्डलपुस्तकागारं चतुष्पाठीं मासिकसंस्कृतपत्रिकाञ्च विलोक्य परां मुदमवापेति ।

## विपुलमत्स्यः ।

अधुना 'चब्बिश'परगणान्तर्गत-डायमण्डहार्ब्बार'महकुमा'धीने 'इण्डियान् गार्डेनि एसोसियेशन्'-नामधेय समितेर्धान्यक्षेत्रे 'मकराख्यः 'करपत्राख्यो वा एकः प्रकाण्डकायो मत्स्यो धृतः। अस्य मत्स्यराजस्य भारः सपादाष्टादश'मणाः', दैर्घ्यमस्य दशहस्ताः। मस्तकस्यास्य सम्मुखभागः प्रसृतप्रसृतः विस्तृतकाष्ठफलकवत् सञ्जातः। अस्य फलकस्य पार्श्वयोः करपत्रयन्त्रस्येव अष्टादशशो दन्ता विद्यन्ते। अत उभयत स्तीक्ष्णः करपत्र इव दृश्यते एषः। सपादहस्तत्रयपरिमाणं दीर्घमेतत् करपत्रम्। एतद्विराड्मत्स्यस्य देहात् सार्द्धद्वि 'मण' तैलं प्राप्तम्। किं बहुना मत्स्योऽयं सामुद्रिकः। भागीरथ्याः सागरसङ्गमसुखात् अधशेषे धान्यक्षेत्रमासं प्राप्तः। एष मत्स्यः सुतीक्ष्णेन सुदृढेन च करपत्रेणात्मानं रक्षति, भिन्नांश्च जलचरजन्तूनाक्रामति। इमे दन्तबद्धाःसन्तः अर्णवपोताक्रमणे न कुण्ठिताः, का कथा नौकाक्रमणे। क्षुद्रनौकातलदेशस्थः काष्टफलकः एतेषां करपत्रघातेन विदीर्य्यते। अधुनाधृतकरपत्रमत्स्यसदृशो वृहन्मत्स्यः प्रायशः न दृश्यते। कलिकाता'यादु'-गृहस्थितः करपत्रमत्स्यो नैतावत्परिमाणः। अस्य विशालमत्स्यस्य कलिता मुण्डः कलिकातायाः १६२ संख्यके बहुबाजारष्ट्रीट्स्थिते उल्लिखितसमितेर्भवने रक्षितः,–यः कोऽपि नयनातिथिं करोतु।

---

## हिन्दुविश्वविद्यालयः।

विगतनवेम्बरमासस्य ऊनत्रिंशे दिवसे काशीस्थ-हिन्दुविश्वविद्यालय-संसदः तृतीयवार्षिकमधिवेशनं सञ्जातम्। अशेषगुणालंकृतार्य्यकुलगौरवभूतः श्रीमान् सिन्धियाराज्याधीश्वरस्तत्र सर्व्वाध्यक्षत्वेन माननीयश्रीयुक्त-मदनमोहनमालव्य-महाशयस्तु सहकारित्वेन रायबाहादुरोपाधिधारी श्रीयुक्त जि· एन्· चक्रवर्त्ती महोदयश्च तत्सहकारित्वे निर्व्वाचितः।

---

## सदोविवरणम्।

विगतमार्गशीर्षमासस्य षष्ठदिवसे शनिवासरे ऽपराह्णे काश्यां वाराणसीशाखासाहित्यपरिषदः अधिवेशनमभूत्। वङ्गदेशीयज्योतिर्व्वित् श्रीमन्नारायणज्योति

भूषणमहाशयः सभापतेरासनं समलञ्चकार । श्रीमान् हरिहरशास्त्री महामहोपाध्यायराखालदासन्यायरत्नमहाशयस्य मृत्युतिथिमुपलक्ष्य जीवनं तस्यैव समालोच्य प्रबन्धमेकमपठत् । एकचत्वारिंशतो-वर्षेभ्यः प्राक् न्यायरत्नमहाशयेन वार्त्तावहे बङ्गभाषया लिखितः प्रबन्धोऽपि तत्र समुद्धृत आसीत् । अवसाने च शाखापरिषदः सहकारिसभापतिः श्रीयुक्त[illegible]मुखोपाध्याय आचचक्षे यत् पञ्चशतवर्षेभ्यः प्राक् सुदूरे प्रवासे शाखापरिषत्पुस्तकालयो बङ्गसाहित्यसमाजश्च संस्थापितः आसीत् । वार्द्धक्ये तु समुपस्थिता हीनदशा बङ्गसाहित्यसमाजस्य । न लभ्यते एतादृशं स्थानं यत्र पुस्तकालयः पाठागारः सभायाश्चाधिवेशनं भवितुमर्हति । अधिकभृतिप्रदानेन योग्यस्थानसंग्रहाय नास्ति सामर्थ्यं सभायाः । बहूनां बङ्गवासिधनिनां काश्यां भवनानि सन्ति, किन्तु कश्चिदपि यदि कृपया स्वभवनैकदेशे सभायाः स्थानं दद्यात्, तर्हि विदेशेऽस्मिन् बङ्गसाहित्यचर्च्चायाः यथेष्टं साहाय्यं भवेत् । तत्र सदसि बहवो विख्याताः सभ्याः समुपस्थिता आसन् ।

---

विगतस्य डिसेम्बरमासस्य ऊनविंशदिवसादारभ्य द्वाविंशतितमं दिवसं यावत् वाराणस्यां भारतसङ्गीतमहासभायाः अधिवेशनमासीत् । तृतीयाधिवेशनमिदम् । ऋतुचन्द्रग्रहभूमिते खृष्टीयसंवत्सरे बरोदाराज्ये प्रथमाधिवेशनं, तथा वसुशशिग्रहभूमिते इंलण्डीयसंवत्सरे भारतीयराजधान्यां दिल्लीनगर्य्यां द्वितीयाधिवेशनमभूत् । प्रथमाधिवेशनकाले अशेषगुणनिधिः भारतराजन्यवृन्दवृन्दारको बरदाधिपतिः, द्वितीयाधिवेशनकाले पुण्यश्लोको महानुभावः अभिजातकुलवरेण्यः रामपुरप्रदेशाधिपतिश्च [illegible] स्वीचकार । तृतीयाधिवेशने रामनगर-राज्याधिपतिस्तु सभाध्यक्षत्वेन तथा सहकारि सभाध्यक्षत्वेन राजा मुनसीमाधोलालश्च निर्व्वाचितोबभूव । श्रीमान् शिवेन्द्रनाथवसुमहाशयस्तु अभ्यर्थनासमितेः कार्य्यसम्पादकत्वेन वृत इति ।

---

विगतस्य डिसेम्बरमासस्य षड्विंशदिवसे तथा सप्तविंशदिवसे पुरीधाम्नि उत्कलसम्मिलन्याः पञ्चदशवार्षिकमधिवेशनमभवत् ।

---

## सोऽहंस्मृतिसभा ।

विगतस्य डिसेम्बरमासस्य षष्ठदिवसे शनैश्चरदिनेऽपराह्णे परमहंससोऽहंस्वामिनः ब्रह्मीभावमुपलक्ष्य तदीयकाशीस्थस्वकीयाश्रमे प्रथमवार्षिकोत्सवस्याधिवेशनमभवत् । तत्र सदसि बहवो मानार्हाः सभ्यतमाः सन्न्यासिनो ब्रह्मचारि-

गाश्च समुपस्थिता आसन्। भक्तप्रवरोऽसौ हरिहरद्वै महाशयस्तु प्रयागात् समुपस्थित आसीत्। सोऽहंस्वामिन इवाद्वैततत्त्वविदः सन्न्यासिनः स्मृतिसभायां कोऽपि सभापतेरासनं समलङ्कर्त्तुं नैच्छत्। तमेव महात्मानं मनसि सभापति-रूपेण परिकल्प्य सभापतेरासनं शून्यमेव संरक्षितमिति। भारतधर्म्ममहामण्ड-लस्य केनचित्ब्रह्मचारिणा स्वामिनमनुस्मृत्यैका कविता तत्र पठिता, ततो महोपदेशकेन श्रीयुक्तगोपालचन्द्रवेदान्तशास्त्रिणा घटिकाद्वयं यावत् तज्जीवनी तन्मतवादश्च समालोच्य वक्तृता प्रदत्ता। अवसाने च स्वामिनः आबाल्यसुहृत् श्रीमान्गिरीशचन्द्रवासनवोशमहाशयवरः स्वामिविषयं किञ्चित् समालोच्य प्राक् सोऽहंस्वामिना यत् सङ्गीतं सदा गीतं तदेव तत्र गीतवान्। ततो रजनी-मुखे सभा समाप्तिं यातेति।

---

आगामिडिसेम्बरमासे कलिकाता-महानगर्यां निखिलभारतवर्षीय-विज्ञान-सम्मेलनस्य अधिवेशनं भविष्यति। ये च भारतीयाः देशान्तरवासिनश्च प्रधानतमाः वैज्ञानिकाः तेऽस्यां सम्मिलन्यां उपस्थास्यन्ते।

---

## शोकसंवादः।

अहो! पुनरपि भारतभूमेः [illegible]कमपहृतम्। भारतविश्रुतो नैया-यिको बङ्गानां गौरवभूतो विद्वज्जनलीलानिकेतस्य भट्टपल्लीग्रामस्य, प्रधानाध्यापको मूलाजोडसंस्कृतविद्याभवनस्य, महामहोपाध्यायः पण्डितवरेण्यः शिवचन्द्रसा-र्व्वभौममहाशयो विहाय नश्वरमिमं संसारं दिवं ययौ। मरणसमये तद्वयः अशीतेः परमासीत्। तल्लोकान्तरप्राप्तिस्तु आकालिकीति न वयं अनुशोचामः। एतदेवा-स्माकमनुशोचनीयं यत् तदीयपरित्यक्तासनपरिग्रहणयोग्यः कश्चिदस्ति सुयोग्यो विद्वद्वरो बङ्गदेशे भारते वेति। न पुनरस्माकं नयनगोचरो भविष्यति तादृशः कुशाग्रतीक्ष्णबुद्धिसम्पन्नो [illegible]। स्वर्यातस्य भारतरत्नस्य महामहोपाध्याय-राखालदासन्यायरत्नमहाशयस्य पदमधुनापि शून्यमेवास्ति। अधुना शिवचन्द्रसार्व्वभौमस्यापि अधिकृतासनं शून्यमेव संवृत्तम्। न जाने कदेयं शून्यता पूर्णतां यास्यतीति। शोकसन्तप्तस्य सार्व्वभौमसन्तानवर्गस्य शोकमभि-लक्ष्यास्माभिरपि समवेदना प्रकाश्यते।

## पारस्ये भविष्यद्वक्ता ।

"पारसिक" आब्दुलवाहेति नामधेयः कश्चिद् भविष्यद्वक्ता आविर्भूतवान्, अस्य पितुर्नाम वाहाउल्लेति । कथयत्ययं जगदेकदा नवीनाकारं भविष्यतीति । तदा मनुष्याणां धर्म्माचार-पद्धतयश्च सर्व्वा एव परिवर्त्तिष्यन्ते । अनिन्दनीया जगति अनुष्ठीयमानाः सर्व्वे एव धर्म्माः । कालवशात्तु प्रविशति सर्व्वस्मिन् धर्म्मे आविलता, यस्मिन् धर्म्मे यः समजायत, स एव तस्य धर्म्मः । अतोऽसौ अवश्यमेव पालनीयः

---

"पेलमेल-गेजेटा"ख्य—सुप्रसिद्धपत्रकस्य कश्चित् संवाददाता एवं लिलेख, काचि'द्वार्किण'देशसम्भूता धनवती नारी "फिलाडेल्फिया" नगरस्य प्राचीनकीर्त्ति-मन्दिरस्यदृश्यागारे आर्य्यमन्दिरमेकं समस्थापयत् । श्रूयते सा हि भूरिधनव्ययेन मन्दिरमिदं भारतवर्षात्—आमूलात् शीर्षपर्य्यन्तं समुत्तोल्य अर्णवपोतेन स्वदेशं प्रापयामास । मार्किनदेशे ईदृशी कौतुकवार्त्ता अन्तरा अन्तरा प्रकाश्यते । पुरा त्रेतायां पवननन्दनः समग्रं गन्धमादनपर्व्वतमुत्पाट्य यथैव लङ्कां नीतवान्, तथैव महिलेयं भारतवर्षात् समग्रमेव मन्दिरमनयत् । प्रेमपुष्पम् ? ?

---

## समयोपयोगि अनुष्ठानम् ।

कस्यचित् संवाददातुर्विज्ञप्तिरेषा—वर्त्तमानशिक्षापद्धति र्न देशस्याभावानु-यायिनी । धारणेयं वर्त्तमाने जनानां बहुमता । एतद्दूरीकरणाय नानाविधा चेष्टाऽपि सर्व्वत्रारब्धा । फरिदपुर-सुयोग्य-म्याजिष्ट्रेट मिः जे० एन० राय महोदयस्यानुकूल्येन अत्यल्पकालमध्ये पूर्व्वोक्त'जिला'मध्ये विभिन्नस्थानेषु विभिन्नाः शिल्पविद्यालयाः स्थापिताः । अतोतवर्षे 'भट्टा' 'करोनेसन्' विद्यालयस्य शाखा-स्वरूपेण एकः शिल्पविद्यालयः प्रतिष्ठितः अस्य नामाक्षराणि भवन्ति तथैव म्याजिष्ट्रेटबाहादुरस्य यथा । देशश्च दुर्भिक्ष-पीडितः ईदृशसङ्कटकाले भट्टा-तुल्ये क्षुद्रग्रामे आत्मरक्षा-चेष्टा आनन्ददायिका नास्त्यत्र विकल्पः । देशस्य मङ्गलं हि एतदनुष्ठानस्य व्याप्त्यनुयायि । वयं पूर्व्वापरं एतत्प्रकारानुष्ठानेषु बद्धपक्ष-पाताः । यदि विश्वविद्यालयस्य उपाधिमाया मसीजीविकामोहश्च न त्रुट्येत्, तदा कल्याणं न सम्भवेत् । वयं एतादृशविद्यालयस्य शुभानुध्यायिनः ।

ननु सम्भवत्वेवं सामान्यरूपेण विवेकग्रहः। तथापि सामान्यान्येव बहूनि सन्ति, परिणामित्वसंहत्यकारित्वसुखदुःख-मोहात्मकत्वचतुर्विंशतितत्त्वत्वादीनि अतस्तैस्तैः रूपैर्विवेक-ग्रहाणां मोक्षहेतुत्वेऽननुगमदोष इति चेन्न अभिमान-प्रतिबन्धकज्ञानत्वेनैवानुगमादिति। अथैवं सामान्यरूपेण

गौरवात् जडत्वेन घटाविशेषाच्च। तथाच ब्रह्मणोऽनुभवव्याप्यत्वानङ्गीकारे विदुषां ब्रह्मणि व्यवहारो न स्यादिति। यत्तु स्वप्रकाशत्वादेव ब्रह्मणि व्यवहारो भवति तद्विषयकज्ञानस्य तद्व्यवहारहेतुत्वकल्पने गौरवात्। वृत्तिव्याप्यत्वं तु व्यवहारप्रतिबन्धकाज्ञाननिवृत्त्यर्थमपेक्षते इत्युच्यते, तदप्यसारम्, समानविषयकत्व-प्रत्यासत्त्या ज्ञानत्वेनैव व्यवहारत्वावच्छिन्नं प्रति कारणत्वाद्, दृष्टं विहायात्मव्यव-हारे अदृष्टकल्पनानौचित्याच्च। अज्ञानाख्यतमसो व्यवहारप्रतिबन्धकत्वकल्पने प्रमाणाभावाच्च, ज्ञानाभावादेव व्यवहाराभावसम्भवात् सुषुप्त्यादौ ज्ञानानुत्पत्त्यर्थं तमसो वृत्तिप्रतिबन्धकत्वस्यावश्यकल्पयतया पुनर्व्यवहारप्रतिबन्धकत्वकल्पनावैय-र्थ्याच्चेति"। योगवार्त्तिके चोक्तम्"यदपि वृत्तिव्याप्यत्वमात्मनोऽभ्युपेत्य फलव्याप्यत्वं वेदान्तिब्रुवैरपलप्यते तदपि मोहादेव, फलव्याप्यत्वस्य सामान्यतो व्यवहारहेतु-तायाः क्लृप्तत्वेन चैतन्याख्यफलव्याप्यतां विना चैतन्यव्यवहारानुपपत्तेः। अन्यथा घटादिव्यवहारस्यापि वृत्तिव्याप्यत्वेनैवोपपत्तौ विश्वप्रकाशकतया चैतन्यकल्पना-वैयर्थ्यात्। 'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सहे'त्यादि वाक्यानि च लौकिक-मनआदिवृत्त्यगोचरत्वमेव प्रतिपादयन्ति, 'मनसैवानुद्रष्टव्यमि'त्यादिश्रुत्यन्तरात् अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति,इत्यादिश्रुत्या योगिमनो-विषयत्वावगमाच्च। न तु फलव्याप्यत्वं निराकुर्वन्ति मनआदीनां जडत्वेन फलानाधारत्वात्। फलं विना शास्त्रादीनां ब्रह्मणि प्रमाणत्वासंभवादि"ति अन्यच्च प्रवचनभाष्ये द्रष्टव्यम्।

उक्तेषु विवेकग्रहहेतुषु परिणाम्यपरिणामित्वादिषु सर्वेषां हेतूनां संग्राहकस्यानु-गतरूपस्याभावेन अननुगमाख्यं दोषं दर्शयितुम् आदौ पूर्वोक्तरीत्या विवेकग्रहस्य सम्भावनामाह,—"नन्वि"ति। "नन्वि"ति = विप्रतिपित्त्योक्तसूचकमव्ययम्। "सामान्यरूपेण" = सामान्यधर्मपुरस्कारेण। अननुगमं दर्शयितुं शङ्कते "तथा

विवेकस्यैव सर्व्वाभिमाननिवर्त्तकतया नाहं देहो नेन्द्रियाणीत्यादिप्रत्येकरूपैर्विवेकग्रहाणां मोक्षहेतुत्वं श्रुतिस्मृत्योरुच्यमानं कथं घटेत इति चेन्न अवान्तरविवेकानां सामान्यविवेकप्रपञ्चमात्रत्वादिति। (ड)

इति श्रीविज्ञानभिक्षुविरचिते सांख्यसारे मोक्षहेतुविवेकज्ञानस्य स्वरूपस्य परिच्छेदः ॥

---

पो"ति । "तथापि" = पूर्वोक्तरूपेण विवेकग्रहसम्भवेऽपि । अननुगमप्रदर्शनाय सामान्यधर्म्माणां बहुरूपतां दर्शयति "परिणामित्वे"ति । एषु परिणामित्वादिषु सर्वेषु हेतुषु तावत्पदार्थानां संग्राहकस्य कस्यचिदेकस्य अनुगतरूपस्याभावेन सर्वेषां हेतूनां संग्रहः न सम्भवतीत्यर्थः । उक्तशङ्कां निषेधति "ने"ति । सर्वेषु हेतुषु अनुगतरूपमाह,—"अभिमाने"ति ।"अभिमानस्य" = अनात्मनि आत्मधर्म्मारोपस्य, "प्रतिबन्धकं" = विरोधि, यज्ज्ञानं तत्त्वं सर्वत्र अनुगतं रूपम् ; सर्वेषु परिणामित्वादिज्ञानेषु अभिमानप्रतिबन्धकज्ञानत्वस्य विद्यमानत्वादित्यर्थः । पूर्वोक्तयुक्त्या सामान्यरूपेण विवेकग्रहसिद्धौ देहेन्द्रियादिभ्यः पुरुषस्य भेदप्रतिपादकश्रुतिस्मृतिविरोधं शङ्कते "अथैवमि"ति । "एवं" = पूर्वोक्तप्रकारेण । "सामान्यरूपेण" = परिणामित्वादिसामान्यधर्म्मद्वारेण । "विवेकस्यैव" = भेदज्ञानस्य एव । एवकारः भिन्नक्रमः सामान्यरूपेण इत्यन्वयी, सामान्यरूपेणैवेत्यर्थः । अनेन देहेन्द्रियादिविशेषविवेकज्ञानं व्यावृत्यते । "सर्वाभिमाननिवर्त्तकतया" = सर्वेषु अनात्मसु प्रकृत्यादिषु आत्माभिमानस्य प्रतिबन्धकत्वेन । "नाहं देहः" = आत्मा देहाद् भिन्नः "नेन्द्रियाणि" = आत्मा इन्द्रियेभ्यः भिन्नः । "इत्यादिप्रत्येकरूपैः विवेकग्रहाणां" = देहेन्द्रियादिप्रत्येकविशेषपदार्थप्रतियोगिकभेदज्ञानानाम् । "श्रुतिस्मृत्योः" = "यः प्राणे तिष्ठन् प्राणादन्तरो यं प्राणो न वेद, यो वाचि तिष्ठन् वाचोऽन्तरः" इत्याद्यन्तर्यामिब्राह्मणादिश्रुतौ तथा "समस्तावयवेभ्यस्त्वं पृथग् भूप व्यवस्थितः" इत्यादिस्मृतौ च । अत्र शङ्कायां सिद्धान्तमाह,—"अवान्तरविवेकानामिति" = देहादिविशेषपदार्थप्रतियोगिकभेदज्ञानानाम् । सर्वेषां देहादिविशेषपदार्थानां

प्रकृत्यादिसामान्येषु अन्तर्भावेन विशेषज्ञानमन्तरेण सामान्यज्ञानासम्भवात् विशेषज्ञानानि सामान्यज्ञानस्य हेतुतया तस्यैव प्रपञ्चभूतानीति भावः । (ङ)

इति श्रीरमेशचन्द्र देवशर्म्मकृते सांख्यसारविवेकप्रदीपे
द्वितीयः परिच्छेदः ।

---

# सांख्यसारः

## अथ तृतीयः परिच्छेदः ।

अथ के ते प्रकृत्यादयो येभ्यः पुरुषो विवेचनीय इत्युच्यते ।

प्रकृतिर्बुद्ध्यहङ्कारौ तन्मात्रैकादशेन्द्रियम् ।
भूतानि चेति सामान्याच् चतुर्विंशतिरेव ते ॥

एतेष्वेव धर्म्माभेदेन गुणकर्म्मसामान्यानामन्तर्भावः ।

तत्र प्रकृतित्वं साक्षात् परम्परयाऽखिलविकारोपादानत्वम् ।

---

द्वितीयाध्याये मोक्षसाधनविवेकज्ञानस्वरूपमुक्त्वा इदानीमुपोद्घातसङ्गत्या विवेकप्रतियोगिपदार्थनिरूपणाय पृच्छति "अथ के ते प्रकृत्यादय" इति। "येभ्यः" = प्रकृत्यादिभ्यः। अत्र प्रकृत्यादीनां प्रतियोगित्वप्रदर्शनार्था पञ्चमी । "विवेचनीयः" = पृथक्कृतया साक्षात् कर्त्तव्यः। चतुर्विंशतिपदार्थान् गणयित्वा दर्शयति "प्रकृति-रि"ति । ननु वैशेषिकाद्यभिमतानां गुणकर्म्मसामान्यादिपदार्थानाम् असंग्रहाद्न्यूनताऽस्य शास्त्रस्येत्याशङ्क्याह,—"एतेष्वे वे"ति । "एतेषु" = पूर्वोक्तप्रकृत्यादिषु । एवकारेण = एतदतिरिक्तपदार्थसत्त्वं व्यावृत्तम् । "धर्म्मधर्म्म्यभेदेन" = गुणगुणिक्रियाक्रियावज्जातिव्यक्तिविशिष्टरूपकेवलरूपावयव्यवयवांशांशानामभेदेन । "गुणकर्म्मसामान्यानां" = रूपादीनां गुणानाम्, उत्क्षेपणादीनां कर्म्मणां, सत्ताद्रव्यत्वगोत्वादिजातीनामित्यर्थः । "अन्तर्भावः" = प्रकृत्याद्यभेदेन सिद्धिः । अत्रेदं बोध्यम्,—गुणः

प्रकृष्टा कृतिः परिणामरूपाऽस्या इति व्युत्पत्तेः । प्रकृतिः शक्तिरजा प्रधानमव्यक्तं तमो मायाऽविद्येत्यादयः प्रकृतेः पर्य्यायाः ।

ब्राह्मीति विद्याऽविद्येति मायेति च तथा परे ।
प्रकृतिश्च परा चेति वदन्ति परमर्षयः ॥ इति स्मृतेः । (ढ)

साच साम्यावस्थयोपलक्षितम् सत्त्वादिद्रव्यत्रयम् । कार्य्य-सत्त्वादिवारणायोपलक्षितान्तम् । साम्यावस्था च न्यूनाधिक-

---

पटः, चलः घटः, गौः, इत्यादिषु प्रतीतिषु गुणगुण्यादीनां सामानाधिकरण्यदर्श-नात् तयोरभेदः भेदश्च सिध्यति, न हि अत्यन्तभेदे गौः अश्व इत्यादौ सामानाधि-करण्यप्रतीतिः, नापि अत्यन्ताभेदे घटः कलश इत्यादौ तथा प्रतीतिर्भवति, अतः गुणगुण्यादीनां भेदाभेदौ अङ्गीकार्य्यौ, ततश्च तयोरभेदाङ्गीकारेण शुक्लादि-रूपादीनां घटाद्यभेदस्वीकारात् नातिरिक्तपदार्थसिद्धिः । भेदाभेदानुमाने प्रयो-गश्च एवमवगन्तव्यः,—गुणादिकं गुण्यादिना भिन्नाभिन्नं समानाधिकृतत्वात्, तद-र्थश्च, गुणादिकं = गुणः, क्रिया, जातिः, विशिष्टरूपम्, अवयवी, अंशी । गुण्या दिना = गुणिना, क्रियावत्या, व्यक्त्या, केवलरूपेण, अवयवेन, अंशेन । "भिन्नाभिन्नं" = भेदाभेदोभयवत् । "समानाधिकृतत्वात्" = अभेदसंसर्गकधीविषयतायोग्यत्वात्—पराभ्युपगतसमवायतादात्म्यभिन्ना ये संयोगादयः तेषामन्यतमसम्बन्धेन गुण्यादि-विशेषणिका या धीस्तदन्या गुणादिविशेषणिका या धीस्तद्विशेष्यत्वादिति यावत् । विस्तरस्तु आकरे द्रष्टव्यः । प्रकृतिसामान्यं लक्षयति,—"साक्षादि"ति, तस्याः व्युत्पत्तिं दर्शयति, "प्रकृष्टे"ति । तत्पर्य्यायं दर्शयति,—"प्रकृतिरि"त्यादिः । अत्र-स्मृतिं प्रमाणयति "ब्राह्मी"ति । (ढ)

लक्षणाय प्रकृतिमुद्दिशति,—"सा चे"ति । लक्षणमाह,—"साम्यावस्थये"ति = साम्यावस्थयोपलक्षितं गुणत्वेन परिभाषितं सत्त्वादिद्रव्यत्रयं प्रकृतिरित्यर्थः । साम्यावस्थयोपलक्षितमिति विशेषणस्य प्रयोजनमाह,—"कार्य्यसत्त्वादी"ति । कार्य्यसत्त्वादिः = महदादिरूपेण परिणतसत्त्वादिः । साम्यावस्थाशब्दस्यार्थ-

भावेनाऽसंहननावस्था अकार्य्यावस्थेति यावत्। महदादिकन्तु कार्य्यसत्त्वादिकं न कदाप्यकार्य्यावस्थं भवतीति तद्व्यावृत्तिः। वैषम्यावस्थायामपि प्रकृतित्वसिद्धये उपलक्षितमित्युक्तम्। अकार्य्यमिति तूपलक्षितान्तस्य निष्कृष्टार्थः। सत्त्वादिगुणवती सत्त्वाद्यतिरिक्ता प्रकृतिरिति न शङ्कनीयम्।

सत्त्वादीनामतद्धर्म्मत्वं तद्रूपत्वादिति सांख्यसूत्रेण सत्त्वादीनां प्रकृतिस्वरूपत्वहेतुना प्रकृतिधर्म्मत्वप्रतिषेधात्।

माह,—"साम्यावस्था चे"ति। "न्यूनाधिकभावेन"=विसदृशपरिणामेन उद्भूतानुद्भूतरूपेण अङ्गाङ्गिभावप्राप्त्या। "असंहननावस्था"=आरम्भकसंयोगिनामिलितावस्था। यस्यामवस्थायां सत्त्वरजस्तमांसि विसदृशपरिणामाभावेन तुल्यतया वर्त्तन्ते तादृशी अवस्था, प्रलयावस्थेत्यर्थः। तस्यैवार्थमाह,—"अकार्य्यावस्थे"ति। अतिव्याप्त्यभावं दर्शयति,—"महदादिकं त्वि"ति। "कार्य्यसत्त्वं"=महत्तत्त्वरूपेण परिणतम् उद्भूतं सत्त्वम्। सत्त्वस्य उद्भूततया परिणामेनैव महत्तत्त्वस्य उत्पत्तिः, अतः तस्य कार्य्यसत्त्वस्य न कदापि साम्यावस्थेति नातिव्याप्तिरित्याह,—"न कदापीत्यादि"। उपलक्षितपदोपादानस्य प्रयोजनमाह,—"वैषम्यावस्थायामपी"ति। कारणसत्त्वस्य वैषम्यावस्थायामपि सत्त्वेन तस्य तदानीं साम्यावस्थाऽभावेन अव्याप्तिः स्यात्, तद्दोषवारणाय "उपलक्षितम्" इति विशेषणम्। कारणसत्त्वादिगुणत्रयाणां प्रलयकाले सदृशपरिणामात् साम्यावस्थासत्त्वेन साम्यावस्थोपलक्षितत्वं सर्व्वदैव तत्रास्ति, तेन सृष्टिकाले वैषम्यदशायामपि न प्रकृतित्वहानिः। प्रतियोगिव्यधिकरणतदभावस्याभाववत्त्वस्यैव तदुपलक्षितत्वरूपत्वात्। यथा यदा कदाचित् काकसत्त्वेन काकोपलक्षितं देवदत्तस्य गृहमिति। उपलक्षितान्तविशेषणस्य निष्कृष्टार्थमाह "अकार्य्यमि"ति।

"एते प्रधानस्य गुणास्त्रयः स्युरनपायिनः"इत्यादिस्मृतिवचने प्रधानस्येति षष्ठ्या भेदबोधकतया सत्त्वरजस्तमसां प्रकृतेः भेदं तद्धर्म्मकत्वञ्चेति आशङ्क्य गुणानां प्रकृत्य-

योगसूत्रतद्भाष्याभ्यामपि गुणानामेव प्रकृतित्ववचनाच्च। गुणेभ्य एव कार्य्योत्पत्तौ तदन्यप्रकृतिकल्पनावैयर्थ्याच्च। 'प्रकृतेर्गुणा' इत्यादिवाक्यं तु वनस्य वृक्षा इतिवद् बोध्यम्। "सत्त्वं रजस्तम इति प्रकृतेरभवन् गुणाः।" इति सत्त्वादीनां प्रकृतिकार्य्यत्ववचनन्तु गुणनित्यतावाक्यविरोधेन महत्तत्त्वकारणीभूतकार्य्यसत्त्वादिपरमेव। (ण)

महदादिसृष्टिर्हि गुणवैषम्याच्छ्रूयते। तत्र वैषम्यं सजातीयसंवलनेन गुणान्तरव्यावृत्तप्रकाशादिफलोपहितः

भेदं साधयति,—"सत्त्वादिगुणवती"ति। "सत्त्वादिगुणवती"त्यनेन = सत्त्वादीनां प्रकृतिधर्म्मत्वमाशङ्कितम्। "सत्त्वाद्यतिरिक्ते"त्यनेन = सत्त्वादिभ्यः प्रकृतेः भेदाशङ्का कृता। पूर्वोक्तां शङ्कां प्रतिषेधति,—"इति न शङ्कनीयमिति"। शङ्कानिषेधे हेतुत्वेन सांख्यसूत्रं प्रमाणयति "सत्त्वादीनामि"ति (६।७९) सत्त्वादिगुणानां प्रकृतिधर्म्मत्वं नास्ति प्रकृतिस्वरूपत्वादिति सूत्रार्थः। सत्त्वादीनां प्रकृतिस्वरूपत्वं प्रदर्शयन् हेतुमुखेन स्वयं सूत्रार्थं विवृणोति "सत्त्वादीनामि"ति। योगसूत्रं तद्भाष्यं च प्रमाणयति, "योगसूत्रे"ति। तथाच योगसूत्रं "प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम्" इति, तद्भाष्यञ्च,—"प्रकाशशीलं सत्त्वं, क्रियाशीलं रजः, स्थितिशीलं तमः इति। एते गुणाः इत्युपक्रम्योपसंहारः प्रधानशब्दवाच्या भवन्ती"ति। सत्त्वादीनां प्रकृतेरनतिरेके युक्तिमाह,—"गुणेभ्य एवे"ति। सत्त्वादिगुणानां प्रकृत्या भेदाभावे प्रकृतेर्गुणा इत्यादिभेदार्थकषष्ठ्या अनुपपत्तिमाशङ्क्य तदर्थमाह, "प्रकृतेर्गुण" इति। प्रकृतेः गुणकारणत्वबोधकस्मृतिवाक्यार्थमाह, "सत्त्वादीनामि"ति। "महत्तत्त्वकारणीभूतकार्य्यसत्त्वादिपरमेव" = बुद्धितत्त्वजनकजन्यसत्त्वादिप्रतिपादकमेव। "एव" कारेण प्रकृत्यात्मकनित्यसत्त्वादीनां व्यावृत्तिः। (ण)

कार्य्यसत्त्वादिसत्तायां प्रमाणमादर्शयन् महदादिसृष्ट्युपपादनार्थं गुणानां विसदृशपरिणामरूपवैषम्यमाह,—"महदादिसृष्टिर्हि" इति। "गुणवैषम्यात्" =

सत्त्वादिव्यवहारयोग्यः परिणाम इति । एतेन अष्टाविंशति-तत्त्वपक्षोऽप्युपपादितो मन्तव्यः । वैषम्य एव सत्त्वादिव्यवहारश्च श्रुतौ दृश्यते । यथा तम एवेदमग्रे आस, तत् परेणेरितं विषमत्वं प्रयात्येतद् वै रजसोरूपं, तद्रजः खल्वीरितं विषमत्वं प्रयात्येतद् वै सत्त्वस्य रूपमिति । (त)

---

गुणानां विसदृशपरिणामात् । कीदृशं तद्गुणानां वैषम्यमित्याह,—"तच्च वैषम्य-मि"ति । "स्वजातीयसंवलनेन" = तुल्यजातीयसत्त्वादिगुणावष्टम्भेन । सत्त्वादीना-मनेकव्यक्तिकतया सत्त्वं स्वतुल्यजातीयानेकसत्त्वादिगुणव्यक्त्याश्रयद्वारा रजस्तम-सामभिभवेन अभिव्यक्तं भवति, तदा च सत्त्वस्य अधिकः भागः स्वल्पाभ्यां च रजस्तमोभ्यां संसृष्टो भवति । तया च अभिव्यक्त्या सत्त्वस्य प्रकाशात्मकत्वेन प्रकाशरूपं फलं जायत इत्यर्थः । "गुणान्तरव्यावृत्तप्रकाशादिफलोपहितः" = रजस्तमोव्यावृत्तप्रकाशाख्यफलोपधानविशिष्टः । "सत्त्वादिव्यवहारयोग्यः" = प्रकाशादिफलोपहिततया व्यवहारयोग्यतामापन्नः । "परिणामः" = प्रकाशादि-फलोपाधानविशिष्टतया धर्म्मान्तरवैशिष्ट्यापत्तिः । पूर्वोक्तप्रकारेण कार्य्यसत्त्वादि-स्वीकारे अष्टाविंशतितत्त्वपक्षस्यापि उपपत्तिर्भवतीत्याह, "एतेने"ति । "एतेन" = कार्य्यसत्त्वाद्युपपादनेन । प्रसिद्धैः पञ्चविंशत्या तत्त्वैः सह कार्य्याणां सत्त्वरज-स्तमसां सङ्कलनेन अष्टाविंशतिः तत्त्वानि भवन्तीत्यर्थः । वैषम्यावस्थायामेव सत्त्वादिव्यवहारे श्रौतं प्रमाणमुपन्यस्यति, "वैषम्य एवे"ति । "एव" कारेण साम्यावस्थायां प्रलये व्यवहाराभावः सूचितः । श्रुतिवाक्यमुदाहरति,—"तम एवेद-मि"ति । श्रुत्यर्थस्तु,—"अग्रे" = सृष्टेः प्राक्, "तम एव आस" = गुणत्रयस्य सदृशपरिणामेन व्यवहारायोग्यं तमोरूपं प्रधानम् एव आसीत् । "तत्" = तमोरूपं प्रधानम् । "परेण" = पुरुषेण ; "ईरितं" = प्रेरितं, क्षोभ्यमाणमिति यावत् । "विष-मत्वं प्रयाति" = सृष्ट्यभिमुखं भवति ; तेन च व्यवहारयोग्यतां प्राप्नोतीत्यर्थः । "एतद्वै रजसो रूपं" = एतदेव व्यवहारयोग्यतामापन्नं रजः, यत् तद् रजः परेण ईरितं सत् विषमत्वं प्रयाति । एवं एतद्वै सत्त्वस्य रूपं यत् तत्सत्त्वं परेण ईरितं विषमत्वं प्रयाति इति । (त)

सत्त्वादित्रयञ्च सुखप्रकाशलाघवप्रसादादिगुणवत्तया संयोगविभागादिमत्तया अनाश्रितत्वोपादानत्वादिना च द्रव्यत्वेऽपि पुरुषोपकरणत्वात् पुरुषबन्धकत्वाच्च गुणशब्देनोच्यते इन्द्रियादिवत्। गुणानां सुखदुःखमोहात्मकत्वप्रवादस्तु धर्मधर्म्यभेदात्। मनसः संकल्पात्मकत्ववत्। तत्र सत्त्वं सुखप्रसादप्रकाशाद्यनेकधर्मकं प्राधान्यतस्तु सुखात्मकमुच्यते। एवं रजोऽपि दुःखकालुष्यप्रवृत्त्याद्यनेकधर्मकं प्राधान्यतस्तु

---

सत्त्वादीनां वैशेषिकपरिभाषया द्रव्यत्वमुपपादयितुं तत्परिभाषितगुणत्वस्य प्रत्याख्यानद्वारेण स्वशास्त्रसङ्केतितगुणशब्दाभिधेयत्वे हेतुं चाभिधातुमाह,—"सत्त्वादित्रयमि"ति। सत्त्वादीनामगुणत्वे द्रव्यत्वे च हेतुमाह,—"सुखप्रकाशे"-त्यादि। वैशेषिकशास्त्रे द्रव्याणामेव गुणक्रियाश्रयत्वस्य अनाश्रितत्वस्य उपादानत्वस्य च प्रसिद्धत्वा, तथा गुणानां तदभावस्य निश्चयेन न सत्त्वादीनां वैशेषिकशास्त्रप्रसिद्धगुणत्वमपि तु द्रव्यत्वमेवेत्यर्थः। ननु तेषामुक्तयुक्त्या द्रव्यत्वं सिद्धं चेत् तदा तत्र गुणत्वप्रसिद्धेः का उपपत्तिरित्यत आह,—"द्रव्यत्वेऽपी"ति। "द्रव्यत्वेऽपि"=वैशेषिकपरिभाषया द्रव्यत्वे सिद्धे सत्यपि। एषां गुणशब्दवाच्यत्वे एको हेतुः,—"पुरुषोपकरणत्वादि"ति "पुरुषोपकरणत्वात्"=पुरुषभोग्यत्वात्, भोग्यं हि भोक्तुः शेषतया गुणः। अपरमपि हेतुमाह,—"पुरुषबन्धकत्वादि"ति=पुरुषपशुबन्धहेतुत्रिगुणरज्जुसाम्याद् गुणत्वमित्यर्थः। अत्र दृष्टान्तमाह,—"इन्द्रियादिवदि"ति=यथा इन्द्रियाणि भोगसाधनतया भोक्तुः पुरुषस्य गुणाः, तथेत्यर्थः। सत्त्वादिगुणानां द्रव्यात्मकत्वे तेषां सुखदुःखमोहरूपगुणाभेदप्रतिपादकवाक्यस्यानुपपत्तिमाशङ्क्य तदुपपादयति,"गुणानामि"ति। "धर्मधर्म्य"भेदात्=धर्मिणा सत्त्वादिना तद्गुणस्य सुखादेः, द्रव्यगुणयोः सामानाधिकरण्यप्रतीतेः भेदाभेदयोः प्रमाणसिद्धत्वादभेदविवक्षया सत्त्वादीनां सुखाद्यात्मकत्वमुक्तमित्यर्थः॥

अत्र दृष्टान्तः "मनस" इति। सङ्कल्पात्मकता"=संशयाद्यात्मकवृत्त्यात्मकता। सत्त्वादीनां विवेकज्ञानोपयोगितया साधर्म्यमुच्यते "तत्रे"ति। "तत्र"=सत्त्वा-

दुःखात्मकमुच्यते। तथा तमोऽपि मोहावरणलक्षणाद्यनेक-धर्मकं प्राधान्यतस्तु मोहात्मकमुच्यते। त एव धर्म्मास्तेषां लक्षणानि भवन्ति। सत्त्वादिसंज्ञा चान्वर्था, सतो भावः सत्त्वमुत्तमत्वमिति व्युत्पत्त्या हि धर्मप्राधान्येनोत्तमं पुरुषोप-कारणं सत्त्वशब्दार्थः। मध्यमञ्च रजःशब्दार्थः रागयोगात्। अधमं च तमःशब्दार्थः, अधर्म्मावरणयोगात्। (थ)

तानि च सत्त्वादीनि प्रत्येकमसंख्यव्यक्तयः। "लघुत्वादि-धर्मैरन्योन्यसाधर्म्यं वैधर्म्यं च गुणानामि"ति सांख्यसूत्रात्। अत्र हि सूत्रे लघुत्वादिना बहूनां सत्त्वानां साधर्म्यं तेनैव

दिषु। सत्त्वधर्म्मान् कथयितुमुपक्रमते,—"सत्त्वमि"ति। सत्त्वधर्म्मा उच्यन्ते,—"सुखे"ति, आदिशब्देन लघुत्वादीनां संग्रहः। पूर्ववद् रजसो धर्म्मान् दर्शयति,—"एवं रजस" इति। आदिशब्दाद् उपष्टम्भकत्वादीनां संग्रहः। तमसो धर्म्मान् आह "तथा तमोऽपी"ति, आदिशब्दाद् गुरुत्वादीनां संग्रहः। यद्येवं सत्त्वादीनामनेक-धर्म्मकत्वं तदा कथं केवलसुखदुःखमोहात्मकत्वव्यवहार इत्याशङ्कानिरासाय "प्राधान्यतः सुखात्मकमुच्यते" इत्यादिरूपाणि साधर्म्म्यवाक्यावसानानि ज्ञातव्या-नीति। सत्त्वादीनां प्रत्येकं लक्षणाभिधित्सया आह,—"त एव धर्म्मा" इति। "ते" = सुखादयः। सुखादीनाम् इतरव्यावर्त्तकतया तल्लक्षणत्वमित्यर्थः; इतरव्यावर्त्तक-धर्म्मस्यैव लक्षणार्थत्वादिति। एवञ्च सुखादिधर्म्मकत्वं सत्त्वत्वमित्यादिलक्षणमा-यातमित्यर्थः। गुणानां सत्त्वादिसंज्ञायां कारणमाह,—"सत्त्वादिसंज्ञे"ति। "अन्वर्थाः" = अनुगतः अर्थः येषां ते, योगलभ्यार्थयुक्ता इत्यर्थः। योगार्थं दर्शयति, —"सतः भाव" इति। (थ)

केचित् सत्त्वादीनामेकैकव्यक्तिकत्वमङ्गीकुर्वन्ति, तन्मतखण्डनाय सत्त्वादीनाम-संख्यव्यक्तिकत्वं प्रतिजानीते "तानि चे"ति। तत्र सांख्यसूत्रं प्रमाणयति, "लघु-त्वादिधर्म्मैरि"ति। स्वयमेव सूत्रं व्याख्याय सत्त्वादीनां बहुत्वमुपपादयति "अत्र ही"ति। बहुषु समानेषु विद्यमानधर्म्मस्य साधर्म्म्यशब्दार्थत्वात्, तथा विरूपाणां

रजस्तमोभ्यां वैधर्म्म्यम् । एवं चलत्वादिना गुरुत्वादिना च बहूनां रजसां बहूनां च तमसां तदुभयमुक्तमिति ।

किञ्च यदि सत्त्वादित्रयमेकैकव्यक्तिरेव स्यात् तत् त्रयं विभ्वेव वक्तव्यम् । एकदाऽनेकब्रह्माण्डादिसृष्टिश्रवणात् । तथाच कार्य्याणामनन्तवैचित्र्यं न घटते । न च संयोगवैचित्र्याद् वैचित्र्यं स्यादिति वाच्यम् । विभूनां त्रयाणां गुणानां स्वतः

---

तादृशधर्म्मस्य वैधर्म्म्यत्वात् साधर्म्म्यवैधर्म्म्ययोरनेकव्यक्तिवृत्तित्वमवश्यमङ्गीकरणीयम्, तथा च लघुत्वादिधर्म्माणामधिकरणस्य सत्त्वादेरनेकव्यक्तिकत्वं सिद्धम् । अन्यथात्वे साधर्म्म्यवैधर्म्म्योक्तेरेव विरोधः स्यात् । केषां केषां धर्म्माणां तत्र साधर्म्म्यं, केषां केषां च वैधर्म्म्यं तद्दर्शयति, "बहूनां सत्त्वानामि"ति । लघुत्वादिधर्म्मैः सर्वासां कारणसत्त्वादिव्यक्तीनां साधर्म्म्यम्, रजसां तमसां च वैधर्म्म्यमित्यर्थः । चलत्वादिषु अपि धर्मेषु एवं साधर्म्यं वैधर्म्यं च ज्ञातव्यमित्याह,—"एवमि"ति । "तदुभयम्" = साधर्म्यं वैधर्म्यं चेति द्वयम् ।

कारणसत्त्वादीनां प्रत्येकमेकैकव्यक्तिकत्वेऽपि कार्य्यसत्त्वादीनामनेकतया लघुत्वादिसाधर्म्म्यं भविष्यतीत्याशङ्क्य युक्त्यन्तरेण कारणसत्त्वादीनाम् अनेकव्यक्तिकत्वमुपपादयति "किञ्चे"ति । सत्त्वादीनामेकैकव्यक्तिकत्वाङ्गीकारे आपाद्यदूषणमाह "यदी"ति । यदि सर्व्वोपादानम् एकं स्यात् तदा तत् विभु स्यादित्यर्थः । विभुत्वरूपापाद्यमुपपादयति "एकदे"ति । यत् युगपत् सर्व्वोपादानं तत् सर्वकार्य्यसम्बन्धवत्तया विभु इति व्याप्तेः निश्चयेन सर्व्वोपादानसत्त्वादेः विभुत्वनिश्चयः । तथाच सांख्यसूत्रम्, "परिच्छिन्नं न सर्वोपादानमिति" । सत्त्वादीनां युगपत् सकलब्रह्माण्डकारणत्वे प्रमाणभूतां श्रुतिं स्मारयति, "श्रवणादि"ति । सा च "अजामेकां लोहितशुक्लकृष्णामि"त्यादिरूपा ज्ञेया । ननु भवतु सत्त्वादीनां विभुत्वं का हानिरित्यत आह,—"तथा चे"ति । "तथा च" = कारणसत्त्वादीनां विभुत्वे च । "कार्य्याणां" = महदादीनाम् । विभूनां कारणसत्त्वादीनां प्रत्येकम् एकरूपतया तत्कार्य्याणां वैचित्र्यं न सम्भवतीत्यर्थः । दृश्यते च कार्य्यवैचित्र्यम्, अतः कार्य्यवैचित्र्याभावो निवर्त्तमानः उपादानसत्त्वादीनां विभुत्वं निवर्त्तयतीति सिद्धं

संयोगवैचित्र्यासम्भवात्। द्रव्यान्तरस्य चाऽवच्छेदकीभूतस्याभावादिति। तस्मात् सत्त्वादीनि असंख्यव्यक्तिकान्येव द्रव्याणि। (८)

तेषु त्रित्ववचनं तु सत्त्वत्वादिविभाजकोपाधित्रयेण वैशेषिकाणां नवद्रव्यवचनवदिति सिद्धम्। तानि च सत्त्वादीनि यथायोग्यमणुविभुपरिमाणकानि। अन्यथा

---

सत्त्वादीनां परिच्छिन्नानेकव्यक्तिकत्वम्। नन्वेवं प्रकृतिस्वरूपसत्त्वादिगुणानां परिच्छिन्नानेकव्यक्तिकत्वे "परिच्छिन्नं न सर्वोपादानम्" इत्यादिसूत्रोक्तं प्रकृतेरपरिच्छिन्नत्वं कथं सङ्गच्छते इति चेदत्रोच्यते, परिच्छिन्नत्वमत्र दैशिकाभावप्रतियोगितावच्छेदकावच्छिन्नत्वं, तदभावश्च अपरिच्छिन्नत्वरूपव्यापकत्वम्, प्रकृतित्वं च न दैशिकाभावप्रतियोगितावच्छेदकं, सर्वत्रैव प्रकृतिव्यक्तीनां विद्यमानतया अत्र प्रकृतिर्नास्तीति अभावस्य अभावात्। कारणसत्त्वादित्रयस्य विभुत्वे प्रत्येकमेकरूपत्वेऽपि तेषामन्योन्यसंयोगवैचित्र्यात् कार्यवैचित्र्यं भविष्यतीति शङ्कते "न चे"ति।

विभूनां सत्त्वादिगुणानां अप्राप्तेरभावात् निरवयवत्वाच्च अन्योन्यसंयोगाभावेन संयोगजन्यवैचित्र्यासम्भवप्रदर्शनेन उक्तशङ्कां परिहरति "विभूनामि"ति। "स्वतः" = अवच्छेदकं विना। अत्र किञ्चिदवच्छेदकं भविष्यतीत्यत आह,—"द्रव्यान्तरस्ये"ति। उपसंहरति "तस्मादि"ति (८)।

सत्त्वादीनामसंख्यव्यक्तिकत्वेऽपि तत्र त्रित्ववचनमुपपादयति,—"तेषु त्रित्ववचनन्त्वि"ति। वैशेषिकाणाम् आकाशव्यतिरिक्तानां पृथिव्यादिद्रव्याणां प्रत्येकम् असंख्यव्यक्तिकत्वेऽपि द्रव्यत्वविभाजकपृथिवीत्वाद्युपाधिना नवत्ववत् अस्मन्मतेऽपि सत्त्वादीनां प्रत्येकम् असंख्यव्यक्तिकत्वेऽपि सत्त्वत्वादिधर्मेण त्रित्वमित्यर्थः। विभुपदार्थकारणीभूतसत्त्वादीनां विभुत्वं, तथा परिच्छिन्नद्रव्योपादानसत्त्वादीनां चाणुत्वं परिमाणं दर्शयति,—"तानि चे"ति। ननु कारणद्रव्याणां केवलं अणुत्वं विभुत्वं वा स्वीक्रियताम् किमुभयविधपरिमाणाङ्गीकारेण इत्यतः केवलाणुपरिमाणत्वे केवलविभुपरिमाणत्वे च दोषं दर्शयति,—"अन्यथे"ति। "अन्यथा"

रजसश्चलस्वभावत्ववचनविरोधात् । आकाशकारणत्वस्य च विभुत्वौचित्यात् । सर्वेषां कारणद्रव्याणां विभुत्वे कार्य्याणां परिच्छिन्नत्वानुपपत्तेश्च । (ध)

नन्वेवं वैशेषिकोक्तान्येव पार्थिवाद्यणूनि प्रकृतिरित्यायात-

=कारणसत्त्वादीनामुभय-विधपरिमाणानङ्गीकारे । सर्वासां सत्त्वादिव्यक्तीनां विभुत्वाङ्गीकारे दोषं दर्शयति "रजस" इति । सर्वासां रजोव्यक्तीनां विभुत्वे क्रियात्मकचलस्वभावत्वस्य विभुनि असम्भवात् रजसः चलस्वभावत्ववाक्यविरोधः स्यादित्यर्थः । सर्वासां सत्त्वादिव्यक्तीनामणुत्वाङ्गीकारे दोषं दर्शयन् कासांचित् विभुत्वाङ्गीकारे हेतुमाह,—"आकाशे"ति । आकाशरूपकार्य्यस्य विभुत्वेन तत्कारणस्यापि विभुत्वस्यावश्याङ्गीकार्य्यत्वादित्यर्थः । ननु भवतु सर्वासामेव कारणव्यक्तीनां विभुत्वं का हानिरित्यत आह,—"सर्वेषामि"ति । सर्वासां कारणव्यक्तीनां विभुत्वे तत्कार्य्याणामपि विभुत्वौचित्यात् कार्य्याणां परिच्छिन्नपरिमाणत्वस्यानुपपत्तेरित्यर्थः । कारणद्रव्याणाम् अणुपरिमाणत्वे पार्थिवाद्यणुकारणवादापत्तिं शङ्कते "नन्वेवमि"ति । "एवं"=सत्त्वादीनामणुत्वस्वीकारे । उक्ताशङ्कां निषेधति "ने"ति । अणुकारणवादात् विशेषं दर्शयति "गन्धादिशून्यत्वेने"ति । वैशेषिकैः पार्थिवाद्यणुषु गन्धादिगुणाः अङ्गीक्रियन्ते, अस्माकन्तु सत्त्वादिकारणद्रव्येषु ते न सन्तीति विशेषः । सत्त्वादिकारणद्रव्यात्मकप्रधानस्य गन्धादिगुणशून्यत्वे प्रमाणभूतविष्णुपुराणादिवाक्यमुपन्यस्यति "तदुक्तमि"ति । "यदव्यक्तं"=सूक्ष्मरूपेण कार्य्यान्वितम् कारणम्, तदृषिसत्तमैः कारणं, प्रधानं, सूक्ष्मा, प्रकृतिरिति च प्रोच्यते । कीदृशं तदित्याह,—"नित्यं" =सदैवैकरूपं, परिणामिनित्यमित्यर्थः । "सदसदात्मकम्" =अविनाशात् अर्थक्रियाकारित्वेन शशशृङ्गादिविलक्षणतया च सदात्मकम् तथा प्रतिक्षणपरिणामितया असदात्मकञ्च । "शब्दस्पर्शविहीनं"=शब्दस्पर्शगुणशून्यम् । "रूपादिभिरसंयुतम्"=रूपरसादिगुणविरहितम् । "त्रिगुणं"=सत्त्वरजस्तमोगुणात्मकम् । "तत्"=प्रधानम् । "जगद्योनिः"=जगतः उपादानकारणम् । "अनादि" =उत्पत्तिशून्यम् । "प्रभवाप्ययम्"= उत्पत्तिलयस्थानमित्यर्थः । (ध)

ननु वैशेषिकैर्हि महता युक्त्यवष्टम्भेन कारणद्रव्येषु गन्धादिकमनुमितम्,

मिति चेन्न गन्धादिगुणशून्यत्वेन कारणद्रव्येषु पृथिवीत्वाद्य-भावतोऽस्माकं विशेषात्। तदुक्तं विष्णुपुराणादिषु,—

> अव्यक्तं कारणं यत्तत् प्रधानमृषिसत्तमैः।
> प्रोच्यते प्रकृतिः सूक्ष्मा नित्यं सदसदात्मकम्॥
> शब्दस्पर्शविहीनं तद्रूपादिभिरसंयुतम्।
> त्रिगुणं तज् जगद्योनिरनादिप्रभवाप्ययम्॥

इत्यादिना।

---

तत्कथं कारणद्रव्याणां गन्धादिगुणशून्यत्वमाख्यातुं शक्यते इत्याशङ्क्याह—'वैशेषिकाणामि"ति। "भाष्ये"=सांख्यप्रवचनभाष्ये। तन्निराकरणप्रकारश्च उद्ध्रियते भाष्यतः,—यथा,—"प्रकृतेः शब्दस्पर्शादिमत्त्वे तु बाधकमस्ति,—"शब्दस्पर्शविहीनं तद्रूपादिभिरसंयुतम्। त्रिगुणं तद् जगद्योनिरनादिप्रभवाप्ययमि"त्यादिविष्णुपुराणादिवाक्यजातम्। बुद्ध्यहङ्कारयोश्च शब्दस्पर्शादिमत्त्वे भूतकारणत्वश्रुतिस्मृतय एव बाधिकाः सन्ति। बाह्येन्द्रियग्राह्यजातीयविशेषगुणवत्त्वस्यैव भूतलक्षणत्वेन तयोरपि भूतत्वापत्त्या स्वस्य स्वकारणत्वानुपपत्तेरिति। नन्वेवं कारणद्रव्येषु रूपाद्यभावे तन्मात्ररूपादेः किं कारणमिति चेत् स्वकारणद्रव्याणां न्यूनाधिकभावेन अन्योन्यं संयोगविशेष एव, हरिद्रादीनां संयोगस्य तदुभयारब्धरक्तरूपादिहेतुत्वदर्शनात्। दृष्टानुसारेण स्वाश्रयहेतुसंयोगानामेव रूपादिहेतुत्वसम्भवे तार्किकाणां परमाणुषु रूपकल्पनं तु हेयम्। सजातीयकारणगुणस्यैव कार्य्यगुणारम्भकतेति तु तेषामपि न नियमः। त्रसरेणुमहत्त्वादीनामवयवबहुत्वादेरेव तैरपि हेतुत्वाभ्युपगमादिति दिक्।

स्वसिद्धान्तहानिं शङ्कते "अथैवमि"ति। प्रकृतेरपरिच्छिन्नत्वम् एकत्वम्, अक्रियत्वञ्चेति स्वसिद्धान्तमुपपादयति,—"कारणे"ति। परिच्छिन्नत्वं हि दैशिकाभावप्रतियोगितावच्छेदकावच्छिन्नत्वं, तदभावश्चापरिच्छिन्नत्वं व्यापकत्वमित्यर्थः। परिच्छिन्नव्यक्तेरपि स्ववृत्तिसामान्यद्वारेण व्यापकतायां दृष्टान्तमाह,—"गन्धत्वेने"ति। यथा पृथिव्यां गन्धो नास्तीति गन्धत्वावच्छिन्नप्रतियोगिकाभावस्य पृथिव्यामविद्यमानतया प्रत्यधिकरणभेदेन उपलभ्यमानस्य अनन्तव्यक्त्यात्मकस्यापि

वैशेषिकाणां कारणद्रव्येषु गन्धाद्यनुमानं तु भाष्येऽस्माभिर्निराकृतम् । अथैवमपि प्रकृतेरणुविभुसाधारणसत्त्वाद्यनेकव्यक्तिरूपत्वेऽपरिच्छिन्नत्वैकत्वाक्रियत्वसिद्धान्तक्षतिरिति मैवम्, कारणद्रव्यत्वरूपप्रकृतित्वेनैवापरिच्छिन्नत्ववचनात् । गन्धत्वेन गन्धानां पृथिवीव्यापकतावत् ।

आकाशादिप्रकृतीनां विभुत्वेनैव प्रकृतिविभुत्वसिद्धान्तोपपत्तेश्च । तथा पुरुषभेदेन सर्गभेदेन च भेदाभावस्यैवैकशब्दार्थ-

---

गन्धस्य पृथिवीव्यापकत्वम्,तद्वदत्र प्रकृतिर्नास्तीति प्रकृतित्वावच्छिन्न-प्रतियोगिताकप्रकृत्यभावस्य कस्मिन्नपि देशेऽवृत्तेः प्रकृतेर्व्यापकता बोध्या । प्रकारान्तरेण प्रकृतेर्विभुत्वं दर्शयति,—"आकाशादिप्रकृतीनामि"ति । आकाशादिप्रकृतीनाम्=विभुपदार्थकारणीभूतानामित्यर्थः । विभुपदार्थोपादानस्य विभुत्वौचित्यादित्यर्थः । अतः सिद्धम् आकाशादिकारणीभूतानां कासाञ्चित् प्रकृतिव्यक्तीनां यथाश्रुतमेव विभुत्वम् । उपपन्नमतः परिच्छिन्नापरिच्छिन्नोभयरूपत्वं प्रकृतेः । प्रकृतेरेकत्वमुपपादयति 'तथे"ति । "तथा"=यथा परिच्छिन्नत्वेऽपि प्रकारान्तरेण प्रकृतेर्विभुत्वमुपपादितं तथैव अनेकव्यक्तिकत्वेऽपि प्रकारान्तरेण एकत्वमित्यर्थः । प्रकारान्तरेण एकत्वमुपपादयति 'पुरुषभेदेने"ति । सर्गभेदेन पुरुषभेदेन च भिन्नत्वम् अनेकत्वं, बुद्ध्यादीनां तादृशमनेकत्वं धर्मः, प्रकृतेस्तु प्रतिसर्गं प्रतिपुरुषं च भोग्यतया अभेदात् न भेद इत्यतः एकत्वमित्यर्थः । तत्र प्रमाणं दर्शयति,—"अजामि"त्यादि । "अजामेकां लोहितशुक्लकृष्णां वह्वीः प्रजाः सृजमानां स्वरूपाः अजो ह्येको जुषमाणोऽनुशेते । जहात्येनां भुक्तभोगामजोऽन्यः ॥" इति सम्पूर्णा श्रुतिः । अत्र एकामित्यनेन प्रकृतेरेकत्वमुक्तमित्यर्थः । प्रकृतेः क्षोभश्रवणात् स्पन्दाद्यात्मकक्रियावत्त्वेऽपि अक्रियत्वमुपपादयति "अथे"ति । बुद्ध्यादौ अध्यवसायादिरूपा असाधारणी क्रिया विद्यते, प्रकृतेस्तु तादृशासाधारणक्रियाभावादक्रियत्वमित्यर्थः । यथाश्रुतक्रियाभावस्यैव अक्रियशब्दार्थता कथं न स्यादित्यतः आह,—"अन्यथे"ति । "अन्यथा"=सङ्कुचितवृत्त्या पूर्वोक्तपारिभाषिकाक्रियत्वस्यानङ्गी-

त्वात्। अजामेकामिति श्रुतितस्तथाऽवगमात्। अथाऽध्यवसायाभिमानादिक्रियाराहित्यस्यैवाक्रियशब्दार्थत्वात्। अन्यथा श्रुतिस्मृतिषूक्तस्य प्रकृतिक्षोभस्याऽनुपपत्तेरिति। प्रकृतिगताश्चापरे विशेषा भाष्ये द्रष्टव्याः। (न)

प्रकृत्यनुमानं चेदम्। सुखदुःखमोहात्मकं महदादिकार्य्यं सुखदुःखमोहात्मकद्रव्यकार्य्यं सुखदुःखमोहात्मकत्वात् वस्त्रादिकार्य्यशय्यादिवदिति। श्रुतिस्मृती चात्राऽनुग्राहकस्तर्कः।

---

कारे। प्रकृतौ क्रियासामान्याभावाङ्गीकारे श्रुत्याद्युक्तप्रकृतिक्षोभादिक्रियाया अनुपपत्तिरूपदोषमाह,—"श्रुतिस्मृतिष्वि"ति। "तत् परेणेरितं विषमत्वं प्रयाति" इत्यादिश्रुतौ "प्रधानं पुरुषं चापि प्रविश्यात्मेच्छया हरिः। क्षोभयामास सम्प्राप्ते सर्गकाले व्ययाव्ययौ" इत्यादौ स्मृतौ चेत्यर्थः। "प्रकृतिक्षोभस्य" = प्रकृतौ सृष्टिप्रयोजकस्पन्दाद्यात्मकक्रियायाः। इत उक्तादपरे विशेषा प्रवचनभाष्यादौ द्रष्टव्या इत्याह,—"प्रकृतिगताश्चे"ति। ग्रन्थविस्तरभयाद् नेह ते उद्धृताः। (न)

प्रकृतेरनुमानं दर्शयति,—"प्रकृत्यनुमानमि"ति, अत्र चेत्थं व्याप्तिरवसेया,—यानि यद्रूपात्मकानि तानि तदात्मकद्रव्योपादानकानि, यथा सुखाद्यात्मकवस्त्रादिकार्य्यतदात्मकशय्यादीनि। अत्रानुकूलतर्कं दर्शयति "श्रुतिस्मृती" इति। "तदैक्षत" "अजामेकां" "अव्यक्तं कारणं यत् तत्" इत्यादौ इत्यर्थः। एवं सामान्यरूपत एवानुमानात् विज्ञाते प्रधानादौ विशेषतः ज्ञानकारणं शास्त्रं योगजप्रत्यक्षं च प्रमाणयति "एवमि"ति। अनुमानतः विशेषस्य अनवगमे हेतुमाह,—"अनुमानस्ये"ति। "सामान्यमात्रविषयकत्वात्" = कार्य्यकारणत्वादिसामान्यधर्म्मपुरस्कारेणैव व्याप्तिग्रहात् अनुमानात् सामान्यरूपेणैव साध्यसिद्धेः। तथैवोक्तमनुमानलक्षणं व्यासभाष्ये "अनुमेयस्य तुल्यजातीयेष्वनुवृत्तो भिन्नजातीयेभ्यो व्यावृत्तः सम्बन्धो यस्तद्विषया सामान्यावधारणप्रधाना वृत्तिरनुमानमि"ति। अहं सुखीत्यादिरूपेण आन्तरपदार्थतया सुखादीनामनुभवसिद्धत्वेन वाह्ये शय्यादौ तदनुभवाभावेन दृष्टान्तधर्म्मिणि सुखादेरसत्त्वात् व्याप्तिग्रहासम्भवं दर्शयितुं वाह्ये

एवं सामान्यतोऽनुमितायाः प्रकृतेर्विशेषाः शास्त्राद् योगाच्चावगन्तव्याः, अनुमानस्य सामान्यमात्रविषयकत्वात् । नन्वन्तरेव सुखादिकमुपलभ्यते, बाह्यवस्तुषु सुखादौ किं प्रमाणं येन दृष्टान्तता स्यादिति ? उच्यते,—अन्तःकरणस्य सुखादिहेतुतया विषयेषु सुखादिकं सिद्ध्यति । नच रूपादिगतोत्तमत्वादिकमेव सुखाद्युत्पादने नियामकम्, । (५)

उत्तमत्वादेर्जातित्वे नीलत्वपीतत्वादिना जातिसाङ्कर्य्यापत्तेः । कालादिभेदैरेकस्या एव रूपव्यक्तेः सुखदुःखोत्-

सुखादिसद्भावे प्रमाणमाक्षिपति "नन्वि"ति । "किं प्रमाणं"=प्रमाणं नास्तीत्यर्थः । विषयेषु सुखादिसत्त्वे प्रमाणं दर्शयितुं प्रतिजानीते "उच्यते" इति । तत्र प्रमाणं दर्शयति,—"अन्तःकरणस्ये"ति । अस्यायमर्थः—अन्तःकरणं तावत् सुखदुःखमोहात्मकप्रकृतिकार्य्यतया सुखदुःखमोहात्मकमिति निश्चितम्, ततः तत्कार्य्याणामपि तन्मात्रभूतादीनां सुखदुःखमोहात्मकत्वं न्यायसिद्धम् इति । ननु उत्तमरूपदर्शनात् सुखं जायते, तदभावे च नेति अन्वयव्यतिरेकदर्शनाद् रूपादीनामुत्तमत्वादिकमेव सुखाद्युत्पादकं न तु विषयेषु सुखादिकमस्तीति आशङ्कां निराकरोति "न चे"ति । (५)

रूपादिगतोत्तमत्वादीनां सुखादेरतिरिक्तत्वे सिद्धे रूपादीनां सुखाद्यात्मकत्वं न सिद्ध्यति इत्यतः रूपादिगतोत्तमत्वादीनां सुखाद्यात्मकत्वमङ्गीकरिष्यन् तदतिरिक्ततां निराकुर्वन् तथात्वे जातिसाङ्कर्य्यरूपजातिबाधकं दोषं दर्शयति,—"उत्तमत्वादेरि"ति । उत्तमत्वादेरित्यादिशब्देन अधमत्वादिरूपः दुःखादिहेतुः संगृहीतः, उत्तमत्वादीनां सुखादिहेतुत्वमङ्गीकृत्य किं तेषां रूपादिनिष्ठजातित्वमङ्गीक्रियते, उत तेषां सुखाद्यात्मकतेति विकल्प्य, यदि जातिरूपताङ्गीक्रियते तदा साङ्कर्य्यात् पीतत्वादीनाम् उत्तमत्वादीनां च जातित्वं न स्यात्, तदुक्तं द्रव्यकिरणावल्यामुदयनाचार्य्यपादैः "व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः । रूपहानिरसम्बन्धो जातिबाधकसंग्रहः ॥" सङ्करस्य परस्परात्यन्ताभावसमानाधि-

इयं नाम शय्या, यया हृदये निहितो मे हृदयाधिनाथः ? ( इति शय्यामालिङ्गति । ) प्रिये ! न पारितस्त्वयाऽसौ वञ्चको बलेन धृत्वा रक्षितुम् ? अथवा को नाम विभोर्विचित्रां गतिं जानीयात् ? हा नाथ ! हा कारुण्यनिलय ! नास्ति मयि ते कारुण्य-प्रसरः ? किं मया पापमाचरितम् ?

पद्मावती ।'नाथ !—अलमात्मावमाननया ।

जयदेवः ।—प्रिये ! करतलगतमपि नष्टं माणिक्यम् । नष्टरत्नो दरिद्रोऽनुतापमपि न करोतु ?

जाज्वल्यमानानि तदक्षराणि
बाष्पैर्विषिक्तान्यपि दीप्तिमन्ति,
विघोषयन्तीव विभोर्विभुत्वं
गायन्ति तारं सजलाब्दमन्द्रम्—
"देहि पदपल्लवमुदारम् ।"

अहो भुक्तमपि तेन !! तदिदानीं तद्भोजनावशेषस्यान्नस्य भोजनेन पूतमात्मानं करोमि । ( इति तथा करोति । )

पद्मावती ।—नाथ ! मा तावत् । विरम विरम । मदुच्छिष्टमेतत् ।

जयदेवः ।—अयि मुग्धे ! नैतत् कस्याप्युच्छिष्टतां भजते । शुनो मुखादपि ग्रहणीयमेतत् ।

( ततः प्रविशति पराशरः । )

जयदेवः ।—सखे ! पराशर ! आगतोऽसि ? गृहाण भगवत्प्रसादम् । धन्यो भव, पुण्यो भव । ( इति खादयति । )

पराशरः ।—सखे ! किमेतत् ?

जयदेवः ।—नान्यत् किमपि । कश्चिच्छठोऽनुपस्थिते मयि मद्भवनमागच्छत्, अनागत एव मयि पलायितश्च । यदि स धृतोऽभविष्यत्, तदा तमेतस्यां हृदयकारायां चिराय प्रेम-शृङ्खलया नियम्याऽरक्षिष्यम् । किन्तु नास्मि शक्तः पलायितोऽसौ न पुनर्धर्तुं शक्यते । सखे ! जानासि क्व गतोऽसौ ?

पराशरः । सखे ! नावगच्छामि ते भाषितस्यार्थम् ।

जयदेवः ।—नावगच्छसि ? अवगन्तुमिच्छसि ? विलोकय सफलीकुरु नयने । श्रीभगवतो गोलकपतेर्लिखितमेतत् । ज्वलन्ति चाक्षराणि, 'देहि

पदपल्लवमुदारम् ।" सखे ! समाहूय सर्व्वान् । सर्व्वैर्देवैरपि-दुर्लभं भगवत्प्रसादं भुक्त्वा विधौत-कल्मषा भवन्तु, गायन्तु च प्रमुक्तकण्ठं जलदपदवीं विभिद्य—

"देहि पदपल्लवमुदारम् ।"

---

तृतीयं दृश्यम्—गृहाङ्गनम् ।

ततः प्रविशति हुक्का-(१) हस्तो दीर्घशिखः ।

दीर्घशिखः ।—( धूममुद्वमन् ) अहो केन सृष्टेयं हुक्का ? करगतायामेतस्यां राज्यलाभसुखमनुभवामि । यदा पुनः सुखनिमीलितनयन इमां प्रणयिनीमिव पुनः पुनश्चुम्बामि, तदा तु देवराज इन्द्र एवाऽहम् । ( इति धूमं निःसारयति । ) अये सुष्ठु खल्विदमुच्यते—

ताम्रकूटं (२) महद्द्रव्यं श्रद्धया यः पिबेन्नरः ।
अश्वमेधफलप्राप्ति र्भवेत्तस्य न संशयः ॥

वृथैव रामादिभिः पुराणैर्नरपतिभिरश्वमेधश्रमः स्वीकृतः, संशयितञ्च जीवितं तेषु तेषु युद्धेषु । ( विलोक्य ) कथं, वह्निकवलितं ताम्रकूटम् । अरे, चन्द्रचूड़ ! चन्द्रचूड़ !

चन्द्रचूड़ः ।—( प्रविश्य ) एषोऽस्मि ।

दीर्घशिखः ।—भस्मीभूतं ताम्रकूटम् । तत् पुनरपि कलिका-(३) मापूरय ।

चन्द्रचूडः ।—देहि तावत् कलिकाम् । ( इति गृहीत्वा निष्क्रान्तः । )

दीर्घशिखः ।—जयदेवहतकस्याचारो मां नितरां व्यथयति । स तु कतिचित् शास्त्राक्षराण्याम्नाय मादृशांस्तृणाय मन्यते । पथि दृष्टश्चेत्तदा शारीरं नमस्कारं कुर्व्वन्नपि मनस्युपहसन्निव लक्ष्यते । कथं तस्य शास्तिर्विधीयताम् ? परिणीता च तेन काचनाऽज्ञातकुलशीलस्य कन्यका । को जानाति तस्याः पिता ब्राह्मणश्चाण्डालो वेति ? उपेक्षितं तेन विवाहार्थमस्मदनुमतिग्रहणम् । अतिभूमिं गतः खलु तस्याऽहङ्कारो-नातःपरं सोढुं शक्यते । स खलु पापोऽस्मान् ग्राममहत्तरान् नाभिमन्यते ! ! भवतु, अचिरादेवाऽसौ समाजाद्बहिष्कृत्य दण्डनीयः ।

( ततः प्रविशति धूमं पिबंश्चन्द्रचूड़ः । )

---

(१) *Hookah* or Hubble-bubble (२) Tobacco (३) *Chilum*.

दीर्घशिख: ।—( विलोक्य ) अरे मूर्ख ! अग्रजस्य पुरत एव धूमं पिबसि ? नास्ति गोपनमपि ?

चन्द्रचूड़: ।—आर्य्य ! यदि पिबाम्येव तदलं गोपनेन । त्वमपि मानुषः, अहमपि मानुषः । यदि त्वं पिबसि तदा न कथमहं पिबामि ? अपरञ्च, त्वमग्रजः । अग्रजस्यानुकृतिरनुजेन सर्व्वथैव विधेया ।

दीर्घशिख: ।—अलं वाक्पाटवेन । कलेरिदं विलसितं, नास्ति ते दोषः । तद् यथेच्छं पिब ।

चन्द्रचूड़: ।—नहि नहि, गृहाण कलिकाम् । अग्रजस्त्वम् ।

दीर्घशिख: ।—( गृहीत्वा धूमं पिबन् नेपथ्याभिमुखमवलोक्य ) अयं पराशरो गच्छति । भवतु, आहूयाम्येनम् । हंहो पराशरभट्टाचार्य्य ! अये सज्जनपुत्र इत एहि इत एहि ।

नेपथ्ये पराशर: ।—अधुना कार्य्यान्तराय चलितोऽस्मि ।

दीर्घशिख: ।—इतः परं तत् कार्य्यं करणीयम् । शृणु शृणु ।

पराशर: ।—( प्रविश्य ) किं कथयसि ?

दीर्घशिख: ।—का खलु वार्त्ता ते मित्रस्य ?

पराशर: ।—कस्य ?

दीर्घशिख: ।—अये, जयदेवस्येति कथयामि ।

पराशर: ।—का पुनस्तस्य नवीना वार्त्ता भविष्यति ?

दीर्घशिख: ।—तथापि ? काचिदपि ?

पराशर: ।—नाहं जानामि ।

चन्द्रचूड़: ।—भवान् न जानाति !! भवान् किल जयदेवस्य वहिश्चराः प्राणाः ।

दीर्घशिख: ।—अजय-सलिले कदम्बखण्डीघट्टे श्वो गङ्गाया आगमनं भवितेति श्रूयते ?

पराशर: ।—एवं शृणुमः ।

दीर्घशिख: ।—तत् किं सा मकरमारुह्यैवागमिष्यति, उत हस्तिनं तुरङ्गमं वा ?

चन्द्रचूड़: ।—उत कुक्कुटं दर्दुरं वा ?

पराशर: ।—किमित्युद्धतं प्रलपसि ?

दीर्घशिख: ।—मा क्रुद्धो भव, मा क्रुद्धो भव ।

चन्द्रचूड़: ।—यदि क्रुद्ध एवासि, तदा ताम्रकूटधूमेन क्रोधमाच्छादय । एवं कृते ते निःश्रेयसलाभोऽपि भविता । यतः—

एतस्य स्मरणेनैव हुक्कादेव्याः प्रियो भवेत् ।
पानमात्रेण चैतस्य मुच्यते भवबन्धनात् ॥

पराशरः ।—मूर्खोऽसि । ( चन्द्रचूड़ो हसति । )

दीर्घशिखः ।—अलमप्रकृतालापेन । पराशर ! अन्येद्युस्ते मित्रस्य गृहे भगवान् नारायणः समागच्छदिति श्रूयते ?

पराशरः ।—अथ किम् ?

दीर्घशिखः ।—तत् कथयामि,—नारायणः, पद्मावतीकामुकः कश्चन वा ?

पराशरः ।—पाप ! संयमय ते असम्बद्धप्रलापिनीं जिह्वाम् ।

दीर्घशिखः ।—अये पुण्यात्मन् ! एतत्तु पृच्छामि कदा ते मित्रस्य पक्षोद्गमो भवितेति ?

पराशरः ।—कथमिव ?

दीर्घशिखः ।—यथा स उड्डीय लीलयैव वैकुण्ठं गत्वा नारायणस्य पार्श्वचरो भविष्यति । गङ्गा दासीव यस्येच्छामनुवर्त्तते, नारायणोऽपि नर्म्मसचिव इव गूढ़ं समागम्य यस्य पत्नीमालपति, सचेन्न वैकुण्ठं गच्छति, तत् किं मादृशाः पापिनस्तत्र गन्तारः ? भण ते मित्रम्,—यदि स आत्मनो हितं काङ्क्षति, तदागत्य प्रणमतु ग्रामनायकं श्रीदीर्घशिखदेवशर्म्माणम् । अन्यथा तेन महद् दुःखं सहनीयम् । यद्यस्मदाज्ञां न पालयति, तदा समाजाद्बहिष्कृत्य दण्डनीयोऽसौ । दूरे तिष्ठतु मादृशानां कथा, रजको नापितो वाऽपि तस्य गृहे पदं नार्पयिष्यति । धर्म्मध्वजी खलु जयदेवः कृत्रिमं धर्मध्वजमुत्क्षिप्य सर्व्वान् प्रतारयितुमिच्छति ।

पराशरः ।—( उपहसन् ) अहो सुष्ठूक्तं महाशयेन । ग्रामनायकमहोदयस्य वचनजातं वेदवाक्यमिव प्रतिभाति । सत्यं धर्म्मध्वजी किल जयदेवः । तत् कथं भवान् ग्रामनायको भूत्वा कस्यचिदकिञ्चित्करस्य धर्म्मध्वजिनः शासनायात्मनो महीयसीं शक्तिं व्यापारयति ? आज्ञापनीयो भवता मादृशो जनः, येन शासनीयोऽसौ । न खलु सदृशो भवत ईदृशे कर्म्मण्यात्मनो विनियोगः । ( इति क्रुध्यन् ) तद् दीर्घशिखदेवशर्म्मन् ! अवितथमाकर्णय मे वचनम् । त्वादृशान् शृगाल-कुक्कुरसदृशान्,—का कथा जयदेवस्य,—वयमपि तृणायापि न मन्यामहे । भीषयितुमिच्छसि जयदेवम् ? त्वत्तो भयेन तस्य पादाङ्गुल्यग्रमपि न

कम्पितं भविष्यति। क्षुद्रा पक्षिणो वायसस्य ते शासनीयाः न खलु गरुड़ो जयदेवः। तद् यद्यात्मनो हितमभिवाञ्छसि, तदा पादयोः पतित्वा प्रसाद्य जयदेवं विरमास्मादारम्भात्। ( इति निष्क्रान्तः। )

दीर्घशिखः।—यष्टिः यष्टिः। कथं गत एव? चन्द्रचूड़! न पारितस्त्वयाऽसौ प्रहर्त्तुम्?

चन्द्रचूड़ः।—कथं प्रह्रियताम्? दहन इव ज्वलंस्तड़ितो वेगेन निष्क्रान्तोऽसौ कथमासादयितुं शक्यते?

दीर्घशिखः।—भवतु, गच्छतु नाम। एतस्याऽपि शास्तिर्मया चिन्तनीया। ( इति प्रस्थितः। )

चन्द्रचूड़ः।—तत् किं हुक्कां गृहीत्वैव गच्छसि?

दीर्घशिखः।—गृहाण। ( इति दत्वा निष्क्रान्तः। )

चन्द्रचूड़ः।—हुक्के! प्रसीद। चुम्बामि त्वामधुना, भृशं चुम्बामि। देवि! नमामि त्वाम्।

घूर्णद्धूमापिहितनयने! कृष्णवर्णे! सशब्दे!
साग्निश्चाग्रे शिरसि कलिकां मृन्मयीं धारयन्ति!
तैलेनाऽपि प्रतिदिनमहो चिक्कणीभूतकाये!
नृणां चित्ते सततसुखदे! देवि! हुक्के! नमस्ते॥

( इति धूमं पिबन् निष्क्रान्तः। )

---

चतुर्थं दृश्यम्—अजयतटम्।

( जयदेवः, पद्मावती, पराशरः, ग्रामवासिनो नरा नार्यश्च। )

( गीतम्। )

पुरुषाः।—एहि पतितजनपापनिवारिणि!
चञ्चलपुण्यतरङ्गे!
एहि समुच्छल-जलकलनादिनि!
पतितोद्धारिणि! गङ्गे!

स्त्रियः।—शम्भुजटानटमञ्च-विहारिणि!
एहि सुरेश्वरि! धन्ये!
सगरतनयगणमुक्तिविधायिनि!
मुनिवन्दितमुनिकन्ये!

पुरुषाः ।—वीचिविनर्त्तनतोषितकूले !
देवि ! निखिलजनवन्द्ये !
प्लावितहिमगिरितटतरुमूले !
अयि ! जगतामभिनन्द्ये !

स्त्रियः ।—कृतगुरुपापास्तवजलपूता-
अमरालयमयि याताः ।
जननि ! कृपामयि ! तारय चास्मान्
त्वं हि सकलजनमाता ॥

सर्व्वे ।—प्रणमितशिरसस्तव पदयुग्मे-
वयमिह मातर्गङ्गे !
वितर कृपामयि शङ्करदयिते !
एहि चलज्जलभङ्गे !

---

( ततः प्रविशति चन्द्रचूड़द्वितीयो दण्डहस्तो दीर्घशिखः । )

दीर्घशिखः ।—इहानीताः सर्व्वे ग्रामवासिनस्तेन धर्म्मध्वजिना । इहैव लगुडेनाहत्य ग्रामाद्बहिष्करणीयोऽसौ । चन्द्रचूड़ ! सज्जो भव ।

चन्द्रचूड़ः ।—( परिकरं बध्नन् ) आर्य्य ! सज्ज एवाऽस्मि ।

दीर्घशिखः ।—( जयदेवमुपगम्य ) अये पण्डितदिग्गज ! क्वाऽसौ गङ्गा ?

जयदेवः ।—इयमागमिष्यति ।

कश्चिद् ग्रामवासी ।—अये, परावर्त्ततेऽजयस्रोतः ।

द्वितीयो ग्रामवासी ।—न केवलं स्रोतः परावर्त्तते, विपरीतं वहत्यजयः ।

तृतीयो ग्रामवासी ।—भवतु, पुष्पं निक्षिपामि । ( इति तथा कृत्वा ) कथं, विपरीतस्रोतसा समुह्यते पुष्पम् ! ! जयदेव ! धन्यो भवान्, धन्या वयम् ।

जयदेवः ।—( अञ्जलिं बद्ध्वा ) विश्वेश्वरस्य वनिते ! परमार्थदात्रि !
मातस्तवास्ति मयि चेत् करुणालवोऽपि,—
तद्दर्शयाशु कृपया चरणानतेभ्यः
प्रोत्फुल्लपङ्कजनिभं भवदग्रहस्तम् ॥

कश्चिद् ग्रामवासी ।—कथं, कुतश्चित् कुसुमानि समागम्य चञ्चलेऽपि स्रोतसि स्थिरतां गच्छन्ति ! !

पराशरः ।—अयमुत्थितः कुसुमराशिं विभिद्य समणिकङ्कणो मातुरग्रहस्तः !!!

सर्व्वे ।—आश्चर्य्यमाश्चर्य्यम् ! पूतं नरजन्म, सार्थकं नयनम् !

दीर्घशिखः ।—अरे, किमुत्स्वप्नायध्वे ? क्वासावग्रहस्तः ?

कश्चिद् ग्रामवासी ।—अरे, न पश्यसि तत् किमन्धोऽसि ?

चन्द्रचूड़ः ।—यूयमन्धाः । पुष्पराशिरेव दृश्यते नास्ति हस्तस्य गन्धोऽपि ।

कश्चित् ।—( ससन्देहं ) तथैव वा भवेत् । न खलु स्पष्टतया दृश्यते ।

दीर्घशिखः ।—अरे, नीचाशय ! गर्व्वान्ध ! क्व ते गङ्गा ?

चन्द्रचूड़ः ।—गङ्गा किं कस्याऽपि दासी भवति ?

( ततो मकरमारुह्य स्रोतस्याविर्भवति गङ्गा । )

गङ्गा ।—विश्वासो यस्य चित्ते भवति सुविमलः संशयाक्रान्तिहीनः
पापं दासीव तस्यानिशमपनयति ब्रह्मणाप्यर्च्चितैषा ।
धन्याः पुण्या नरेन्द्रा विगलितवपुषः कुष्ठिनो भिक्षुकाश्च
स्नेहं सर्व्वे ममैते कृतगुरुदुरिताश्चापि तुल्यं लभन्ते ॥

( इति स्रोतसि तिरोहिता । )

दीर्घशिख-चन्द्रचूड़ौ विना सर्व्वे । जयदेव ! जयदेव ! वत्स ! नाथ ! सखे ! गुरो ! प्रिय ! तवैव पुण्येन सफलं नो जीवनम् ।

( इति केचन जयदेवमालिङ्गन्त्यपरे तं प्रणमन्ति । )

जयदेवः ।—अलं चरणस्पर्शेन । पुण्यात्मानो यूयम् । कोऽहम् ?

कश्चित् ।—अनिर्व्वचनीयः कोऽपि ।

जयदेवः ।—मात्रे प्रणामो न कृतो युस्माभिः ?

कश्चित् ।—अलं मातरं प्रणम्य । अधुना त्वामेव प्रणमामः । त्वमेवास्माकं माता पिता च ।

जयदेवः ।—नहि नहि । प्रणामः करणीयः । प्रणमत मातरम् ।

सर्व्वे ।—तथास्तु । ( इति पठन्ति । )

विष्णुपादोद्भवे ! देवि ! पापविध्वंसकारिणि !
नमस्ते वरदे ! मातर्गङ्गे ! त्रिपथगामिनि !
उद्धरस्व जगन्मातः ! सर्व्वानस्माननुग्रहात् ।
मादृशानां गतिस्त्वं हि भागीरथि ! नमोऽस्तुते ॥

जयदेवः ।—एत, स्नानं निर्व्वर्त्तयामः ।

( इति दीर्घशिख-चन्द्रचूड़ौ विना सर्व्वे निष्क्रान्ताः । )

दीर्घशिखः ।—( कियच्चिरं दण्डमवलम्ब्य सचिन्तं तिष्ठन् ) इयं गंगा यस्या नामोच्चारणतोऽपि मुच्यन्ते महापापा अपि । तत् किं विष्णुपादोद्भवा हरशिरो निवासिनी सुरधुनी सत्यमेव मे नयनविषयतां गता ? उत स्वप्नो माया वा ? नहि नहि, सर्व्वे एव तां तथैव विलोकितवन्तः, न केवलमहमेक एव । को नामाऽयं जयदेवो—यदिच्छामनुवर्त्तमाना गङ्गाऽपि माहशानपि दयते ? तत् किं मया देवे दानवबुद्धिः कृता, सुधासागरे मरीचिकाच्छाया विलोकिता ? को नामाद्य मन्त्रौषधिनेवाऽवनमयति मे समुन्नतं शिरः ? गच्छ दण्ड ! नातः परमस्ति मे त्वया प्रयोजनम् । ( इति दण्डं जले निक्षिपति । ) स्रोतसा समुह्यमान उपसर सागरम् । त्वया सह मे जयदेव-विद्वेषोऽपि सागरे निलीयताम् । चन्द्रचूड ! चन्द्रचूड ! विद्वेष-तमसापिहितनयनो भ्रमे पतित्वा महत्पापमकरवम् । तदद्य प्रायश्चित्तं चरिष्यामि ।

चन्द्रचूडः ।—आर्य्य ! अहमपि तथा करिष्यामि ।

दीर्घशिखः ।—सुष्ठु खलु पराशरो मामुपादिशत् पादयोः पतित्वा जयदेवं प्रसादयेति । तदा नोपलब्धं मया तत्त्वम् । तदेहि पादयोरेव पतित्वा तं प्रसाद्य क्षमां याचावहै । तदेव प्रायश्चित्तमेतत्-पापस्य । देवः खलु जयदेवो मनुष्यमूर्त्या धरातलमवतीर्णः । सोऽपि मया तुच्छातितुच्छ इवावधीरितः । हा भगवन् ! का दशा मे भविष्यति ?

( इति सनिर्व्वेदं निष्क्रान्तः । )

---

पञ्चमम् दृश्यम्—वह्निना दह्यमानं दीर्घशिख-भवनम् ।

( ततः प्रविशति विलपन्ती दीर्घशिखपत्नी कात्यायनी । )

कात्यायनी ।—हा कथमेतज्जातम् ? केन खलु पापेन दहनो मे गृहचूडायां युगान्तलीलां कर्त्तुं प्रवृत्तः ? आर्य्यपुत्रः कुत्रापि गतः । किमहमेकाकिनी करोमि ? को वा मे साहायकं कुर्य्यात् ? कथं वह्निसखो वायुरपि !! भवतु, मुञ्चामि गाः । अन्यथा रज्जुबद्धा एव ता वह्नेर्दाह्यतां गमिष्यन्ति । ( इति निष्क्रान्ता । )

( ततः प्रविशन्ति केचन ग्रामवासिनः । )

# SAMSKRITA BHARATI SUPPLEMENT,

OR

# A quarterly English Magazine

OF

## LITERATURE, SCIENCE AND ARTS.

The Editors will in no way be responsible for the views and opinions of the contributors.

Place of Printing—Benares.

Publisher—Manager of the 'Mahamandal Press.'

---



Office—Burdwan, Bengal.

Annual subscription (inclusive of postage) in advance for

Samskrita Bharati Supplement ... Re. 1—8 As.

Do. Do. Do. for

Samskrita Bharati ... Rs. 3—8 As.

Do. Do. Do. Do. for

both the parts ... Rs. 5.

---

## MOTTOS.

(RENDERED FROM SANSKRIT.)

Even a Chandala, if he is a devotee of Hari (God), is superior to a man of the twice-born caste (Brahmin); and even a man of the twice-born caste, (Brahmin), if he is destitute of devotion to Hari (God), is inferior to a Chandala —Mahanirvantantram.

This (man) is our relative, that (man) is an alien—this is the calculation of the mean-minded; the noble-minded, on the contrary, look upon the whole world as their kith and kin.—Hitopadesa.

A hero in deed leads those who are skilled (only) in speech-craft. The heroes in speech serve the energetic and persevering to their delight.—Mahabharatam, Santiparvan.

Having shaken off sorrow practise fortitude now. Let there be firmness and courage in tracing her (Sita's) whereabouts. Resolute men do not waver even in very difficult tasks in this world.—Ramayanam, Aranyakandam.

Dear to me (i. e. God) is the man who looks upon praise and dispraise in the same light, who is taciturn, who is satisfied with whatever he gets, who (as a recluse) has no fixed abode, who is of a firm disposition, and who has pious faith—Bhagavadgita, chapter XII.

A person can be reckoned great amongst us, neither by years nor by gray hair, neither by wealth nor by friends and relations, but by adeptness in Vedic lore—such was the injunction of the sages—Manusamhita, Chapter II.

Even a boy-king must not be slighted as a man; for, he is a great Divinity in the form of a human being.—Manusamhita, Chapter VII.

## RULES.

(a) Persons desirous of subscribing to this journal should write clearly their names and addresses to the Manager. *All remittances are to be made to him at Burdwan, Bengal.*

(b) Rules as to the publication of advertisements in this journal are to be ascertained from the Manager.

(c) Articles on various subjects excepting religion and modern politics, will be published in this journal. Articles containing reflections on individuals, sects, castes, tribes, communities, creeds, and religious beliefs, will be rejected.

(d) All articles, books and journals etc, are to be forwarded to *Babu Uma Charan Banerjee, M, A, Burdwan Bengal,*

(e) There will be no acknowledgment of receipt of rejected contributions. They will be returned if the writers want them back, on giving necessary postal stamps.

(f) Writers of articles and commentators should take special care to see that the language of the articles and commentaries *be especially easy and lucid.*

(g) Results of research concerning the antiquities of India, carried on by well-qualified European and Indian scholars, will be embodied.

(h) Fables, stories, tales, anecdotes, short poems, biographical notices, news etc, will be published.

(i) Good English translation of famous Sanskrit, Pali, Bengali, Hindi works etc., or portions thereof, will occasionally be published.

(j) Gentlemen seeking answers to letters are requested to enclose necessary postal stamps.

## PATRONS AND THE ADVISORY BOARD.

## ADVISORY BOARD AND CONTRIBUTORS.

1. Mahamahopadhyaya Srijut Haraprasad Sastri, M. A., C. I. E.,
Formerly Principal, Sanskrit College, Calcutta.

2. Mr. Byomkesh Chakrabarti, M. A.,
Barrister-at-law, Calcutta.

3. Mr. Chittaranjan Das, Barrister-at-law, Calcutta.

4. Rai Bahadur Joges Chandra Ray Vidyanidhi, M. A., F. R. A. S.
Ex-Professor, Ravenshaw College, Cuttack.

5. Srijut Ramnarayan Dutt, B. A., formerly Principal,
Burdwan Raj College.

6. Professor J. N. Das Gupta, M. A., Bar-at-law, Presidency College
Calcutta.

7. Professor D. N. Mullik, M. A. D.-Sc., Do. Calcutta.

8. Srijut Sarada Ranjan Roy, Vidyavinod, M. A.,
Principal, Vidyasagar College, Calcutta.

9. Professor Lalitkumar Banerjee, Vidyaratna, M. A.,
Bangabasi College, Calcutta.

10. " Tulshi Das Kar, M. A., Medical College, Calcutta.

11. " Satyendra Nath Bhadra, M. A., Dacca,

12. Principal Sj. M. R. Roy S. K. Yegnarayan Aiyar Avl. M. A. Selam College, Madras, etc., etc.

13. Sj. P. P. Subrahmanya Sastri, B. A. (Oxon), M. A. (Madras), Superintendent, Samskrit schools Colleges, Madras,

---

## AN APPEAL,

TO THE EDUCATED AND ENLIGHTENED PUBLIC IN INDIA,

(A PAMPHLET)

FOR THE COMPILATION OF A SANSKRIT LEXICON, ON A THOROUGHLY NEW AND UP-TO-DATE PLAN. PART I (DISTRIBUTED *gratis* ON APPLICATION FROM PROPER PERSONS).

BY

UMACHARANA BANDYOPADHYAYA, M. A., (CAL.)

BURDWAN, BENGAL, INDIA.

II PRABANDHA-PRASUNAM,

(A Samskrit Text book approved by the Govt of Bengal, for use in the High Schools)

PART I,

BY UMACHARANA BANDYOPADHYAYA, M. A.,

PRICE FOUR ANNAS.

To be had of.—

MESSRS. BHATTACHARYA & SONS.,

BOOK-SELLERS, PUBLISHERS &C.,

*65, College Street, Calcutta.*

BURDWAN, BENGAL.

*Dated the*........................1920.

DEAR SIR,

With a view to popularising the study of the Sanskrit Literature, especially its vedic, Philosophic and pouranic Branches the splendid monuments of Hindu glory—we have started a Quarterly Sanskrit Magazine with an English Supplement. By god's grace and with the help and co-operation of several educated gentlemen we were able to start the paper, on the 3rd year of its existence, in January, 1920. We have not yet met with a hearty response to our appeal. But the response though feeble, is steadily gaining in strength, and we are determined not to lose heart; we hope that the nobleness of the cause will soon draw our learned countrymen to our ranks, and that they will put forth their best efforts to make this novel venture a success. This idea leads us confidently to expect that you will actively afford us material help and co-operation :— Literary contributions esp. rare manuscripts, learned philosopoc disquisitions, work of research in various fields, interesting biographhical notices short stories etc :, whether in English or Sanskrit would be particularly welcome from learned scholars. Practical encouragement in various ways is solicited of the well-to-do members of the Indian Aristocracy and Gentry who take special interest in the advancement of Sanskrit learning.

If pecuniary help be forth-coming, we are ready to distribute *gratis* 1,000 copies of Sanskrit Bharati and another thousand of the English Supplement amongst the poorer tols, High Schools, Public Libraries etc., all over India.

Yours very truly,
Kamal Krishna Bose, M.A., B.L.,
Prafulla Charan Banerji, B.A.,
Surendra Mohan Kavya-Vyakaran-Puran-Tirtha.

Wanted for the "Samskrita Bharati" office an assistant clerk on Rs. 25/- a month. The applicant should be a passed I. A. or one who has read up to I. A. Good handwriting is essential. The selected candidate will have time for private tuition. Apply immediately to

MANAGER, SAMSKRITA BHARATI,
Burdwan, Bengal.

Bound Volumes for 1918 and 1919 may be had at the following rates. (inclusive of postage)

SAMSKRITA BHARATI

| | | | | |
|---|---|---|---|---|
| With the English supplement | Rs. | 5 | as. | 6 |
| Samskrita Bharati | Rs. | 3 | as. | 12 |
| Samskrita Bharati supplement | Re. | 1 | as. | 10 |

Special improvements in this Magazine for the year 1920 will, God willing, be :—

(a) Studies in Ancient Biography of India.
(b) Articles involving work of research, investigation in Indian History, Economics &c.,
(c) Disquisitions on Vedanta and other systems of Indian philosophy.

Prafulla Charan Banerjee.
*Manager*
SAMSKRITA BHARATI OFFICE.

# SAMSKRITA BHARATI SUPPLEMENT.

Vol. 3. April-June 1920. No. 2.


## THE POSITION OF THE NON-ARYANS IN THE AGE OF THE RAMAYANAM.

(Continued from page 12.)

Our last reason for holding that the Vanaras were men—a reason which will silence all opposition—is based upon the application of the term नर (or man) itself to the Vanaras, here and there. In the closing lines of Aranya Kandam, the third book of the Ramayanam, Rama tells Lakshman

सुग्रीवमभिगच्छ त्वं वानरेन्द्रं नरर्षभम् ।

Do thou approach the Vanara-King Shugriba, *the best of men.*

In Chapter 18 of Kiskindhya Kandam, Rama, being rebuked by Vali for his having mortally wounded the latter from behind his back, tells him that he is rightly killed in as much as he has violated his younger brother's wife.

औरसीं भगिनीं वापि भार्य्यां वाप्यनुजस्य यः ।
प्रचरेत नरः कामात्तस्य दण्डो वधः स्मृतः ॥

According to Shastras, death is the punishment of *the man*, who, led by passion, ravishes his own daughter, sister or his younger brother's wife.

This can only be spoken to one who is a नर or man.

Again, in the same chapter, we find Rama addressing Vali in the following words:—

राजभिर्धृतदण्डाश्च कृत्वा पापानि मानवाः ।
निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥

Those *men* who commit sins and patiently bear the punishment that is inflicted by their Kings, go to heaven, being purified, like unto the virtuous.

This, too, implies that Vali was a मानव or human being.

Again, in Chapter 33—, Tara, trying to appease the anger of Lakshman at the conduct of Shugriba, tells him that Shugriba is overpowered by

sensual desires and so unable to judge aright of virtue and the proper time for undertakings.

न देशकालौ हि यथार्थधर्मौ अवेक्षते कामरतिर्मनुष्यः ।

The man, who delights in sensual enjoyment, does not wait for place or time or wealth or virtue.

This can only be spoken of a मनुष्य or man and necessarily implies that Shugriba was a मनुष्य or man.

Rama, trying to console Tara, Angada and others who are weeping over the death of Vali, tells them that by shedding tears for Vali's demise they have done what is customary for *men* to do in such circumstances and that they should now give their attention to the proper cremation of the dead body.

लोकवृत्तमनुष्ठेयं कृतं वो बाष्पमोक्षणम् ।

By shedding tears you have done what is the practice of *men* and should be done (by all).

The use of the words लोकवृत्तम् shows that the persons referred to are men.

Shugriba, sending out his men in different directions in search of Sita, reminds them of their prowess and noble parentage and urges them to put forth their (manly) power to the utmost.

अमितबलपराक्रमा भवन्तो विपुलगुणेषु कुलेषु च प्रसूताः ।
मनुजपतिसुतां यथा लभध्वं तदधिगुणं पुरुषार्थमारभध्वम् ॥

Possessed of unmeasured strength and prowess and sprung from families adorned with many and various attributes as you are, do you put forth your powers (lit. power of a man) in such a way as to be able to recover the King's daughter.

Again in Kiskindhya Kandam the Vanaras are described as the descendants of the Devas and Gandharvas,

देवगन्धर्वपुत्रैश्च वानरैः कामरूपिभिः ।
दिव्यमाल्याम्बरधरैः शोभितां प्रियदर्शनैः ॥

Adorned with the Vanaras, who are the sons of the Devas and the Gandharvas, who can assume various shapes at will, who wear celestial garlands and clothes and who are graceful to look at.

हरयो देवगन्धर्वैरुत्पन्नाः कामरूपिणः ।

Vanaras born of *devas* and *Gandharvas* and able to assume shapes at will.

In another place Maricha is called son of a महर्षि or a great sage and the Vanaras under him sons of *rishis* or sages.

मरीचिपुत्रान् मारीचानर्च्चिर्मल्यान् महाबलान् ।
ऋषिपुत्रांश्च तान् सर्व्वान् प्रतीचीमादिशद्दिशम् ॥

The sons of Marichi, the Marichas, the powerful Archirmalyas—all these sons of *rishis* he bade march towards the West.

Again, Shugriba is the son of the Sun-god भास्करात्मजः. Vali is the son of no other than Indra, the King of the Heavens, शक्रपुत्रः and Hanumat is the Manasha son of the Wind-god by Anjana, who is no other than the celestial nymph, Punjikasthala, turned into a Vanara-woman through the curse of a rishi.

Now we know that the rishis were men, or perhaps we should say, supermen. As regards the Devas and the Gandharvas, we have every reason to believe that they were hill-tribes, for throughout the Ramayanam they are described as living on hills and mountains and as contemplating from their lofty position all that happened below. The quotations given in Appendix A, will furnish a satisfactory proof of this statement. Surely they were not beasts.

From all this follows the inevitable conclusion that the Vanaras are men. But they are men whose abode is the forest, for throughout the Ramayanam they are described as वनवासी or dwelling in the forest. The etymology of two of their names also, Viz, वनौकस् & वानर point that way. We give some quotations here in support of our proposition.

सन्निधायायुधं क्षिप्रमृष्यमूकालयं कपिम् ।
कुरु राघव सत्येन वयस्यं वनचारिणम् ॥

Placing your arms (before the fire), soon make friends, by means of a solemn vow, with that forest-ranger, the Vanara, who has made Rishyamuka his abode.

हरीणामीश्वरो वाली सर्व्वेषां वनचारिणाम् ।

Vali, the lord of all the Vanaras, dwelling in forests.

किं भवन्तः समस्ताश्च मतंगवनवासिनः ।

Why are you all, the denizens of the Matanga forest, (come to me) ?

विसार्य्य सर्व्वतो दृष्टिं कानने काननप्रियः ।
सुग्रीवो विपुलग्रीवः क्रोधमाहारयद्भृशम् ॥

Casting his eyes all around in the forest, the forest-loving Shugriba, possessed of a mighty neck, conceived great anger.

फलमूलाशनं नित्यं वानरं वनगोचरम् ।

वयं वनचरा राम मृगा मूलफलाशिनः ।

तत्र कस्ते वने लोभो मदीयेषु फलेषु वा ।

हरिभिर्म्मेघनिर्ह्रादैरन्यैश्च वनवासिभिः ।

With other Vanaras whose voices resembled (the roaring of) clouds and who dwelt in forests.

अब्रवीद्वानरान् कान्तारवनकोविदः ।

Hanumat't horoughly acquainted with woods and forests, spoke to the terrific *Vanaras.*

Hence we conclude that the Vanaras are a non-Aryan forest-tribe, as Lakshman, in a fit of anger, tells Shugriba अनार्य्यस्त्वं "You are a non-Aryan" and hence is it that you are utterly unmindful of your duty towards Rama who has rid you of your enemy and placed you upon the throne of Kiskindhya. Their name वानर may imply simply that they were dwellers in the forest; or it may refer to the fact that they lived on roots and fruits of forest trees or, what is more plausible, the name may have been given to them by the Aryans out of contempt for their inferior civilisation and rude habits and ways of life, वानर meaning "or men" i. e. slightly inferior to men or the Aryans".

---

## THE PHILOLOGICAL ARGUMENT FOR UPPER LIMIT TO THE DATE OF RIGVEDA.

This paper does not pretend to fix the date of the Rigveda. Need of resisting bias towards an earlier date simply because it is more remote or towards a later date simply because it is nearer dated events.

Statement of the Argument. Comparison of Avestan with Vedic Language proves that Aryans could not have entered Punjab long before 1300 B. C., and therefore no vedic hymn is much older than 1300 B. C. Moreover granted that the Brahmanas begin about 800 B.C. four centuries suffice for the Maitra Period, therefore any thing older than 1300 B. C., is highly improbable. The latter part of the argument only gives the lower limit for the beginning of the Rigveda. The upper limit is in question. Difficulties : Comparison argument initiated to prove " extreme age " of Gathas ; adapted to disprove " extreme antiquity of Mantras ; possibility that the resemblance has been exaggerated. Absence of definite starting-points on either side. Why not compare inscriptions of Darius with those of Asoka,

Granted that all languages change, do they change at a uniform rate, or can one strike an average for six or seven centuries ?

Parallels suggested : Greek from Homer to Plato. "Homer " is an indefinite date; the dialect factor is obvious; the conditions very different; the changes in literary Greek down to the newspaper of today less rapid. Europeanising of America and Aryanising of India. Difference of conditions suggests this comparison is irrelevant, especially as the latter process is less complete than the former.

Other Parallels: The records of Egypt, language of Sargon and Nebu Chad-nezzar, Chinese literature.

Objection : stability of script or written language not of pronunciation or folk-language but possibility of oral tradition and poetic dialect for both Mantras and gathas.

Parallel of Roman languages ? Convenient because there are more dated documents and history known from other sources.

An experiment: from a comparison of the Spanish and Italian versions of the Psalms to determine when the Romans colonised Spain. Difficulties: (a) Relative value to be assigned to changes (i) phonetic (ii) grammatical structure due to (a) phonetic change (b) new methods (iii) vocabulary.

A tentative compromise : (b) given a ratio of resemblance in this form how can it be applied to Chronology which affected Spanish most, the original contact with Iberians, the invasion of Visigoths with Arabic-speaking Moors ?

If for the first five centuries of the Roman occupation the language of the Colonists remained essentially Latin, then a calculation based on the assumption of a definite cleavage starting from the first invasion of Spain will be several centuries wrong.

(One reason for this slow differentiation was continued contact with Rome).

Application of this experiment to Avesta and Veda. In absence of information as to actual cleavage of Aryans, there is the possibility of contact and of parallel development for several centuries, which philology can not disprove.

Conclusions : I. Any attempt to fix chronological limits on the basis of comparing languages should be based on a more exact numerical comparison than has been attempted hitherto. This opens up a new line of research.

2, It is necessary to realise that while history known from other

sources can be traced in the history of language, it is much more precarious to reconstruct history on a basis of comparative philology. In particular it seems that 2,000 B. C. remains quite as possible as 1,200 B. C. for the earliest mantra in the Rigveda.—

If 2,000 why not 3,000 or even 4,000 B. C. No direct philological proof, but if exact comparison shows this means assuming a degree of stability twice as great as that recorded any where else in the world, philologists may reasonably demand strong confirmation from Archaeology, and if it means a degree of stability in folk-speech say ten times as great as any thing found elsewhere, the philologists will not be able to regard such a date as even faintly probable.

Doubtful however, whether any one would now propose so remote a date as 4,000 B. C. for the actual text of any hymn, or for the Aryan settlements in the Punjab. The date of the Vedic Deities and of many elements of vedic culture and belief is a different matter ; some strands in the web are admitted to be Indo-Iranian, and even Indo-European.

---

## PRESIDENTIAL ADDRESS AT THE BENGAL SOCIAL CONFERENCE.

(Continued from page 30)

Manu by referring the prohibition to a different *yuga* is fictitious. In fact, in the age of the Dharmasamhitas and the Purans both the *anuloma* and the *pratiloma* forms of marriage were practised, though the latter was held in disrepute.

As we have already said, in this period of the history of caste development á son born of a woman of the same caste obtained the caste of the father. Children born of a woman of inferior caste obtained the caste of the mother. While children born of a woman of superior caste were regarded as crosses (वर्णसङ्कर). Thus sons begotten by a Brahmin in women of the three inferior castes were of three separate kinds; those begotten by a Kshatriya in women of the two inferior castes were of two different kinds, while those generated by a Vaisya in a woman of the lower caste were of one kind. Though these seven kinds of children had distinct caste apellations, *viz, murdhwavasikta, amvwastha, nisadı, etc.*, still they belonged to their mother's caste and were not regarded as crosses. From the *pratiloma* form of marriage three kinds of crosses arose, *viz.* intercaste crosses, inter-cross crosses and crosses between these two again. In this way according to the Sutras and Dharmasamhitas the fourfold caste system of the Vedic age multiplied into innumerable mixed castes (Gautama IV, Vashistha XVIII and Baudhayana I, 16. 17).

In this period change of caste from lower to higher, and from higher to lower was allowed. If girls of a lower caste were married to persons of a higher caste for some successive generations their children belonged to the superior caste. In this way the descendant of a sudra woman would become a Brahmin in the seventh generation Again a man of a higher caste adopting the occupation of a lower caste for successive generations was degraded to a lower caste. Thus the son of a Brahmin pursuing the occupation of a Sudra became a Sudra in the seventh generation.

It is also seen that down to the commencement of the Mahammadan invasion the son of a Brahmin marrying a Sudra woman by the *anuloma* form of marriage was regarded as an *ourasa* son and inherited property. By the end of the 11th century Bijnaneswara thus writes in the Mitakshara. "It should be understood that the *murdhavasikta* and other sons born of a Kshatriaya woman married by a Brahmin in the *anuloma* form, being regarded as an *ourasa* son, Ksnetraja and other sons shall inherit property only in default of the former. A son, however, born of a Sudra woman by the *anuloma* form of marriage, though *ourasa*, shall not inherit the whole property even in default of other sons" This right of inheritance by a son born of a sudra woman marrying a Brahmin is also supported by Jimutavahana in the Dayabhaga in the following terms: "If a Brahmin has an only Sudra son he is entitled merely to the third part of the property.'[8]

### 3. *The third stage in the development of the caste system: strict endogamy; castes break up into an infinite multiplicity of watertight subcastes.*

In the Brihannaradiya and the Aditya Purana quoted by Hemadri in the Chaturvarga Chintamani and by Madhava in the Parashara Bhasya we find intercaste marriage has been totally forbidden in the Kali yuga,

समुद्र यात्रास्वीकारः कमण्डलुविधारणम् ।
द्विजानामसवर्णासु अन्यासूपयमस्तथा ॥

*　*　*　*　*

इमान् धर्म्मान् कलियुगे वर्ज्यानाहुर्मनीषिणः ।

(Vrihannaradiya).

कन्यानामसवर्णानां विवाहश्च द्विजातिभिः ॥

*　*　*　*　*

शूद्रेषु दासगोपालकुलमित्रार्द्धसीरिणाम् ।
भोज्यान्नता गृहस्थस्य तीर्थसेवातिदूरतः ॥

एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः ।
निवर्त्तितानि कर्म्माणि व्यवस्थापूर्वकं बुधैः ॥

(Aditya Purana).

Hemadri and Raghunandana condemned intercaste marriage in the Kali yuga on the authority of these texts. We find, however, that there is sufficient evidence to believe that the intercaste marriage was practised in the Hindu Society in the beginning of the Kaliyuga down to the 11th century. The restriction of intercaste marriage is of a very recent origin, dating only from the latter part of the 11th century.

Parashara who is regarded as the special authority for the Kaliyuga (Parashara Samhita 1, 14) does not prohibit intercaste marriage, and as the *anuloma* form of it is permitted in the Grihya Sutras and in the Dharma Samhitas we have no reason to believe that it is prohibited in the Kali age according to Parashara. On the contrary, Parashara enjoins that *dasa, napita, gopala* and *ardhika* castes sprung from the intermarriage of a Brahman with a Sudra, Vaishya or Kshatriya woman are sufficiently pure, and a Brahmin may accept cooked meal at their house: (भोज्यो विप्रेर्न संशयः Parashara Samhita XI, 22-24). We also note Parashara himself in the Kali age begot Vyasa in a maid of an inferior caste, Satyabati. The Mauryya Vansha also sprang in the Kali yuga from Mura, a Sudra queen of Nanda. The picture of the Hindu Society presented in the Mrichhakatika, a play belonging to the 5th or 6th century A. D. shows that the caste restrictions in marriage were then still very elastic. Both Charudatta and Sharvalika married women of the courtesan class who were outcastes. In the Karpuramanjary of Rajashekhara who was a yayavara Brahman and was Guru to Mahendra Pala, King of Kanouj, writing as late as the 10th century, boasts of having married the daughter of a Chauhan Rajput family. These instances serve to show that intercaste marriage was practised in the Hindu society as late as the 10th century. And so the assertion of the Aditya Purana, that intercaste marriage, seavoyage, dining at the house of, and taking the food cooked by a Dasa, a Napit, &c., were forbidden is a pure fiction, is contradicted by Sruti and Smriti, and has, therefore no authority. It is expressly laid down in the Vyasa Samhita:—

श्रुतिस्मृतिपुराणानां विरोधो यत्र दृश्यते ।
तत्र श्रौतं प्रमाणं स्यात्, तयोर्द्वैधे स्मृतिर्वरा ॥

'In case of a contradiction between Sruti, Smriti, and the Puranas, Sruti is to be accepted as authority: and in case of a contradiction between the latter two, Smriti is to be preferred.

It must be noted in particular that the Aditya Purana is not recognised as a Purana even ; it is only an upa-Purana. Hence in case of a contradiction between the Smriti and the Upa-Purana, there is no doubt that the authority of the Upa-Purana must be rejected. The followers of Madhava, Hemadri and Raghunandana, argue that in the Sutras and Samhitas of Manu and others, intercaste marriage is permitted only generally. In the Aditya Purana it is specially prohibited for the Kali age. Thus there is no contradiction here between the Smriti and the Purana. The injunction of Smriti, we must understand, apply only to Yugas other than Kali. This interpretation is unjustifiable. Parashara Vyasa, and other Risis, who are the authors of the sacred laws, themselves begot children in women of inferior castes in this very Kali-yuga. According to the Skanda Purana and the Vishnu Purana, the 15th or the 16th century of the Kali Era is the age of Judhisthira. Vyasa, the grandfather of Judhisthira, and Parashara, his great grandfather were, therefore, men of Kaliyuga. That these Risis devoted to the practice of penance should do an act prohibited in the Kali age and that they should enjoin others to observe the laws which they themselves violated, is, indeed, a fanciful interpretation ! Vijnaneswar and Jimutavahana did certainly write their legal compendia providing inheritance to father's property by a son of a Brahman born of a Sudra wife for the people of Kaliyuga and not of the Satya yuga. Thus that all these writers did not intend to permit intercaste marriage in the Kali yuga is a distorted interpretation of the Shastras. It is also clear from this that the plea that the present Hindu Society is guided by the regulations of Sruti and Smriti is false. The present Hindu Society is the slave of custom. When this custom is inconsistent with the Sruti and Smriti, the recent authors of the upa-Puranas invent new text to support it. The writers of the legal compendia support these recent customs, and to show that they are not inconsistent with Sruti and Smriti have recourse to ingenious, fictitious methods of interpretation, limiting the meaning of the extant Sruti and Smriti texts, and assuming the existence of unseen texts (अदृष्टश्रुति) supporting the prevalent customs. If we abandon such tricks it will seem that intercaste marriage enjoined in the Sruti and Smriti texts is consistent with the Shastras even if performed in this Kali age.

Now we have seen that the assertion of the Aditya Purana that intercaste marriage was prohibited in the Kaliyuga, is a pure fancy of the Pouranic. The author of the Purana also understood that the customs condemned by him were not inconsistent with Sruti and Smriti. Hence he has resorted to the plea that the resolution (समय) of the upright (साधु) is authoritative like the Vedas. Raghunandana commenting on the passage writes

समय is सम्वित् or resolution' (Udvahatatwa, 14). The author of the Purana states "that the learned abolished these customs by issuing a rule, and the resolution of the upright is authoritative like the Veda." From this it is clear that after the Mahammadan invasion, apprehending a social revolution the Pandits passed a resolution to abolish certain time-honoured, liberal customs. Lest their resolution be not accepted in society they tried to convince others that their resolution was as authoritative as the Vedas. Kashirama Vachaspati, commenting on Raghunandana's Udvahatatwa writes, "ननु एतेषां कर्म्मणां कलौ निषेधको वेदो नास्ति । कथमेतानि कलौ निषिद्धानि । तत्राह समयश्चेति । "Now there is no Vedic text prohibiting these acts in the Kali yuga. How they can be, then, said to be prohibited in the Kali-yuga. To this he replies, and समय etc.' "

We have seen how Hindu society in abandoning intercaste marriage, widow marriage, seavoyage etc., is not following Sruti and Smriti, but is blindly following recent local customs, though they are inconsistent with Sruti and Smriti and are injurious to society. In consequence of this the four castes are now split up into innumerable sub-castes among which intermarriage, interdining and all sorts of social intercourse have been abolished though it is not so enjoined in the Shastras. Even here our social disintegration has not stopped. In every village, in every neighbourhood we find this process of social disruption at work. Parties are excommunicating and interdicting all social communications with one another. In this way the unity of our social life has been shattered.

In the Vedic age and in the age of the Sutras and the Dharma Samhitas, we have seen that caste distinctions were based not only upon racial differences, but also on differences of occupation. For this reason they were not injurious to the society but in many respects helped its progress. Among the lower castes, even now, caste distinctions are based upon differences of race and occupation. Hence the caste system has still some vitality in the lower strata of our society and may persist until the condition of the depressed classes is improved by education. But among the higher classes it is no longer based on distinctions of occupation or race. The blending of races in the Vedic age has abolished all ethnological grounds for preserving caste distinctions among the upper classes. Among them they now rest upon a fictitious right of birth, and are therefore interfering with normal and healthful growth of the society. At present the Brahman is not deprived of his social status for pursuing the occupation of a Sudra, as before. A person belonging to a lower caste, though possessed of qualities of a higher caste is not given a higher social status. In this way our caste

"नीवीबन्धोच्छ्वसितशिथिलं यत्र बिम्बाधराणाम् ।" उ० मे० । ७ ।

"यत्र स्त्रीणां प्रियतमभुजोच्छ्वासितालिङ्गनानाम् ॥ उ० मे० । ९ ।

इत्यादिभिः श्लोकैः कविना "अलकापुरी" यादृगादिरस-रसायितेति वर्णिता तेन च यक्षस्य कुबेरभृत्यस्य तीव्रा कामासक्तिः न कमपि विस्मयमुत्पादयितुमर्हति नो मनःसु ।

वक्तव्यमिदमत्र वचनेनैकेन शेषतां गच्छति । ऋतुसंहारप्रभृतीन्यपराणि तावत् कालिदासस्य खण्डकाव्यानि अधिगतावकाशश्च तूर्णमेव समालोचनालोकेन पाठकानां पुरतः उपस्थापयिष्यामीति मे मतिर्विद्यते । न केवलं पठनेन पाठनेन च काव्यानां तृप्तिः कस्यापि सम्भवेत् । "काव्यामृतरसास्वादस्तु" रसवस्तूनां सूक्ष्मानुसन्धानमुपभोगं विना न कदापि सञ्जायते । संसारविषवृक्षस्य रसवत् फलमभिलषता पाठकानां कालिदासकविता सादरमुपभोक्तव्या । कवितारसैर्भरितोदरा अपि रसज्ञाः निरन्तरमेव कामयन्ते कालिदासकवितानाम् । तथाच—

> कालिदास-कविता नवं वयः माहिषं दधि सशर्करं पयः ।
> एणमांसमबला च कोमला सम्भवन्तु मम जन्मजन्मनि ॥"

---

## श्मशान-परिणयः ।

### ( श्रीशरच्चन्द्रचक्रवर्त्तीकाव्यतीर्थः । )

रङ्गपुरजेलान्तर्गतराधानगराख्यग्रामे हरिचरणचक्रवर्त्तिनो निवासः । तस्य महादेवनामैकः पुत्र आसीत् । चक्रवर्त्ति-महाशयः पौरोहित्यकर्म्मणा यत् किञ्चिदुपार्ज्य पुत्रकलत्रादिभिः कथञ्चित् संसार-यात्रां निर्व्वाहयति स्म । महादेवो ग्राम्य मध्य-'आङ्गल'-विद्यालयादुत्तीर्णो वृत्ति लब्धवान् । अथ नगरं गत्वाऽस्य उच्चाङ्गलविद्यालये अध्ययनमावश्यकम् । कुतस्तु लभ्यते तदर्थः? चक्रवर्त्ती विचिन्त्य किमपि स्थिरीकर्त्तुं न शशाक । अर्थाभावात् पूर्णोत्साहः पुत्रश्चिरं मूर्खो भवत्येतद्दुःखमपि हृदये सोढुं न शशाक । महादेवोऽपि मनस्येतच्चिन्तितवान् । बालबुद्ध्या तु सोऽपि विशेषोपायमाविष्कर्त्तुमशक्तो जनक-जनन्यौ प्रबोध्य केनचिद् ग्रामवासिना रङ्गपुरनगरं प्रययौ । तन्नगरे पीताम्बरलाहिड़ीनामा कश्चित् स्वनामधन्यो लब्धप्रतिष्ठः परार्थपरायणो व्यवहारजीव आसीत् । दैवघटनया तेन महात्मना सह महादेवस्य परिचयो जातः । दरिद्रबन्धुः स व्यवहारजीवः श्रुतवृत्तान्तः स्वगृहे महादेवस्य वासस्थानं निर्द्दिश्य पाठव्ययमपि स्वयमेव वोढुं स्वीकृतवान् ।

ततः स महादेवस्तत्रावस्थाय समनोयोगमध्येतुमारेभे। अर्थशालिनः पीताम्बरस्य संसारे स्त्री मोहिनी, कन्याप्येका च महामाया। ततः प्रभृति सा महामाया महादेवस्य सविधे अध्यैष्ट विविधशास्त्रम्। सोऽपि तां यत्नेन साहित्येतिहासप्रभृतीन् बहुविषयानध्यापयामास। स्वभावशान्तो महादेवः प्रकृतिचपलाया महामायाया मनोनयनाय सर्व्वदा व्यस्त आसीत्। ततो महादेव उच्चाङ्गलविद्यालयादुत्तीर्य्य मासिकीं पञ्चविंशतिमुद्रात्मिकां वृत्तिं लभमानो विश्वविद्यालयं प्रविवेश। महामायापि पञ्चदशवर्षीया जाता। स्नेहवशादेव एकमात्रापत्यः पीताम्बरः पत्नीनाडितोऽप्येतावत्कालं कन्योद्वाहविषये नाचेष्टत। अधुना तु तत्परिणयोऽवश्यविधेयः इति मनसि संप्रधार्य्य पीताम्बरः पञ्चसहस्रमुद्रापणप्रदानप्रतिश्रुतः केनचित् विश्वविद्यालयान्तिम-परीक्षोत्तीर्णेन धनिसुतेन सह शुभसम्बन्धं निर्द्धारितवान्। सम्प्रति युवतिकल्पाया महामायायाः पूर्व्ववद्बालिका-सुलभा चपलता न दृश्यते। प्रयोजनं विना महादेवसमीपं न याति। महादेवेनाहूताऽपि मन्थरगत्या तत्सकाशमायाति। तद्वदनं प्रति तु दृष्टिं निक्षेप्तुं न शक्ता। इयं महामाया वर्षद्वयपूर्ववर्त्तिनी महामाया च द्विप्रकारे द्वे इव मन्यते। को वक्तुं समर्थः? कस्मादेतत् परिवर्त्तनं? महामाया-भावस्तु महादेवेन निपुणं लक्ष्यते। स प्रथममचिन्तयत् सा पीड़ितेति। इयन्तु धारणा तन्मनसि चिरं नातिष्ठत्। प्रतिदिनं कार्श्यं प्राप्नुवती महामाया दिनकरकरतप्ता कुमुदिनीव परिम्लानाऽभवत्। सोऽपि तदवस्थामनिशं विचिन्त्य रोगान्वित इव संदृष्टः। पीताम्बरस्तु तयोः प्रणयव्यापारस्य किञ्चिदपि न लक्षितवान्। अथैकदा मनश्चाञ्चल्याद् विद्यालयाद्गृहं प्रत्यावृत्त्य स्वपाठगृहं प्रविशन् महादेवो द्रुतं पलायमानां महामायामपश्यद्रङ्गपीठस्थं पत्रमेकञ्च। महामायाहस्ताक्षरं दृष्ट्वा चोत्तोल्य तत्पत्रं पपाठ। "नास्त्येव समयो व्रीडायाः, त्वमेव मया पतिः व्रियते। भारतीयार्य्यवंशसम्भूताहमपरेण परिणयेन पतिता भवामि। त्वं मे पतिः। पत्नीधर्म्मरक्षणं हि पतिकर्त्तव्यम्। येनायं विवाहो न भवेत् त्वया तदेव कर्त्तव्यमिति।" सर्व्वं सम्बुध्याऽपि कर्त्तव्यमवधारयितुं महादेवो न शशाक। क्रमाद्विवाहदिवसः सन्निहितप्रायो बभूव। क्रमशः पीताम्बरालयः कुटुम्बपरिपूर्णतां प्राप। सर्व्वे च विवाहोद्योगे यत्नवन्तः। तदानन्दवासरे निरानन्दा महामाया हृदयं दृढ़ीकृत्य मात्रे सर्व्वं निवेदयामास। रमण्येव रमणीहृदयव्यथां बोद्धुं शक्ता, विशेषतो जननी, दुहितृवचः श्रुत्वा वज्राहतेव स्वामिने सर्व्वं विज्ञापितवती। पीताम्बरस्तत्सर्व्वं श्रुत्वाऽवदत् "नाहमकुलीनाय परन्तु दरिद्राय कन्यां सम्प्रदास्यामि। अध्यापयिष्याहं सत्वरं विधास्या-

मीति। महादेवो हि एतन्मूर्न्नामित्यवधार्य्य बहिर्गत्वा तमाहूय उवाच—"वत्स! महामायोद्वाहदिवसः समीपवर्त्ती, तव परीक्षासमयश्च सन्निहितप्रायः। अत्रावस्थानात् तव पाठविघ्नोऽवश्यमेव भविष्यति, तस्मात्त्वं कस्मिंश्चित् छात्रावासे कति दिवसानतिवाह्य सुस्थमना अध्ययनादिकं कुरु। सर्व्वं व्ययमहं दास्यामि। महामाया विवाहरात्रौ त्वयात्रागन्तव्यं विवाहो द्रष्टव्यश्च। तत्पूर्व्वमत्र नागन्तव्यमिति।" महादेवः सविनयं सर्व्वं स्वीकृत्य तद्दिनमेव छात्रावासं ययौ। महामाया तज्जननी च तद्वृत्तान्तं सर्व्वं श्रुतवत्यौ।

अद्य विवाहः, सर्व्वत्रैवानन्दध्वनिर्विराजते। रात्रेर्द्वादशदण्डसमये लग्नकालः। दशदण्डात् परं बाद्यालोकसज्जितो वरः सवरयात्रिको विवाहसभामुपस्थितः। पुरोधसादिष्टः पीताम्बरश्च कन्यामानेतुं गृहं प्रविष्टः। ताम् तत्रापश्यन् सर्व्वाणि गृहाणि गत्वा तामन्विष्यति स्म। न तु कुत्रापि तां ददर्श। इतस्ततोऽन्विष्यन्सः पुरसरसीरमासाद्य विमलाम्भसि प्लवमानं साच्छादनालङ्कृतं महामाया-देहमपश्यत्। ततो जनानाहूय तद्देहमुत्तोल्य चैतन्यमुत्पादयितुं बहुभिश्चिकित्सकैश्चेष्टितवान्। सर्व्व एव यत्नो विफलतां गतः। सवरयात्रिको वरश्चेदिपतिर्भीष्मक सुतास्वयम्बरे इव विफलमनोरथः स्वालयं प्रययौ। महामाया-मृत्युसंवादं शृण्वन् पीताम्बरात्तथा विवाहसभामागतः स महादेवो निसंज्ञो भूमौ निपतितः। प्रयत्नेनापि तद्देहं चेतनां न लेभे। तद्देहं प्राणहीनमिति ज्ञातम्। पीताम्बरस्तु बहुक्षणं द्वे मृतशरीरे दृष्ट्वा नीचैः संरुध्य कथञ्चित् प्रकृतिस्थ उवाच 'अहमेवानयोर्मृत्युकारणं, सर्व्वं ज्ञात्वा श्रुत्वा चाप्यहं स्वयमेतौ स्वहस्तेनैवाहनम्। दरिद्रः कुलहीनश्चेत्यस्मात् महादेवाय मया तनया न दत्ता। आभ्यामिह मया न दत्ता शान्तिः परत्र यथा द्वौ शान्तिं लभेतां तन्मयावश्यं कर्त्तव्यम्। वत्सयोः शरीरद्वयं श्मशान-भूमौ नीयतां। तत्र धनिदरिद्रभेदः कुलीनाकुलीनभेदो वा नास्ति। श्मशाने मादृशो धनकुलगर्व्वितोऽपि दरिद्राकुलीनाय कन्यां प्रदातुं सम्मतो भवति। भवद्भिः पुरोहितमाहूय माङ्गलिकवस्तूनि प्रगृह्य श्मशानभूमिर्गम्यतामिति। तदवस्थां दृष्ट्वा कोऽपि न प्रतिवदति स्म। ततः पीताम्बरः स्वजनैः सह श्मशानभूमिमुपगम्य शरीरद्वयं वरवधूवेशेन भूषयित्वा दृढस्वरं मन्त्रमुच्चार्य्य यथाविधानं महादेवाय महामायां सम्प्रददौ। कन्या-सीमन्ते सिन्दूरं दत्त्वा तच्चिताशय्यायामुभौ शाययति स्म। ततः पीताम्बर-प्रदत्त-चिताग्निना वरवधूशरीरं धूमाकारेण पञ्चभूतेषु विलयमगच्छदिति।

## भारतीपत्र-प्रकाशित-समस्यापञ्चक-पूरणम्।

### श्रीरामकिङ्करतर्करत्नस्य।

१। रक्ष मां दक्षकन्ये।

मातर्दुर्गे दुरितदलनि त्र्यम्बके भावगम्ये
भीमे भीमापदुदयहरे क्षेमकर्त्त्रीष्टदात्रि।
संसाराब्धौ पतितमधमं कातरं नष्टचेष्टं
दीनं क्षीणं भजनरहितं रक्ष मां दक्षकन्ये॥ १॥

अपरञ्च–

कृतविविधकुभक्ष्यं सर्व्वदा निन्द्यलक्ष्यं
प्रबलतर-विपक्षं कुत्सिताचार-दक्षम्।
शमनभयशरण्ये वन्दनीये वरेण्ये।
विषयलसदरण्ये रक्ष मां दक्षकन्ये।

अन्यच्च–

कार्य्याकार्य्यानभिज्ञं भजनविरहितं सर्व्वदाऽसाधुसङ्गं,
दुर्द्दान्तं दर्पदृप्तं दुरितदवसमाप्लुष्टदेहात्मचित्तम्।
संसारध्वान्तकान्तारसरणिवियतायानयानप्रकाम–
क्लान्तं दीनं कुकर्म्माकरमिममधमं रक्ष मां दक्षकन्ये॥

२ ब्राह्मणस्य महत् पापमित्यादि–

द्वादश्यां पक्षयोरन्ते संक्रान्त्यां मायमेव हि।
ब्राह्मणस्य महत्पापं सन्ध्यावन्दन-कर्म्मभिः॥

अपरञ्च–

अशौचे तु समुत्पन्ने तथाशौचादिकेऽकृते।
ब्राह्मणस्य महत्पापं सन्ध्यावन्दनकर्म्मभिः॥

३ अष्टम्याः परतस्तिथिर्नवमीत्यादि–

नारिकेल फलाशनत्यजिविधौ कस्यास्तिथेरुक्तता
कस्माद्भीष्टकला च का किमपरं का मध्यरिक्ता तिथिः।

स्त्री निद्रा ननु का च का वरतिथिः किं स्विदलीकार्थकम् ।
अष्टम्याः परतस्तिथिर्न नवमी सा पौर्णमासी किल ॥ १ ॥

४ कुर्व्वाते कुरुते इत्यादि—

देवौ सृष्टिलयौ रजस्तमजुषौ * सत्त्वप्रधानोऽवनं
विघ्नध्वंसनमीड़ितो गणपतिः सूर्य्यस्तथा चण्डिका ।
आरोग्यन्त्वपि भोगमीप्सितफलं त्वन्ये नयाढ्या जनं
कुर्व्वाते कुरुते करोति कुरुतः कुर्व्वन्त्वलंकुर्व्वते ॥

५ छागी भागीरथीसमा इति—

अत्यल्पवृष्टिभीता का का वाऽशेषाघनाशिनी ।
का सर्व्वसुखदा प्रीतिः छागी भागीरथीसमा ॥

अपरञ्च—

आमाशयहरक्षीराऽश्वत्थस्थानपदोद्भवा ।
भवभीनाशकाकारा छागी भागीरथीसमा ॥ २ ॥

अन्यच्च—

अग्निदेवाघदलनी शङ्कुभाग्जलसाध्वसा ।
चतुष्पदा द्रुतगतिः छागी भागीरथीसमा ॥ †

---

प्रथमवर्षीय-प्रथमखण्डस्य २८ पृष्ठा द्रष्टव्या ।

( १ ) "ठ "शब्दश्चन्द्रवाची चन्द्रस्य कलारूपा तिथिरेव, तथाच,—

अर्काद्विनिःसृतः प्राचीं यद्यात्यहरहः शशीत्यादि ।

* अलीकार्थकं पदं अलीकार्थकं वाक्यञ्चेति प्रश्नद्वयं तात्पर्य्यभेदाद्वाक्यभेदो लौकिके न दोषः ।

† एते यथाक्रमं आरोग्यं भोगमपि कुरुतः ।

सर्व्वे सान्ता अदन्ताः स्युरित्यनुशासन-बलात् ।

"पिण्डं दद्यात् गयाशिरे" इत्यादिवत् अत्राऽपि अदन्तस्तमशब्दः ।

( २ ) आमाशयेत्यादि—आमाशयो रोगः आमः अपक्व आशयः वासना आर्द्र इति यावत् वासनानाशिनी तं हरति गङ्गाश्रयात् अपक्ववासनानाशो भवति ।

क्षीरं जलं छागीपक्षे दुग्धम् । अश्वत्थस्तु विष्णोर्ब्रह्मणश्च वासस्थानं । "यस्य प्रदेशे भगवान् मध्ये यस्य च माधवः । मूले पितामहो यस्य कस्त्वां जगति नार्च्चयेत् ॥" इतिस्मरणात् ॥

## काव्यप्रकाश-साहित्यदर्पणकारयोः काव्यलक्षणम् ।

लेखकः-पण्डित भ, वेकंटरामशर्म्मा ।

इह खलु चराचरात्मके प्रपञ्चे संव्यवहारोचितं सर्वमप्यर्थजातमेकेनैव शब्दाह्वयेन ज्योतिषा प्रकाश्यत इति नेदमविदितमखिलानाम् । तच्चेदमसाधारणमनायासलभ्यमस्नेहपरवशं ज्योतिः वेदशास्त्रपुराणेतिहास-काव्यकथात्मना त्रिधा प्रथां विभागस्यार्हति । विधिशासनं सुहृदुपदेशं कान्ताप्रियालापं च रूपं बिभ्रदनुरूपं विभक्तमिदम् । विवक्षितमेकमेवार्थं विबोधयिषानुगुण्येन साधु समर्थयितुं क्षमेप्यस्मिन् त्रिविधेऽपि तस्मिन् ज्योतिषि कामनीयकमनतिवर्तमानं सुकुमारमतिधारणक्षमं सर्वजनसाधारणं च तृतीयमेव तत् काव्यकथात्मकमभ्यर्हितमगर्हितं च सम्यगुपादेयं सकलैर्वेरीवर्ति । सति मृदुलकोमलतृणास्तरणविभूषिते पथि को नु चेतनः कठिनशिलाकण्टकनिर्लुण्ठितं तमात्मने रोचयताम् । सिद्धमेवमखिलाभिलाषैकास्पदत्वमस्य काव्यकथात्मकस्य ज्योतिषः, येन विनैव क्लेशं विस्पष्टमखिलमप्यर्थजातं द्रष्टुमलम्भूष्णवः प्रतियोगिनिरासक्रमादनायासमध्यक्षयन्तः दृश्येतरं परममर्जन्ति पुरुषार्थं तं, यो नाम मोक्षः । एवमतिविततायामस्यां सर्वसहायां लब्धजनुषां जन्तूनाम् अवश्यंज्ञातव्यस्य काव्यमार्गस्य स्वरूपमवयवशो निरूपयन्तं निबन्धमामनन्ति साहित्यमिति । सकलविबुधसमानेप्यस्मिन् तन्त्रे साहित्यसंज्ञिते प्रथमे हि नाम विद्वांसः वैयाकरणाः तत्त्वमदसीयमान्तरं चक्षुरुन्मील्य पश्यन्तः बहिरानुभविकं रसमाविश्चिकीर्षया निबबन्धुरनेकानितिह स्म प्रोचुः । इदञ्च तत्त्वं यथार्थं वस्तुतत्त्वविमर्शनपराणां रसिकानाम् । तर्क इव वेदान्तस्य गणितमिव ज्योतिषस्य शब्दागमस्य पुच्छभूतं खलु साहित्यम् ।

अकुण्ठमेधसामविषयो नाम न किञ्चित् । अखिलाअपि विदुषो निकाममनितरसाधारणेनावर्जनेन आत्मवशप्रापणे समर्थेऽस्मिन् तन्त्रे क्रमशः समेऽपि समाप्रकाशाः समजनिषत विद्वांसः । तदिह लक्षणं निरूपणमुपपादनं युक्त्युपबृंहणं वा नैकरूपं प्रतिपद्य तन्त्रान्तरेष्वेव कामपि व्यवस्थां स्वावस्थानुरूपां नाविन्दत । अथापि शतेनापि वाचोयुक्तिभिरप्रच्यावनीयं तत्त्वमस्खलितमेव सर्वदा । तदेवं वृत्ते वस्तुतत्त्वे स्थितिरेषा । काव्यादर्श-काव्यालङ्कार-काव्यानुशासन-काव्यदर्पण-काव्यप्रकाश-साहित्यदर्पण-प्रतापरुद्रीय-रसगंगाधर-प्रमुखाः परःशता निबन्धाः प्रायशोऽन्योन्यमव्यवस्थिताकृतयः न खलु निबध्नन्ति तत्त्वं, परन्तु निबध्नन्ति ग्रहम् । अहो नु खलु भोः कथमेभ्यो निबन्धेभ्यस्तत्त्वं गृह्णातु जनः । महानेव

सारमुच्चिकीर्षोर्जनस्य क्लेशः । बहुरूपकरम्बितेऽप्यस्मिन् वस्तुस्वरूपे बहुसमर्थास्तन्त्रान्तरीयाः निबन्धार इति तदिदमप्रकृतमपल्लवनोचितं दूरत आस्ताम् । प्रतिष्ठेयमसाधारणी वास्तविकी चास्य, योऽस्मिन्विषये महावैयाकरणवंशमुक्तामणेः महाभाष्यव्याख्यातृकैयट-सोदर्यस्य च प्रत्यक्षसरस्वत्यवतारनाम्ना प्रसिद्धविरुदस्य मम्मटभट्टस्य महान् सरसजनशिरोलालनीयमहिमा प्रथितो निबन्धः प्रकाशो नाम ।

नापि चायमपरिचितचरः प्रथाविशेषः सहृदयहृदयानाम् । योऽयं प्रतिनवेन पथा सर्वमपि साहित्यस्य स्वरूपं प्राचीनैः प्रामाणिकैर्निरूपितं सम्यगनुविमृशन् गुणदोषविचारः साहित्यदर्पणे प्रत्यक्ष एव निर्मले दर्पणे वस्तुतत्त्वस्य ।

समनन्तरोक्तयोश्चानयोः उभयोः काव्यप्रकाशसाहित्यदर्पणयोः प्रस्तुतयोर्निबन्धयोः साहित्यविषये प्रतिष्ठां तुलयितुं दृढमयमवसरो नस्तूलिकायाः ।

रुचितमननुचितं चिरपरिचितं च निर्मत्सरं वर्त्म शर्मणे । न्यायोऽयमतिप्राचीनविद्वज्जनसम्मतः । लोकतन्त्रमेवं दिनमनुपरिशीलयतोरपि कयोश्चित् पक्षभेदो भिन्नरुचितानिबन्धन एव । परमथो रुचिभेदे निमित्तं सदसद्वेति विवेचने ग्राह्यतायां त्याज्यतायां पक्षभेदस्य नियामकम् । तदिदं चिन्तयामः—

एवं किलासूत्रत् प्रकाशकारो मम्मटभट्टः—

"नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम् ।
नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति ॥"

इत्थं च परमनवीनः सरसाग्रणीः साहित्यदर्पणकारः—

"शरदिन्दुसुन्दररुचिश्चेतसि सा मे गिरां देवी ।
अपहृत्य तमः सन्ततमखिलानर्थान् प्रकाशयतु ॥"

अनयोश्च निबन्धप्रथमकारिकयोराविर्भावदशायां निबन्धोरनयोश्चेतसि कीदृशेन विचारेण वृत्तमिति समपक्षपातं चक्षुः प्रेष्य विजानीमः ।

आस्तिकजनबहुलप्रचारेऽस्मिन् भारतखण्डे दृढममङ्गलमासञ्जयितुमनाकाङ्क्षन्तावमू महाशयौ सममेव मङ्गलाचरणं स्वनिबन्धस्य मेनाते । तत्र च रूपभेदे अर्थभेदोऽप्यवश्यं निमित्तमिति शाब्दिकवस्तुतत्त्वदृशा कोऽनयोरर्थतो भेद इति विचार्यम् । असति बाधके सति च सौकर्ये सततमेकनालावलम्बिफलद्वयमनुरुन्धाना वैयाकरणसाहित्यनिबन्धारः श्लिष्टेन भाषमाणाः प्रयन्ते । इह किल तावदस्यां प्रथमकारिकायां चिकीर्षितस्य तन्त्रस्य स्वरूपं मङ्गलं च

यावदर्थपदाभिर्वाग्भिः सम्यगनुपश्यति प्रकाशकारः । तामेव च प्रकाशकारोपज्ञां नीतिम् अनुहरन्नयं साहित्यदर्पणकारः रूपान्तरेण स्वकीयमाशयं बहिराविश्चकार । यद्यपि प्रकटव्यङ्ग्यस्वरूपनिरूपणे प्रथमस्य दूरव्यंग्या च तस्मिन् द्वितीयस्य वाणीति, प्रत्यतोऽयं विशेषः विचारसहचेतसाम् । एवमादिविचारणायामतिसुदूरान्तरमनयोः प्रकाशदर्पणकारयोरमुकस्मिन् विषये रचनावर्त्मेति स्फुटं भावि । तत्रैवं स्थिते तत्त्वे प्रथमतोऽर्वाचीनस्य दर्पणकारस्य निबन्धं विमर्शेन परिशीलयामस्तावत्—

काव्यस्वरूपनिरूपणाभिधेऽस्य प्रथमपरिच्छेदे विश्वनाथकविराजेन तं तमर्थं साधु विवेचयता विशदीकृता बहव उपपत्तयः उक्तयश्च रसिकलोकमनोग्राहिण्यः । पूर्वेषां च निबन्धकर्तॄणां काव्यलक्षणानि सम्यगनूद्य विमृशतोऽस्य विमर्शनसरणिः परिष्कृतलोकप्रिया । तत्र 'तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापी'ति प्रकाशकाराभिहितं काव्यलक्षणं खण्डयितुमनसोऽस्य पण्डितस्योपपादनरीतिं किञ्चिदिव चिन्तयामः । अदोषस्य सगुणस्य सम्भव्यलंकारस्य च शब्दार्थयुगलस्य काव्यत्वं प्रकाशकृदभिहितं हि । तत्रायं कविराजः अदोषांशदूषणपरायणः सर्वसम्प्रतिपन्नकाव्यत्ववतो न्यक्कार इत्यादेः काव्यजातस्य काव्यत्वमव्याप्तं सम्यगुपपादयति स्म । तदनु प्रसङ्गवशात्सामान्यतया दोषस्वरूपमपि न्यरूपयत् । दोषाणां नित्यदोषत्वानित्यदोषत्वव्यवस्थान्यथानुपपत्त्या च दृढीकृतवान् स्वकीयां युक्तिम् । अन्ते च तदंशे प्रकाशकार-लक्षणानुधावने साहित्यसाम्राज्ये काव्यं प्रविरलविषयं निर्विषयं वा सम्यगनुचिन्त्य वदतोऽस्य विस्पष्टप्रकटीकृता काचन सहृदयता च मोदाय भवति । इदन्तु परं खेदाय महते, यत्स्वप्नेप्यदृष्टमर्थं प्रकाशकारस्य 'ईषद्दोषौ शब्दार्थावि'त्यनेन सम्भावयन्नयं सम्भावितं च तं तदनु खण्डयन् केवलं खण्डनैकरसिको वृत्तः । परमार्थतः पूर्वोक्तमप्यस्य विचिन्तनं वक्ष्यमाणेन वर्त्मना प्रविशतां कीदृशमिति स्वयमेव प्रत्यक्षीभविष्यति । इह खलु जगति किमपि कृत्यं अदुष्टमनध्यवयतां सर्वात्मना किं वा शुद्धं भविष्यति । तदिहायं नाम स्यादाशयः प्रकाशकारस्य—

तत्तत्काव्यस्थितरसिकताजीवनाढ्याः अपकर्षका विस्पष्टदृष्टाश्च ये शब्दलग्ना अर्थलग्ना वा दोषास्तेषामेव वर्णनीयत्वमदोषावित्यनेन यदि तेनाभिमतं किंवामास्य स्यादुत्तरम् । वस्तुतश्च तदिदमेव दूषकताबीजं गृणन्ति साहित्यविदो रसिकाः । यत्पूर्वोक्तनदपकर्षकत्वम् । न यथातथं च स्वरूपतो लग्नत्वमर्थे

शब्दे वा । सगुणाविति च द्वितीयं प्रकाशकारलक्षणगतं विशेषणं, प्रकाशकारेणापि गुणानां रसधर्मत्वाभ्युपगमाच्छब्दार्थयोर्दत्तमयुक्तं मत्वा भंग्यन्तरेण सरसावित्यभिप्राये तु लक्षणवाक्ये मुक्तकण्ठ तथैव वक्तुं युक्तमित्युक्त्वा सम्यग्विममर्शायं दर्पणकारः । वस्तुतो निर्लेपस्य परब्रह्मानन्दसहोदरस्य निरपायस्य च रसस्य यथार्थतोऽधर्मणः, गुणानां धर्मत्वप्रतिपादनं, शब्दार्थाभिव्यञ्जनीयमहिमानं तं रसमाश्रित्य रसाभिव्यक्तिसहचारात्तेषाम् । वस्तुतश्च शब्दार्थनिष्ठत्वात् सगुणाविति विशेषणं च नानुपपन्नमिति प्रकाशकाराशयमूहितुम् अतिदूरे युक्तिरेषेति मन्यत इवायं दर्पणकारः ।

अनलंकृती पुनः क्वापीति तृतीयेन विशेषणेन च काव्यताप्रयोजकत्वमनलंकाराणां सर्वसाहित्यसिद्धान्तकारसम्मतम् अनुगीर्यमाणं गुणानां सिद्धतदुत्कर्षमाऽऽधायकतया अननुमन्यमानोऽयं सम्यगाह दर्पणकारः । यच्च 'यः कौमारहरे'-त्यादिपद्यानां स्फुटालंकाररहितानामपि अनलंकृती इत्यत्र नञ्घटनया काव्यत्वं प्रकाशकाराभिमतमभिमत्य स्वयमपि तत्खण्डनाय प्रयेते तदपि विचारणीयमास्ते ॥

---

## ( गुरुशिष्यसंवादे ) ।

### सदाचारविवेकः—तत्र प्रातःकृत्यम् ।

पण्डित-उपेन्द्रचन्द्रस्मृतितीर्थः ।

( २ यवर्षीय १ मखण्डस्य ८० पृष्ठतोऽनुवृत्तः )

शिष्यः—भगवन्तः ! अवशिष्टं मे विशेषतः—सदाचारवर्णनं तच्छ्रयताम् ॥ उक्तपूर्व्वमेतावन्मात्रमेव यत् साधूनामाचरणम् एव सदाचारपदवाच्यतां भजत इति । न खल्वेतावता अल्पमेधसामेषां शिष्यजनानामनवशेषः सदाचारोपदेश इति यथासम्भवम् एव नामयाहमुपदिश्यतां तावत् ।

गुरुः—वत्स ! आब्राह्ममुहूर्त्तादाच शय्याग्रहणकालात् यस्य यस्य नामवर्णस्य अवश्यकर्त्तव्यतया यद्यदुक्तं शास्त्रजातेन तत्तदस्माभिः संक्षेपत उच्यते कालनिर्द्देशपुरःसरमेव । रात्रेः शेषार्द्धप्रहरे द्वौ मुहूर्त्तौ वर्त्तेते, आद्यो ब्राह्मः द्वितीयो रौद्रः । तत्र च प्रथमं ब्राह्मे मुहूर्त्ते त्यक्तनिद्रो देववरान् ऋषिगणांश्च स्मरेत्, यदुक्तं वामनपुराणे "ब्राह्मे मुहूर्त्ते बुध्येत स्मरेद्देववरान् ऋषीन् ।" इति ।

स्मरणप्रकारश्चैवं—

ब्रह्मा मुरारिस्त्रिपुरान्तकारी भानुः शशी भूमिसुतो बुधश्च।
गुरुश्च शुक्रः शनिराहुकेतू कुर्व्वन्तु सर्व्वे मम सुप्रभातम्॥

ततश्च—प्रातः शिरसि शुक्लाब्जे द्विनेत्रं द्विभुजं गुरुम्।
प्रसन्नवदनं शान्तं स्मरेत्तन्नामपूर्व्वकम्॥
प्रभाते यः स्मरेन्नित्यं दुर्गादुर्गाक्षरद्वयम्।
आपदस्तस्य नश्यन्ति तमः सूर्य्योदये यथा॥
अहल्या द्रौपदी कुन्ती तारा मन्दोदरी तथा।
पञ्चकन्याः स्मरेन्नित्यं महापातकनाशनम्॥
नमोऽस्तु गुरवे तस्मा इष्टदेवस्वरूपिणे।
यस्य वाक्यामृतं हन्ति विषं संसारसंज्ञकम्॥

अपिच—प्रातः स्मरामि हृदि संस्फुरदात्मतत्त्वम्।
सच्चित्सुखं परमहंसगतिं तुरीयम्॥
यत् स्वप्नजागरसुषुप्तमवैति नित्यम्।
तद्ब्रह्मनिष्कलमहं न च भूतसंघः॥
प्रातर्भजामि मनसो वचसामगम्यम्।
वाचो विभान्ति निखिला यदनुग्रहेण॥
यन्नेति नेति वचनैर्निगमा अवोचन्।
तं देवदेवमजमच्युतमाहुरग्र्यम्॥
प्रातर्नमामि तमसःपरमर्कवर्णं
पूर्णं सनातनपदं पुरुषोत्तमाख्यम्।
यस्मिन्निदं जगदशेषमशेषमूर्त्तौ
रज्ज्वां भुजङ्गम इव प्रतिभासितं वै॥
श्लोकत्रयमिदं पुण्यं लोकत्रयविभूषणम्।
प्रातःकाले पठेद् यस्तु स गच्छेत् परमं पदम्॥

इत्येवमादीन् श्लोकान् पठेत्। अनन्तरं च कलिभयनाशनमप्येतद् द्वयं पठेदेव। यथा महाभारते—

कर्कोटकस्य नागस्य दमयन्त्या नलस्य च।
ऋतुपर्णस्य राजर्षेः कीर्त्तनं कलिनाशनम्॥

मत्स्यपुराणे—कार्त्तवीर्य्यार्ज्जुनो नाम राजा बाहुसहस्रभृत् ।

यो ऽस्य सङ्कीर्त्तयेन्नाम कल्यमुत्थाय मानवः ।

न तस्य वित्तनाशः स्यान्नष्टं च लभते पुनः ॥

अपरं च—अहं देवो न चान्योऽस्मि ब्रह्मैवाहं न शोकभाक् ।

सच्चिदानन्दरूपोऽहं नित्यमुक्तस्वभाववान् ॥

इति भावयेत् ।

शिष्यः—भगवन्तः ! येषां खलु प्रोक्तप्रकारायां भावनायां नास्त्येव शक्तिस्तेषां पुनः किं नाम कर्त्तव्यम् ? नहि सर्व्वे स्वमात्मानं ब्रह्मस्वरूपं चिन्तयितुमर्हन्ति इति । तदत्र कर्त्तव्यमुच्यतां छात्रवत्सलेन ।

गुरुः—वत्स ! यः खलु नाहं संसारी, नित्यमेव च मुक्तोऽस्मीति च भावयितुं अशक्तस्तस्य पुनरेतदुच्चारणमपि कथञ्चिदुपकारं साधयति इति शास्त्रविदामादेशः ॥ यथा—

ब्रह्मैवाहं न संसारी मुक्तोऽहमिति भावयेत् ।

भावनेऽप्यसमर्थश्चेद्वाक्यमेतदुदीरयेत् ॥

शिष्यः—बाढमवबुद्धमेतद्, इयं पुनर्जिज्ञासा मे, देव ! एतदेव किं सम्प्रदायनिर्विशेषाणां सर्व्वेषां स्मरणीयम् ? उत इतोऽप्यधिकं किंचित् परिशिष्यते ?

गुरुः—आयुष्मन् ! कथमेवं श्रीमत आविर्भवति जिज्ञासा ?

शिष्यः—हेतुरत्र आत्मनोऽतृप्तिरेव प्रतीयते । देव ! नहि उक्तेषु वचनजातेषु तथाविधं नाम किञ्चिदपि प्रतिपादितमासीत् येन किल सर्व्वेषामेव तथाविधानां स्वेष्टदेवपरायणानां तत्तदन्यदेवेष्वश्रद्धानानाञ्च समाकृष्यते चेतः सारसिकत्वेनेति । तदिदं अमङ्गीचं प्रतिपादनीयं प्रातःस्मरणीयमिति ।

गुरुः—यदुक्तं तत् सत्यमेव, परन्तु मयापि यदभिहितपूर्व्वं तत्रैव सर्व्वमन्तर्भूतमस्ति सुसूक्ष्मेणैव रूपेण, स्थूलदृष्टयः खलु सम्प्रदाया इति, भवतु तत्, अभिधीयते तावत् सर्व्वेषामेव सम्प्रदायानां तत्तदिष्टदेवविषयकं प्रातः स्मरणीयम् । तत्र च प्रथमं विष्णूपासकानां प्रातःस्मरणीयं प्रदर्श्यते—

प्रातः स्मरामि भवभीति-भयार्त्ति-शान्त्यै

नारायणं गरुडवाहनमब्जनाभम् ।

ग्राहाभिभूतवरवारणमुक्तिहेतुम्

चक्रायुधं तरुणवारिजपत्रनेत्रम् ॥

प्रातर्नमामि मनसा वचसा च मूर्ध्ना
पादारविन्दयुगलं परमस्य पुंसः ।
नारायणस्य नरकार्णवतारणस्य
पारायणप्रवणविप्रपरायणस्य ॥
प्रातर्भजामि भजतामभयङ्करं तं
प्राक् सर्व्वजन्मकृतपापभयापहत्यै ।
यो ग्राहवक्त्रपतिताङ्घ्रिगजेन्द्रघोर-
शोकप्रणाशनकरो धृतशङ्खचक्रः ॥
श्लोकत्रयमिदं पुण्यं प्रातः प्रातः पठेन्नरः ।
लोकत्रयगुरुस्तस्मै दद्यादात्मपदं हरिः ॥

लोकेश चैतन्यमयाधिदेव ! श्रीकान्त विष्णो भवदाज्ञयैव ।
प्रातःसमुत्थाय तव प्रियार्थं संसारयात्रामनुवर्त्तयिष्ये ॥
जानामि धर्म्मं न च मे प्रवृत्तिर्जानाम्यधर्म्मं न च मे निवृत्तिः ।
त्वया हृषीकेश हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि ॥

इदन्तु शैवानां विशेषतः स्मर्त्तव्यम् । तथाहि—

प्रातःस्मरामि भवभीतिहरं सुरेशं गङ्गाधरं वृषभवाहनमम्बिकेशम् ।
खट्वाङ्गशूलवरदाभयहस्तमीशं संसाररोगहरमौषधमद्वितीयम् ॥
प्रातर्नमामि गिरिशं गिरिजार्द्धदेहम् सर्गस्थितिप्रलयकारणमादिदेवम् ।
विश्वेश्वरं विजितविश्वमनोभिरामं संसाररोगहरमौषधमद्वितीयम् ॥
प्रातर्भजामि शिवमेकमनन्तमाद्यं वेदान्तवेद्यमनघं पुरुषं महान्तम् ।
नामादिभेदरहितं षड्भावशून्यम् संसाररोगहरमौषधमद्वितीयम् ॥
प्रातःसमुत्थाय शिवं विचिन्त्य श्लोकत्रयं येऽनुदिनं पठन्ति ।
ते दुःखजातं बहुजन्मसञ्चितं हित्वा पदं यान्ति तदेव शम्भोः ॥

श्रीरामभद्रोपासनापरायणानाञ्चैतत्—

प्रातःस्मरामि रघुनाथमुखारविन्दं
मन्दस्मितं मधुरभाषि विशालनेत्रम् ।
कर्णावलम्बिचलकुण्डलशोभिगण्डम्
कर्णान्तदीर्घनयनं नयनाभिरामम् ॥
प्रातर्भजामि रघुनाथकरारविन्दम् ।

रक्षोगणाय भयदं वरदं निजेभ्यः ।
यद् राजसंसदि विभज्य महेशचापं
सीताकरग्रहणमङ्गलमाप सद्यः ॥
प्रातर्नमामि रघुनाथपदारविन्दं
पद्माङ्कुशादिशुभरेखिसुखावहं मे ।
योगीन्द्रमानसमधुव्रतसेव्यमानं
शापापहं सपदि गौतमधर्म्मपत्न्याः ॥
प्रातर्वदामि वचसा रघुनाथरामं
वाग्दोषहारि सकलं शमलंकरोति ।
यत् पार्व्वती स्वपतिना सह भोक्तुकामा
प्रीत्या सहस्रहरिनाम समं जजाप ॥
प्रातः श्रये श्रुतिनुतां रघुनाथमूर्त्तिं
नीलाम्बुदोत्पलसितेतररत्ननीलाम् ।
आमुक्तमौक्तिकविशेषविभूषणाढ्यां
ध्येयां समस्तमुनिभिर्जनमुक्तिहेतुम् ॥
यःश्लोकपञ्चकमिदं प्रयतः पठेद्धि
नित्यं प्रभातसमये पुरुषः प्रबुद्धः ।
श्रीरामकिङ्करजनेषु स एव मुख्यो
भूत्वा प्रयाति हरिलोकमनन्यलभ्यम् ॥

अथ देव्या उपासकानां प्रातः स्मरणीयम्—

प्रातः स्मरामि शरदिन्दुकरोज्ज्वलाभां
सद्रत्नवन्मकर-कुण्डल-हार-भूषाम् ।
दिव्यायुधोर्जितसुनीलसहस्रहस्तां
रक्तोत्पलाभचरणां भवतीं परेशाम् ॥
प्रातर्नमामि महिषासुरचण्डमुण्ड—
शुम्भासुरप्रमुखदैत्यविनाशदक्षाम् ।
ब्रह्मेन्द्ररुद्रमुनिमोहनशीललीलाम्
चण्डीं समस्तसुरमूर्त्तिमनेकरूपाम् ॥
प्रातर्भजामि भजतामभिलाषदात्रीं

धात्रीं समस्तजगतां दुरितापहन्त्रीम् ।
संसारबन्धनविमोचनहेतुभूतां
मायां परां समधिगम्य परस्य विष्णोः ॥
श्लोकत्रयमिदं देव्याश्चण्डिकायाः पठेन्नरः ।
सर्व्वान् कामानवाप्नोति विष्णुलोके महीयते ॥

वत्स ! एवमपि शाक्तानां स्मर्त्तव्यत्वेन कथ्यते,—कैश्चित् कोविदधूर्य्यैः । यथा

अहं देवी न चान्योऽस्मि ब्रह्मैवाहं न शोकभाक् ।
सच्चिदानन्दरूपोऽहं नित्यमुक्तस्वभाववान् ॥

त्रैलोक्यचैतन्यमयेश्वरेशि
श्रीपार्व्वति त्वच्चरणाज्ञयैव ।
प्रातः समुत्थाय तव प्रियार्थं
संसारयात्रामनुवर्त्तयिष्ये ॥
जानामि धर्मं नच मे प्रवृत्ति—
र्जानाम्यधर्मं नच मे निवृत्तिः ।
केनापि देवेन हृदि स्थितेन
यथा नियुक्तोऽस्मि तथा करोमि ॥

इदं पुनर्गाणपत्यानां स्मरणीयम्—

प्रातः स्मरामि गणनाथमनाथबन्धुं
सिन्दूरपूरपरिशोभितगण्डयुग्मम् ।
उद्दण्डविघ्नपरिखण्डनचण्डदण्ड—
माखण्डलादिसुरनायकवृन्दवन्द्यम् ॥
प्रातर्नमामि चतुराननवन्द्यमान—
मिच्छानुकूलमखिलञ्च वरं ददानम् ।
तं तुन्दिलं द्विरसनाधिपयज्ञसूत्रं
पुत्रं विलासचतुरं शिवयोः शिवाय ॥
प्रातर्भजाम्यभयदं खलु भक्तशोक—
दावानलं गणविभुं वरकुञ्जरास्यम् ।
अज्ञानकाननविनाशनहव्यवाह—
मुत्साहवर्द्धनमहं सुतमीश्वरस्य ॥

श्लोकत्रयमिदं पुण्यं सदासाम्राज्यदायकम् ।
प्रातरुत्थाय सततं प्रपठेत् प्रयतः पुमान् ॥

वत्स! उक्तं मया सम्प्रदायविशेषाणां विशेषतया यत् तत्केवलं बुद्ध्यनुसारादेव त्वादृशाणां ब्रह्मादिदेवैकमात्रनिष्ठानां। वस्तुतस्तु काशीखण्डादिपुराणप्रदर्शितदिशा सर्व्वैरेव सम्प्रदायैर्यथाक्रमं सर्व्वेषामेव देवादीनां यथासम्भवं स्मर्त्तव्यता प्रत्येतव्या। तदुक्तं तत्र पुराणादिषु—

रजनीप्रान्तयामार्द्धं ब्राह्मः समय उच्यते।
स्वहितं चिन्तयेत् प्राज्ञस्तस्मिंश्चोत्थाय सर्व्वदा॥
गजास्यं चिन्तयेदादौ तत ईशं सहाम्बया।
श्रीकान्तं श्रीसमेतन्तु ब्रह्माण्या कमलोद्भवम्॥
इन्द्रादीन् सकलान् देवान् वशिष्ठादीन् मुनीनपि।
गङ्गाद्याः सरितः सर्व्वाः श्रीशैलाद्यखिलान् गिरीन्॥
गायत्रीप्रमुखान् मन्त्रान् योगिनः शनकादिकान्।
प्रणवादिमहाबीजं नारदादींश्च वैष्णवान्॥
शिवभक्तांश्च बाणादीन् प्रह्लादादीन् दृढ़व्रतान्।
वदान्यांश्च दधीच्यादीन् हरिश्चन्द्रादिभूपतीन्॥
जननीचरणौ स्मृत्वा सर्व्वतीर्थोत्तमोत्तमौ।
पितरं च गुरुंश्चापि हृदि ध्यात्वा प्रसन्नधीः इति॥

इत्यमिष्टदेवादिस्मरणं विधाय "प्रियदत्तायै भुवे नम" इति॥

समुद्रमेखले देवि पर्व्वतस्तनमण्डले।
विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्व मे॥

इत्यनेन च पृथिवीं प्रणम्य प्रथमं दक्षिणं चरणं न्यसेदिति शय्यात्यागे सदाचारः। एवं सर्व्वेष्वेव समयविशेषेषु सदाचारोऽग्रे वक्ष्यते।

शिष्यः—भगवन्तः। "प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तते" इत्यनेन भवदनुग्रहप्राप्तेनोपदेशेन निर्णीतवानहमेवमेव प्रयोजनं प्रातः कृत्यस्य। न जाने तत् साध्वसाधु वेति। प्रकाशयामि तावत् तथैव भवतां तात्पर्य्यं निश्चयायेति। तथाहि प्रकृतिविवशाः खलु जीवाः कर्म्मैकनिष्णाताः स्वभावादेव रात्रेरवसाने वीततमोभावाः पुनरुज्जीविता इव शय्यायामेवावस्थाय स्वीयां स्वीयामिष्टदेवतां स्मर्त्तुमारभेरन् तत्स्मरणेन चेष्टदेवः प्रीतिमापन्नः ससुखमेव तद्दिनमर्थितकामयेदिति।

गुरुः—साधु वत्स! साधु! इत्यमेव श्रेयान् चिन्ताप्रकारः, परन्तु इतोऽपि गूढतमो भावो वर्त्तते कश्चित्। स तु प्रणिधानविशेषावगम्यः, तदयं प्रणिहितेन प्रतीयतां आयुष्मता श्रीमता। अयं भावः, अशेषवासनावशीकृतानां खलु जीवानां विशेषतश्च मानवानां निरन्तरं संसारचक्रे पात्यमानानां अनुक्षणमेव कर्म्मानुष्ठानस्वभावानां संसारातपतप्तानां सतां तदुच्छित्तये च काले प्रयतमानानां तथैवाभ्यासः कर्त्तव्यो येन अनायासेनैव कर्म्मसमूहः क्षीयमाणो भवतीति प्रभातायाञ्च शर्व्वर्य्यां कर्म्मसु व्यापारमनुतिष्ठासतां शय्योत्थाय स्वेष्टदेवतास्मरणान्तरमेव व्यापारः कर्त्तव्य इति। वत्स यदि च प्रत्यहमेव प्रातः स्मरणव्यपदेशेन "त्वया हृषीकेश हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि" इत्यादिरूपेण स्वस्वकर्त्तृत्वाभिमानं प्रहातुमभ्यासमुपसंक्रमेत जीवस्तर्हि नूनमेव पराहतमानगर्व्वादिदोषः अविलम्बितमेव संसारोच्छेदने प्रभविष्यतीति किमतः प्रयोजनान्तरं प्रियतममवशिष्यते? अपि च वत्स! कर्म्मभूमावस्यां कर्म्मैकगतिकानां जीवितकालः स्वस्थतया अत्येतुं युक्तः न खलु जीवनं सदुःखतया केचित्मनसापि स्प्रष्टुमर्हन्ति, तथाच सत्येवं नाम विधातव्यं, यत् प्रायेण दुःखासम्पृक्तभावेनैव जीवनमतिगच्छतीति सिद्धं प्रातःकृत्येष्टदेवतास्मरणादिकं सप्रयोजनमिति। (क्रमशः।)

---

## ब्रह्माण्डोत्पत्तिवर्णनम्।

### श्रीयुक्तविभूतीशचन्द्रशिरोमणिना

अथ कल्पादौ ब्रह्माण्डोत्पत्तिवर्णनम्। तत्र च निष्कलमनन्तमशेषभूतमुपनिषद्वर्णितं तदद्वैतं ब्रह्म, आदिपुरुषस्य श्रीभगवतस्तनुप्रभाः। तथाच—

सच्चिदानन्दरूपोऽसौ विवस्वानिव शोभते।
ब्रह्मैव हि करस्तस्य परिवेषोऽपरा तथा॥

अपरा जड़ा प्रकृतिः। तस्य परब्रह्मणः, तत्र प्रकृतावधिष्ठानात् जगदण्डकोटयो जायमाना विराजन्ते। तस्य च परब्रह्मणश्चिदंशस्य मायायां प्रथमाधिष्ठानप्रकारमाह। मायायामिति,

मायायां पतितश्चैव भवेदीश्वरसंज्ञकः।
सुखज्ञानादियुक्तस्य माया तस्य वशे भवेत्॥

एष ब्रह्मचिदंशो मायायां पतित ईश्वरसंज्ञको भवति। तथाच—

मायान्तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्।

तस्यावयवभूतैस्तु व्याप्तं सर्व्वमिदं जगत् ॥ इति श्रुतौ ।

एष मायाधिपतिर्महेश्वरः सर्व्वव्यापकः सर्व्वनियामकश्च । तथाच—

ईश्वरः सर्व्वभूतानां हृद्देशेऽर्ज्जुन तिष्ठति ।

भ्रामयन् सर्व्वभूतानि यन्त्रारूढ़ानि मायया ॥ इति श्रीगीतायाम् ।

एतत् संयोगादेव च प्रकृतौ क्रमेण गुणा उत्पद्यन्ते । तथाच—"अग्रे तम आसीत् तत् परेणेरितं विषमत्वं प्रायात् तद्वै रजोरूपं, तत् परेणेरितं विषमत्वं प्रायात् तद्वै सत्त्वरूपम्" इति श्रुतौ । ततोऽपि बुद्धिरुत्पद्यते । यथा—

जातक्षोभाद् भगवतो महानासीद्गुणत्रयाद् इति श्रीभागवते । तत ईश्वरसंयोगाद्गुणक्षोभ उच्यते । ईश्वरस्येति,

ईश्वरस्यैव संयोगाद् गुणक्षोभश्च जायते ।

ततः स च गुणक्षोभादनेकशो विभज्यते ॥

चेतनशिशुचालिताचेतनवर्त्तुलस्य चलनवदीशसंयोगादचेतनप्रकृतेर्गुणक्षोभादिव्यापारः । स ईशश्च ततः गुणक्षोभादनन्तरम् अनेकशो जीवरूपेण बहुधा विभज्यते । तर्हि विभुत्वव्याहतिरस्येति चेन्न घटभेदादाकाशस्येव सत्त्वभेदाद् विभक्तस्येशस्य विभुत्वव्याहत्यभावात् । ततश्च

"अविभक्तं विभक्तेषु विभक्तमिव च स्थितम्" इति श्रीगीतायाम् । गुणक्षोभादनन्तरञ्च प्रकृतेः प्रकारमाह मायेति ।

मायाऽविद्याप्रभेदाच्च सा ततो द्विविधा भवेत् ।

सत्त्वगुणात्मिका मायाऽविद्या रजस्तमोमयी ॥

सा प्रकृतिः । तत्र सत्त्वमयी माया । रजस्तमोमय्यविद्या ।

"तत्र सत्त्वं निर्म्मलत्वात् प्रकाशकमनामयम् ।

सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥

इत्युक्तेः सत्त्वस्य निर्म्मलत्वात् मायायाः स्वच्छत्वं, रजस्तमसोर्मालिन्यादविद्याया अस्वच्छत्वञ्च ।

एवं जाते च गुणक्षोभे, सत्त्वरजस्तमःसु अणुशो विभक्तेषु—

"माया गर्भस्थिताश्चामी काचपतितरौद्रवत् ।

अनेके गुणवैचित्र्यादीशांशाः प्राज्ञसंज्ञकाः ॥

यथा च काचपतितमेव रौद्रं भास्वरं सदन्यानपि प्रकाशयति, तथा स्वच्छत्वात् मायायास्तद्गत एव चिदंशश्चिन्मयः सन्निन्द्रियादिरूपाविद्यांशमपि

चिन्मयं करोति। एवं गुणक्षोभाद् अणुशोविभक्तेषु सत्त्वादिषु, प्रतिसत्त्वं स्थितेषु च चिदंशेषु मिथुनवृत्तिकत्वात् सत्त्वाश्रितरजस्तमोभ्यामाच्छादिता अनेके प्राज्ञ-संज्ञका भवन्ति। तर्हि माया चैषां कारणशरीरं अविद्यास्थूलं सूक्ष्मञ्च। सत्त्व-गुणाश्रितत्वादस्य सत्त्वमिति नामान्तरमपि। ततः—

तत्राहङ्कारवानीशः स वैश्वानरसंज्ञकः।
भवेयुश्च तथा तत्र प्राज्ञाश्च विश्वसंज्ञकाः॥

ततो बुद्धितत्त्वादहङ्कारतत्त्वं समुदभवत्। तयोरोऽपि अन्योन्याध्यासेन प्रकृतिगुणानात्मनि सम्भावयन् वैश्वानरसंज्ञको भवति। ततः स सगुण इति ख्यायते, अतः "निर्गुणं गुणभोक्तृ च" इति श्रीगीतायाम्। प्रकृत्यसंस्पृष्टो निर्गुणः, तत्संस्पृष्टस्तु सगुण इत्यस्यार्थः। इत्थं प्राज्ञा अपि गुणानात्मनि सम्भावयन्तो विश्वसंज्ञका भवन्ति। अतः "हृदि सर्व्वस्य विष्ठितम्" इति श्रीगीतायाम् कारणशरीरगतत्वाद् ब्रह्मणः सर्व्वहृदयावस्थितिरित्यर्थः। किञ्च सत्त्वस्याणु-त्वादणुत्वमस्य जीवात्मनः।

तथाच—"एषोऽणुरात्मा चेतसा वेदितव्यः"। इति श्रुतौ।

ततः—चित्संयोगादहङ्काराच् शब्दश्च समजायत।
आत्मानः स्युः खदेहस्था इन्द्रियं श्रोत्रसंज्ञकम्॥

शब्दगुणोत्पत्त्यनन्तरं तद्विशिष्टः प्रकृतेरंश आकाशाय कल्प्यते। तदनुगता जीवात्मानः आकाशशरीरा भवन्ति च। संसारस्यानादितया पूर्व्वादृष्टस्वीकाराद् युगपत् प्रकृतिगतसर्व्वजीवानां न खाणुदेहाप्तिः। स्रष्टसृष्ट्योर्भेदे सृष्ट्यपेक्षया स्रष्टुः सान्तत्वमिति तयोरैक्येन स्रष्टुरनादितया सृष्टेरनादित्वम्। ततश्च "सूर्य्या-चन्द्रमसौ धाता यथापूर्व्वमकल्पयत्" इति "कल्पादौ विसृजाम्यहम्" इति च। तर्हि पूर्व्वकल्पीयानां मानवादिदेहभृतां पृथिव्याद्यभावात् कथमिह पुनर्भोगः इति न वक्तव्यम्। मृज्जलयोगाभावे धान्यबीजानामनुत्पत्तिवत्तेषामिहाकाशे भोगाभा-वात्। एवं सिद्धबीजेभ्योऽङ्कुराणामनुत्पत्तिवत्संसारः सिद्धानाम्। शून्यस्याणौ किं प्रमाणमिति चेत्, करयोर्घर्षणात् खवायूष्मजलमलानां क्रमेणोत्पत्तिदर्शनात् प्रकृतिपुरुषयोगात् खाद्युत्पत्तिक्रमोऽनुमीयते। तथाच—"तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः, आकाशाद्वायुः, वायोरग्निरग्नेरापो। ऽद्भ्यः पृथिवी, पृथिव्या ओषधयः, ओषधिभ्योऽन्नम्, अन्नात् पुरुषः" इति श्रुतिः। अनेनैव क्रमेणाव्यक्ता

प्रकृतिरुत्तरोत्तरं घनत्वमापद्यते । तर्हि वाय्वादिष्वणोः सत्त्वात् तेषामुपादाने खेऽपि तत् सत्त्वमस्तीति ।

अत्र चिद्भास्यबुद्धेर्नेदीयोऽंशतो श्रोत्राख्यं ज्ञानेन्द्रियं, तद्दवीयोऽंशतो वाङ्नाम कर्म्मेन्द्रियं च जायते । ततः—

शब्दादजायत स्पर्श आत्मनां चेष्टया तदा ।
वायुदेहगतास्ते च त्वगाख्यं करणं तथा ॥

स्पर्शगुणोत्पत्त्यनन्तरं शब्दस्पर्शगुणयुक्ता प्रकृतिराकाशतः वायुरूपा बभूव। अत्र त्वगाख्यं धीन्द्रियं, पाण्याख्यं कर्म्मेन्द्रियञ्च ।

एवमेव ततोरूपं स्पर्शाच्च समजायत ।
तेजोदेहगतास्ते चेन्द्रियं लोचनसंज्ञकम् ॥

रूपोद्भवात् शब्दस्पर्शरूपगुणयुक्ता प्रकृतिस्तेजोमयी बभूव । सा वायोरपि स्थूलत्वेन दृश्या, कार्य्यपरत्वाद् घूर्णायमानाण्डवत् भवति । तच्च ब्रह्माण्डमिति व्यापदिश्यते । तच्च भगवता वैश्वानरेण प्रकाश्यते । ततश्च तस्य हिरण्यगर्भ-मार्त्तण्डादयो व्यपदेशाः । तथाच 'मृते अण्ड इव यदभूदतो मार्त्तण्ड इति व्यपदेशः, हिरण्यगर्भोयद्धिरण्याण्डसमुद्भवः" इति श्रीभागवते । ततो भगवता हिरण्यगर्भात्मना तद् ब्रह्माण्डं विभज्यते । तथाच—

सूर्य्येण हि विभज्यन्ते दिशः खं द्यौर्भेदामही ।
स्वर्गापवर्गौ नरकाः रसौकांसि च सर्व्वशः ॥ इति—

श्रीभागवते । ते च विभक्ता अंशाः प्रत्येकं ग्रहादिरूपेण परिणमन्ति । एवं जगत्प्रसवाच्च भगवान् सूर्य्यः सवितेति गीयते । अत्र विश्वा अपि तेजः-सम्बन्धीयत्वात् तैजस संज्ञामवापुः । एवमत्र नयनाख्यं धीन्द्रियं पादाख्यं कर्म्मे-न्द्रियञ्च । ततः ।

रसः स्म जायते रूपात्तयेशात्मसमीहया ।
आत्मानो जलदेहस्था रसनं करणं तथा ॥

रसोत्पत्त्यनन्तरं तदधिकगुणयुक्ताः ग्रहादिरूपेण परिणतास्ते प्रकृत्यंशा अद्भिः सम्पद्यन्ते । तदा आत्मानो जलाणुबद्धा भवन्ति । अत्र रसनेति ज्ञानेन्द्रियं, गुह्यमिति कर्म्मेन्द्रियञ्च । ततः पृथिव्युत्पत्तिरुच्यते । आत्मेहयेति—

आत्मेहया रसादेवं गन्धः समुदपद्यत ।
आत्मानः क्षितिदेहस्था घ्राणसंज्ञकमिन्द्रियम् ॥

गन्धोत्पादात् गन्ध इत्यधिकगुणविशिष्टः प्रकृत्यंशः जलादपि घनः पृथ्वीरूपेण परिणमतीत्यर्थः। अत्र घ्राणसंज्ञकं बोधेन्द्रियम्, उपस्थसंज्ञकं कर्म्मेन्द्रियञ्च। अत्र पृथिव्या आत्मनाम् उत्कर्षक्रममाह,—अणुविति—

अणुदेहधराः पूर्व्वमात्मानस्ते ततः क्रमात्।
पाषाणखनिजोद्भिज्जस्वेदजाण्डजरायुजाः॥

आत्मेहया संहताणुसङ्घायां प्रकृत्यां पाषाणतामापन्नायां आत्मानः पाषाणाणुबद्धा भवन्ति। एवं खनिजादिपक्षेऽपि। इत्थमेवाव्यक्तप्रकृतेः खादिक्रमेण व्यक्तत्वम्। क्रमेत्यत्राधिकगुणयोगात् खादीनां क्रमेण व्यक्तत्वमुक्तम्। पाषाणादीनान्तु अधिकगुणयोगाभावेऽपि कथं तदित्युच्यते आत्मेहैव घनत्वकारणं नतु विषयोत्पत्तिः। आत्मेहा च 'यतन्यां' 'खगन्यां' पाशादिव बद्धानामात्मनां प्रकृतेर्मुमुक्षा। एवं खगचेष्टया पाशस्येवात्मेहया प्रकृतेराखं खनिजावधिकं क्रमेण दृढत्वमिति।

अथ अणवादिषु आत्मनो जड़म्मन्यत्वे कारणमाह, आत्मेति।
आत्मा प्रकृतिबाहुल्यादज्ञान इव लक्ष्यते॥

यत्र यत्र प्रकृतेराधिक्यं तत्र तत्र मोहादचेतनत्वमिति अणवादिष्वज्ञानतां तदन्यत्र तु क्रमेण प्रकृतेर्ह्रासात् क्रमेण चेतनत्वमित्यर्थः। तथाच—

एतत् सर्व्वमिदं विश्वं जगदेतच्चराचरम्।
परब्रह्मस्वरूपस्य विष्णोः शक्तिसमन्वितम्॥
विष्णोः शक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथापरा।
अविद्या कर्म्मसंज्ञान्या तृतीया शक्तिरिष्यते॥
यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्व्वगा।
संसारतापानखिलानवाप्नोत्यनुसन्ततान्॥
तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता।
सर्व्वभूतेषु भूताल्पतारतम्येन लक्ष्यते॥
अप्राणवत् सु स्वल्पाल्पा स्थावरेषु ततोऽधिका।
सरीसृपेषु तेभ्योऽन्याप्यतिशक्त्या पतत्रिषु॥
पतत्रिभ्यो मृगास्तेभ्यः स्वशक्त्या पशवोऽधिकाः।
पशुभ्यो मनुजाश्चेति शक्त्या पुंसः प्रभाविताः॥

इति श्रीविष्णुपुराणे, गरुड़पुराणे च—

निर्गुणः सच्चिदानन्दस्तदंशा जीवसंज्ञकाः ।
देहाद्युपाधिसंभिन्नास्ते कर्म्मभिरनादिभिः ॥
स्थावराः कृमयश्चाब्जाः पक्षिणः पशवो नराः ।
धार्म्मिकास्त्रिदशास्तद्वद् मोक्षिणश्च यथाक्रमम् ॥ इति ।

तद्वेवं क्रमेण प्रकृतेर्ह्रासात् ज्ञानोच्चतिक्रमेण खनिजादज्ञानप्राया उद्भिज्जास्ततः किञ्चिद्‌ज्ञानोन्मेषाः स्वेदजास्ततोऽसम्पूर्णेन्द्रिया अण्डजाः । एषामसम्पूर्णेन्द्रियत्वञ्च चक्षुरादिमत्त्वेऽपि कर्णाद्यभावात् । ततो जरायुजाः । तत्रादौ पशवः । तेषामप्यसंपूर्णत्वं हस्तपादादीनां पृथक् संस्थानाभावात् अङ्गसौष्ठवाभावाच्च । ततो मनुजाः । अत्र मर्त्यज्ञानस्य चरमोत्कर्षः सर्व्वेन्द्रियप्रकाशश्च । इत्थं बहुयोनिभ्रमणखिन्नानामेषां पुनः पुनः संसरणं, नत्वविद्याप्रतारितानामीप्सिततमप्राप्तिः । एषां जीवानामीप्सिततमश्च प्रेमानन्दमयः श्रीहरिरेव । ते तु सततं तं हरिमेवाप्तुमीहन्ते । तदनुसन्धानायैव तेषामेतत् पुनः पुनः संसरणम् । मृगाणां जलभ्रमेण मरीचिकानुसरणमिव भ्रान्तानां तेषां कृष्णानन्दविस्मरणेन एतत् वैषयिकसुखान्वेषणम् । नह्येषा मृगतृष्णा कृष्णप्रेम विना कोटिकल्पेनाप्युपशाम्यति ।

---

## द्वितीयोपाख्यानम् ।

### श्रीयुक्तकालीकान्तशिरोमणिना ।

या विद्या मूर्त्तिराद्या स्मरहरहृदये तिष्ठतीन्दीवराक्षी
नागैर्युक्तैकवेणी भयहरवरदा व्याघ्रकृत्तिं वसाना ।
सर्व्वैः पूज्या वरेण्या शमनदमनकृद् या च विद्या द्वितीया
साद्यं हन्तु प्रतारां नवजलदविभा नीलवाणी प्रतीता ॥

आसीत् पुरा समृद्धिसंपन्ना चंपकनामधेया नगरी । तत्र सुभगो नामार्य्यो निवसति स्म । स च सर्व्वशास्त्रदर्शी विदुषामग्रगण्यः, केवलमहर्निशं तस्य मनः शास्त्रचिन्तामेव निविष्टं न चान्यविषयं, तस्मात् अर्थोपार्ज्जने भोजनादिषु च तेनानादरः कृतः । यतः—

प्रविश्य मानसं यस्मिन्नास्वादमवगच्छति ।
न प्राप्य कारणाघातं यातुं तस्मान्न चेश्वरम् ।

अथ गच्छति कियति काले तस्यार्थप्रयोजनमासीत्, तद्विनं चेन्नोपार्ज्जयति तर्हि कलत्रपुत्रादिभि र्न जीव्यते, तच्चिन्तया शास्त्रालोचना विलुप्ता, स्वयमपि जीर्णः शीर्णश्च जातः ॥

सुखचिन्ता शरीराणि पुष्णाति तन्वती श्रियम् ।
दहत्यभावचिन्ता च शिशिरः कमलं यथा ॥

ततो धनसंग्रहे तस्य मनो निविष्टम् । तदर्थाय समृद्धिसंपूर्णं कोशलराष्ट्रे गमनं निर्णीतम् । यदि परिच्छदस्य पारिपाट्यं न क्रियते भृत्यश्च न नीयते, तर्हि नानाशास्त्रं जानन्नपि सर्व्वेषामप्रियदर्शनोऽनादरणीयश्च भविष्यामि, ततः समुचितोऽर्थो न प्राप्स्यस्तेनेति ध्यातम् । यतः—

परिच्छदो यथा यस्य तथा तस्य समादरः ।
लेभे पीताम्बरो लक्ष्मीं विषं दिगम्बरोऽर्णवात् ॥

अपरञ्च—

अवस्था पूज्यते लोकै र्न शरीरी कदाचन ।
सुवासो मूर्ध्नि बध्नन्ति पादं मार्ज्जन्ति कर्पटैः ॥ *

ततस्तेन विदुषा कस्यचिद्बन्धोः परिष्कृतं वस्त्रमानीतम्, बलभद्रो नाम कश्चिज्जनो विना भरणेन भृत्यः कृतः, स च स्त्रीपुत्रादिविहीनः, केवलमुदरं प्रपूर्य्य भक्षणम् उपदेशपूर्णप्रसङ्गस्य श्रवणं च तस्य जीवनव्रतमेकम् ॥

अथ स आचार्य्यस्तेन सह गन्तव्यस्थानं गन्तुमारेभे। ततः कियतः पथोऽतिक्रम्य विजनमरण्यमुपागतः, तदैव सायमागतं न खलु सन्निधौ तादृशमाश्रयस्थानं वर्त्तते, यस्मिन्नतिकष्टेनापि विभावरीमतिवर्त्तयितुं शक्नोति इति स्वगतं ध्यात्वा तेन भृत्य इति विज्ञापितः । यतः—

वित्तस्य चायुषो मानं वक्तव्यं नापरे कदा ।
विपदं कथयेदन्यं मुक्तियेत् सम्भवोऽपि वा ॥

बलभद्र श्चिन्ताकुलं सुभगमाह । देव ! किं भयम्, का वा विपत्, अलमिति चिन्तया, पश्यतु अग्रवर्त्तिनि कानने विशालविटपी विराजते, अयमेव नक्तमावयोराश्रयः द्रुतमागच्छ इममारोहावः । तदमारोहयितुं किङ्करं चञ्चलं दृष्ट्वा स ब्रूते स्म । बलभद्र एतेनावयोर्भद्रं जायते किं नवा पुरतस्तच्चिन्त्यताम् । यतः—

* कर्पटैः = छिन्नवस्त्रैः ।

विपत्स्थानं सहस्रन्तु कल्याणमतिदुर्लभम् ।
सन्निधौ हि सदा मृत्यु राश्चर्य्यमपि जीवितम् ॥

अपरं, द्रुमोऽयं न ज्ञातः सविशेषं नालोच्य अत्र वासो न विधेयः । यतः—

अज्ञातस्थानमर्म्माणि न ज्ञात्वा तत्र नो वसेत् ।
विपत्तौ पतितः शङ्कुः प्रविश्याज्ञातमालयम् ॥

श्रुत्वा बलभद्र आह कथमेतत् । सुभगोऽब्रवीत्—अस्ति दाक्षिणात्ये पम्पा-नामधेयं सरः, तस्य तीरे मनोहरमेकं मन्दिरमास्ते । एकदा शङ्कुर्नाम पण्डितः धनमुपार्ज्जयितुं चतुर्द्दिक्षु पर्य्यटन् सायं तत्रागतः, सन्निधौ मानवालयं न दृष्ट्वा रात्रौ तन्मन्दिरं प्रविष्टः । ततो घोरतरतमसावृते निशीथे विकटाकृति रेको दानवस्तत्रो-पागतः । स च अर्गलबद्धं कपाटं निरीक्ष्य विरुषाऽब्रवत्—आः को हतभाग्यो मृत्युम-नुसरन् ममावासं प्रविष्टः, क्षणं तिष्ठ आगच्छामि, इत्युक्त्वा पदाघातेन कपाटं विभज्य मन्दिराभ्यन्तरं प्रविवेश । स ब्राह्मणः कृतान्तमिव तं भयङ्करं दृष्ट्वा भयेन विमूर्च्छितः, ततोऽचिरादेव संज्ञां विलेभे धैर्य्यावलम्बनेन तूष्णीं स्थितः । यतः—

तिष्ठति सुस्थिरं चेतो धैर्य्यं यस्य न लुप्यते ।
महतीं विपदं तात शमयितुं स शक्तिमान् ॥
परान् कथयितुं येन बुद्धिं ज्ञानञ्च तन्यते ।
दर्श्यते च स्वकार्य्ये तत् स ज्ञानी स च बुद्धिमान् ॥
उपदेशशतेनापि परान् यो वक्तुमर्हति ।
स्वकार्य्ये तु स्वयं तेन प्रवञ्चितः स किंबुधः ॥

ततो दानवो गृहान्तराले द्विजं दृष्ट्वा सकोपमाह । रे मूढ़ कस्त्वं ममालय मधिकृत्य निश्चिन्तं तिष्ठसि, विश्वजिन्नामानं दानवेश्वरं मां न वेत्सि, मर्त्तुमिहा-गतः । श्रुत्वा स पण्डितः सपदि स्वकपोलकल्पितवचनचातुर्य्येणाह । दानवे-श्वर ! भवता यदुक्तं तदेव सत्यम्, मृत्युरेव मेऽवधारितः, यतो नृपतिः मां हनि-ष्यति देशाधिपतिर्भवांश्च द्वावेव मे विनाशप्रमाणम् * एतयोर्येनाहं हन्ये स एव मे कृतान्तः, भवतो नाम श्रुतं भवानपि अत्रास्ते इति जानन्नत्रागतोऽहमुपकारा-शया, श्रुत्वा दानव आह, कथं देशाधिपस्ते घातकः, मां वा कमुपकारं याचसे श्रुत्वा द्विजेनोक्तम् । अस्ति पाटलिपुत्रनगरे शङ्खचूड़ो नाम नृपतिः, तस्याचप्रति-पालितः शङ्कुनामा पण्डितोऽहं सर्व्वशास्त्रपारदर्शी विदुषामग्रगण्यः । साम्प्रतं

* प्रमाणं-हेतुः ।

तस्य सभायां काञ्चिपुरनगर्य्याः कश्चित् दूतः प्रश्नमेकं नीत्वा मीमांसार्थमागतः, ममबुद्धेरगम्यतया तस्य सदुत्तरं नासीत् । ततः स नरपतिः क्रुद्धोऽवदत् दिनत्रयाभ्यन्तरे चेन्न मीमांसितस्तर्हि शिरच्छेदस्ते भविष्यति, ततो मामतीव विपन्नं दृष्ट्वा केनचिद् विदुषाऽभिहितमेतत् विश्वजिद्-दानवं विना नान्यैर्मीमांस्यते, तस्मादेव भवन्तं प्राप्तुमत्रागतोऽस्मि ।

इति निशम्य दानवः प्रहसन्नवदत् प्रश्नन्ते ब्रूहि शृणोमि तावत् । श्रुत्वा द्विजेनोक्तम् । समुद्रसेननामा कश्चित् सार्थवाहस्तीर्थयात्रां कृत्वा सपुत्रभृत्यो गृहाद्बहिर्गतः, पिता पुत्रश्च पथि यथा कालीं नमश्चकार, तथैव तयोः शिरोद्वयं देहतः पृथग् बभूव, भूमौ पपात च । इति दृष्ट्वा तस्य चिरानुगतः किङ्करः प्रभुशोकेन भूमौ लुलोठ, भूयो रुरोद च । मुहूर्त्ते छिन्नमुण्डद्वयं ग्रीवायां संलग्नीकुरु, तस्योपरि देव्या घटजलं सिञ्च इति देवीवाणीं किङ्करः श्रुतवान् । ततः सः अतीव व्यस्ततया पितृमुण्डं पुत्रग्रीवायां पुत्रमुण्डं पितृग्रीवायां व्यवस्थाप्य यदा तथा कुरुते स्म, सपदि तौ जीवतः स्म, अधुना कः पिता कः पुत्र इति निरुप्यतामिति प्रश्नो, भवन्तं विना नान्यो मीमांसकः । इदानीं यद्रोचते तदेव कुरु । श्रुत्वा दानवो भूयो ध्यात्वा ब्राह्मणमाह—द्विज क्षणमिह तिष्ठ यावदहं सुरलोकादागच्छामि इत्युक्त्वा स तस्मात् बहिर्गतः । ततः प्रश्नोत्तरार्थी नानास्थानं परिभ्रमन् रात्रिमतिवाहयति स्म । अत्रान्तरे शङ्कुरपि पलायाञ्चक्रे । अतो ब्रवीमि अज्ञातस्थाने वासो न विधेयः ॥

श्रुत्वा बलभद्र आह—देव ! भवता यदुक्तं तदेव बाढम्, कालविशेषे तु नादरणीयम् । अत्र श्वापदसङ्कुले विजनकानने सद्य एव आवां निहन्तव्यौ, अमुष्मिन् तरौ भाविनी विपदाशंका प्राणास्तिष्ठन्ति नश्यन्ति वा सन्देहभूमिरिति, अतः अमुष्मिन् पादपे हि नक्तमावयोः स्थातुमुचितम् । यतः—

> वर्त्तमानान्तरं स्वच्छं सदाक्षिगोचरं नृणाम्
> द्वारबद्धं भविष्यच्च तमोभिरावृतान्तरम् ।
> भविष्यद्वर्त्तमानञ्च वर्त्तमानं तयो र्गुरुः
> मुक्तो व्याघ्राक्रमाद् व्याधः पतित्वा सागरोर्म्मिषु ॥

एकदा गिरिविन्ध्यनाम्नि गहने पिङ्गलाक्षो नाम लुब्धको बहून् मृगान् हतवान् । ततः प्रभूतमांसभारं वहन् मन्थरगमनेन स्वकीयगृहं गन्तु मारेभे, कियद् दूरगमनात्परं हि गुरुतरशिथिलभारं वोढुं क्लान्तः विश्रमार्थं समुद्रतीरमुपविष्टः ।

अथ सलिलवायुहिल्लोलेन सर्व्वाङ्गं शीतलीकृतं मनोऽवसादेन अस्य तन्द्रावेशश्चासीत्। एतदभ्यन्तरे एको भीषणो व्याघ्रस्तस्याक्रमणार्थं पृष्ठसमीपे तूष्णीं स्थितः। परमायुर्बलेन सहसा व्याधस्य निद्राभङ्गे तस्य चक्षुः पार्श्वदेशे यथा निपतितं तथा चाक्रमार्थं द्वीपिवरो दृष्टः। स च सपदि समुद्रतरङ्गे पतितः। ततोऽचिरं जलधितरङ्गगतं प्लवमानं दृष्ट्वा कतिपयधीवरैर्यत्नात् तेषां तरण्यामुत्तोलितः बहुशुश्रूषया स जीवितः स्वगृहं गतश्च।

श्रुत्वा सुभग आह बलभद्र! त्वदुक्तं साधु मन्ये यथा भद्रं तथा कुरु। अथ स भृत्येन सह वृक्षमारूढः शाखायामुपविष्टः तस्थौ। क्रमशः

---

## वीरबलः।

### श्रीयुक्त सुरेन्द्रमोहनसांख्यकाव्यपुराण-तीर्थेन।

सूत्रधार-सुतः कश्चिद् वीरबलाभिधानः स्वालये यदा स्वकीयकर्म्मणि निरत आसीत्तदानीं विविधमिष्टद्रव्यविक्रेत्री काचिद् रमणी विक्रय्यद्रव्याभिधानमुच्चैर्मुहुर्घोषयन्ती तेन पथा गन्तुमभूद् प्रवृत्ता। वीरबलः तस्याः रमणीतः कानिचिद् द्रव्याणि क्रीतवान्। कार्य्यव्यासक्तश्च स समयाभावात् सर्व्वाण्येव तानि द्रव्याणि समीपस्थिते कस्मिंश्चित् काष्ठभाजने स्थापयामास। मुहूर्त्तमात्रमपगते तानि हि रमणीनि मिष्टद्रव्याणि मक्षिकाः समाच्छादयामासुः। क्रुद्धो वीरबलस्तु केनापि काष्ठखण्डेन तासां मक्षिकाणामुपरि सवेगमाहतवान्। अनेन च सप्तसंख्यकाः मक्षिका मृत्तिकायां मृत्युमुखमापतिताः। व्यापारेणैतेन 'वीरोचितमिदं कार्य्यं वीरबलेन मया सम्पादितम्' इति मत्वा स सार्द्धहस्तपरिमाणो वामनो वीरबलः सगर्व्वं तं सप्तमक्षिकावधवृत्तान्तं यस्मै कस्मैचिन्न्यवेदयत्। स्वकीये तावत् कटिबन्धनवसने "एकाघातेन वीरेण मया सप्त निसूदिताः" इति रक्ताक्षरैर्व्यलिखत्। वीरत्वमिदं सर्व्वत्र वसुधायां प्रचारयितुकामः स तस्मिन्नेव दिवसे विदेशं गन्तुमना बभूव। स्वेन च सार्कं कञ्चित् सहायभूतमपरमनुसन्दधत् स गुरुभारमेकमपूपं (पिष्टकं) संगृह्य सत्वरं गन्तुमारेभे। अर्द्धमार्गे घनशाखासमन्विते शाखिनि शकुन्तमेकं दृढलग्नं समवलोक्य स दयया तं तस्मादुन्मोच्य तमपि सहायभूतमिति संगृह्य गन्तव्यपथं पुनराशिश्राय।

ततश्च पर्व्वतपथेन परिभ्रमन् स सहसा प्रकाण्डमेकं दैत्यपुङ्गवमभिवीक्ष्य निःशङ्कं तं परिपप्रच्छ 'किमुद्दिश्य प्रवर्त्तसे सखे! विशालमिदं तव वपुः कर्म्मठमेव

कल्पयामि !" विनैवोत्तरप्रदानं स चण्डकर्म्मा नाम दानवस्तमाह "हंहो खर्व्वाङ्गुक! त्वया तावत् कुत्र गम्यते ?" बीरबलः कथयति मया कठोरं किञ्चित् कर्म्म सम्पादितव्यम् ! तत्र च कर्म्मणि यदि त्वं मम सहायताविधौ साहसी भवेस्सदा निर्भयं मामनुसर ।" श्रुत्वेदं विकटवपुर्दैत्यवरः अट्टं विहस्याब्रवीत् "त्वादृशेन केनचित् क्षुद्राकृतिना जन्तुना कीदृशमिह महत् कर्म्म संसिध्येत् ?" सोऽपि तदा सोल्लासमभाषत 'महात्मनि चेत् पठनशक्ति र्विद्यते तदेदं पठ्यताम् ।' दानवस्तस्य कटिबन्धने—

"एकाघातेन वीरेण मया सप्त निसूदिताः ।"

इत्यवलोक्य परं विस्मयं भेजे; मनसीदं चिन्तितवांश्च 'अहो ! येनानेन पुरुषेण मारिताः सप्त मानवाः, वामनोऽपि नासौ साधारणबल इति तर्कयामि ।' ततः स नीचैरुवाच वीरवरं वीरबलम् । 'प्रकाश्यतान्तावत् अत्रभवता मदीयसविधे स्वकीयबलवत्ता । अयमहमेतत् पाषाणखण्डं करतलेन मुष्टिपेषं पिनष्मि, शक्तिश्चेत् त्वयाप्यपरं किञ्चित् पिष्यताम्" स तदानीं पाषाणपेषणमिषेण सहानीतं तं शुष्कं गुरुभारमपूपं स्वहस्तेन संचूर्ण्य दैत्यं समत्यर्थं विस्मापयामास । ततः पुनरपरं किमपि पाषाणखण्डं शून्यमार्गे निक्षिप्य स विशालवपुश्चण्डकर्म्मा तं पप्रच्छ "दृश्यतां दृश्यताम् प्रस्तरखण्डमिदं शून्येऽदृश्यतामेत्य भूमौ पुनर्निपतितम् । दीयतामीदृशी त्वयाऽपरा काचित् परीक्षा, ततस्तद्वचनात् वीरबलः प्रच्छन्नं तं शकुन्तकं मुष्टितले प्रस्तरखण्डमिव विधृत्याञ्जसा शून्यमार्गे परितत्याज । विहायसः स निमेषाद् विहायसि अदृश्यतां गतः न पुनर्भूमौ निपतितः । वीरबलस्तं सोपहासमिदमवादीत् 'तवेदं प्रस्तरखण्डं शून्यात् पुनर्निपतितम्, मम तु प्रस्तरखण्डमेतावद्दूरं देशं प्राप्तं यत् न पुनस्तत् कदापि प्रत्यावर्त्तिष्यते इति ।

भूयोऽपि तं परीक्षितुं भीमकर्म्मा दानवः छिन्नमूलमेकमश्वत्थं वोढुं तत्साहाय्यमयाचत । ततश्च तस्मिन् अल्पमतौ दानवे तस्य मूलदेशमुत्तोलयति चतुराग्रणीः स परोक्षं वृक्षस्याग्रशाखामालम्ब्य सुखेन गन्तुं प्रववृते । कियदध्वानमतिक्रम्य श्रान्तः क्लान्तश्च दैत्यः सनिर्वेदमुक्तवान् "भो भोः सहकारिन् ! परिश्रान्तेन मया तरुवरं मृत्तिकोपरि स्थाप्यते ।" ततो यावदसौ वृक्षं स्वस्कन्धाद् भूमौ निक्षिपति तावत् प्रागेव चतुर-चूडामणिः वृक्षाग्रभागादवतीर्य्य आत्मानं कृतकर्म्माणमिव प्रादर्शयत् । भृशं श्रान्तश्च दैत्यः दीर्घं निःश्वस्य सकर्म्माणं तमक्लिष्टमपरिश्रान्तञ्च संवीक्ष्य विस्मयमधिकतरं भेजे ।

ततः पुनरपि पूर्व्वस्यां दिशि परिक्रमतोस्तयोरेकः (चण्डकर्म्मा) वर्त्मनि वृक्षमेकं फलैः सुशोभितं शाखयाऽवनमय्य वीरबलं कथयति 'यथेच्छं भक्षयास्मात् सुभक्ष्यं फलनिचयम् ।" स च क्षुद्राकृति वीरबलो वृक्षाग्रभागं विधृत्य यावत् फल-भक्षणपर आसीत्तावदेवासौ वृक्षः द्रुतं तं सवेगं भ्रामयन् बहुदूरमपातयत् । क्षुद्राकारतया तु निर्व्यथः प्रत्यावृत्य स सगर्व्वं तं दानवमाजुहाव—"भो भो बन्धुवर ! किं त्वमेतादृग् जानासि वीरत्वपरिचायकं कर्म्म ?" दैत्यश्च जानाम्येवे"ति स्वीकृत्य यावत् स्वकीयशक्तिपरीक्षणे कृतयत्नो बभूव तावद् वपुषि कथञ्चिदाहत इव तस्य वीरवरस्य वीरत्वं बहुधा प्रशशंस ; प्रोवाच च "महात्मन् ! यदि भवताऽनु-कम्पयाऽद्य रजन्यां मद्भवनमलङ्क्रियेत तदा नितरामहं सुखी स्याम् ।" सूत्रधारसूतेन तु तदङ्गीकृतवति द्वावेव तौ दानवगृहं गह्वरमेकं प्रविष्टौ । तत्राऽपरेऽपि भीमवपुषो बहवो दानवाः समवर्त्तन्त । अथ नैशाशनं समाप्य सर्व्वे ते वीरबलस्य शय्यामेकां निर्द्दिदिशुः । अथार्द्धरात्रे गाढं प्रसुप्ते वीरबले चण्डकर्म्मा सहचरानाह 'भो भो-भ्रातरः ! बधोऽस्यावश्यमेवास्माभिर्विधातव्यः, नोचेद्वयमेवैकदाऽनेनाकाण्डे निहता भविष्यामः । पश्यतास्य कटिबन्धनस्य समुज्ज्वलं लेखम् ? "एकाघातेन वीरेण मया सप्त निसूदिताः ।" ततश्च निखिले तस्मिन् दानवगणे विस्मयमापन्ने स क्रूरधर्म्मा प्रचण्डमेकं लोहमुद्गरं तस्य प्रसुप्तस्याभ्यागतस्योपरि सबलं निचिक्षेप । किन्त्वहो-बत ! मुद्गरं तस्य द्विखण्डितं जातं, अभ्यागतस्य तु कियत् क्षतमपि न बभूव । स च शयन-समये दैत्यपरिमितं परित्यज्य प्रशस्तं शयन-स्थानं प्रागेवान्यत्र स्वल्पं निज-परिमितं गृहकोणमाश्रित्य प्रसुप्त आसीत् । प्रातर्गृह-परित्यागकाले दानवा जीवन्तमभ्यागतं समीपमायान्तं निरीक्ष्य नितान्तं चिन्तितमनसो बभूवुः । तस्यापूर्व्व-शक्तिप्रकाशवृत्तान्तं स्मृत्वा, कटिबन्धनलिखितान् वर्णनिचयांश्च पुनः पुनः पठित्वा सर्व्वे ते द्रुतं पलायिताः । निःसहायश्चण्डकर्म्माऽपि खण्डितमनाःताननुदुद्राव ।

ततो देशाद्देशान्तरं पर्य्यटन्नेकदा स कस्याश्चन राजधान्याः समीपतः किञ्चिदाश्रित्य वृक्षतलं अध्वखेदाद् गभीरं प्रसुप्तः । अथ तेन पथा गच्छन्तः कतिपये राजकर्म्मचारिणः प्रसुप्तस्य तस्य कटिबन्धने "एकाघातेन वीरेण मया-सप्त निसूदिताः ।" इति पठित्वा सविस्मयं राजानं विज्ञापयामासुः । राजा च तमाहूय सैन्याध्यक्षपदे नियुक्तवान् । सर्व्वे सैन्याः सम्भूय राजानं भीतभीता इव पप्रच्छुः "महाराज ! यो हि एकेनैवाघातेन सप्त जनान् निजघान, तादृशेन वीरेण सह कथं स्वल्पबला वयं कार्य्ये नियुक्ता भवेम ? विधीयतामत्र दयया तादृक् कश्चित्

साधुः परामर्शः येन उभयतः सदुपायो भवेत्, सर्व्वमेवैतत् समाकर्ण्य राजा चिन्तितवान् । यदि नवागतस्यैकस्य कारणतः प्राचीनानेतान् सुविश्वस्तान् भृत्यान् परित्यजेयम् तदा नहि भवेद् भद्रं क्वचित् । अतोऽयमेव परिहर्त्तव्यः । इत्थं सम्प्रधार्य्य स तमाहूय प्रोवाच—

"अत्र किल सन्निहिते भीषणारण्ये द्वौ भीमाकारौ दानवौ प्रतिवसतः । प्रतिदिनञ्च तौ समाक्रम्य अगण्यान् प्राणिनो निहतः। यदि केनापि जनेन तयोर्वधः सम्पादितः स्यात् तदाहं मम राज्यार्द्धं कन्यकाञ्च तस्मै प्रदास्यामि, इत्येवं मे सङ्कल्पः । यदि त्वमस्मिन् साहसी भवेस्तदाऽभियाहि, गृहाण च सहचरान् शतं सैन्यान् । बीरवलस्तत्र सम्मतिं प्रदर्श्य विनैव सैन्यान् तद्वनमुद्दिश्य प्रस्थितः । अथ यथास्थानमागत्य मन्दं निःशब्दञ्चोपसर्पन् स लघुवपु र्यदा तौ दैत्यौ प्रसुप्तौ व्यलोकयत् तदा वृक्षमेकं सुविशालमारुह्य लोष्ट्रमेकं तयोरेकस्य हृदयोपरि निचिक्षेप । स्वयं तु घनपत्रान्तराले अलक्षितोऽवर्त्तत । लोष्ट्राघातेन भग्ननिद्रो दैत्यः अपरमाकार्य्य कथयति स्म—"रे रे ! लोष्ट्रमिदं कुतो मम हृदयोपरि निपतितम् ?" अपरो ब्रवीति किंनु सुप्त इव प्रलपसि ? कुतोऽत्र रे मूढ़ ! लोष्ट्रपतनसम्भवः ?" इत्थं समालोच्य पुनरपि तौ निद्रावशतां गतौ । बीरबलः कौशलेन भूयोऽप्यपरमेकं वृहल्लोष्ट्रखण्डमन्यस्य मस्तकोपरि न्यपातयत् । तत्क्षणादेव जाग्रत् सः प्रागाहतवक्षसं दैत्यं सरोषमभाषत "रे रे नराधम ! कथमेतेन तावल्लोष्ट्रेण प्रतिहिंसा एव त्वया संसाधितेति पश्यामि ! किं त्वया मनसि कृतमहमेव तव वक्षसि पूर्व्वं लोष्ट्रं निक्षिप्तवानिति ?"

अथापरो रोषकषायितेक्षणः सक्रोधमगदत् कथं रे मिथ्याप्रजल्पक ! नराधम इति मां सम्बोधयसि? हुँ मृत्युस्ते सन्निहित एव प्रतीयते ; किं वेत्सि न मे बाहुबलम् ?" "ज्ञायते हि तव शठापसदस्य शाठ्यं बहुश एव ।" इत्थं तौ परस्परं बहुधा कठोरं सम्भाष्य संयुध्य च द्वावेव तत्र पञ्चत्वमुपागतौ । वृक्षादवतीर्य्य बीरबलः कर्त्तरिकया संच्छिद्य तयोर्मृतयोर्मस्तकद्वयं सर्व्वान् प्रदर्शयामास ।

ततः समागच्छति तस्मिन् राजनिकेतनं राजा स्ववाक्यपालनभिया पुनरपरं कार्य्यभारं तस्मै समर्पयामास । "यदि त्वं तत्रैव वनगहने घोराकारमेकं तीक्ष्णखड्गं गण्डकं निहन्तुं समर्थो भवेस्तदा तेऽर्द्धराज्यप्राप्तिः कन्यापाणिपीड़नञ्च सुगममेव" । एवं समादिष्टः स रज्जुपरशुहस्त एकक एव वनं गतः । दूराद्वीक्ष्य गण्डकस्तमुद्दिश्य द्रुतं परिधाव्य यदा तमाक्रमितु मुपक्रमते तदाऽसौ कुशलकर्म्मा

कस्य चित् स्थूलवृक्षस्य पश्चादात्मानं गोपयित्वा स्थितः । प्रकाण्डं वृक्षकाण्डं परितो यावदेष गण्डकस्तमनुमन्दधाति, सोऽपि वृक्षपरिभ्रमणायासेन तदाक्रमणादात्मानं रक्षति । इत्थं बहुधा चेष्टमानो गण्डको जातक्रोधः गात्रज्वालया स्वकीयखड्गं तत्रैव वृक्षकाण्डेऽकाण्डे सबलं प्रवेशयामास । दृढ़लग्नं तु तं खड्गं न स तस्मात् पुनरुन्मोचयितुं समर्थो जातः । वीरबलस्तदानीं रज्ज्वा तस्य गलदेशं वृक्षेण सह संबध्य परशुना खड्गं छित्वा खड्गिनमेतादवस्थं राज्ञे प्रदर्शयामास ।

राजा तं पुनरपरमपि कार्य्यं मन्दिदेश 'गच्छ वन्यमेकं वराहं जहीति" शिरसा राजादेशं संगृह्य स वनमध्ये कस्यचिद् मन्दिरस्य समीपतस्तस्थौ । शूकरोऽदूरात् घनघोरगर्ज्जनं कुर्व्वाणस्तीव्रं तमुद्दिश्याधावत् । स च क्षुद्राकृतिर्वीरबलस्तस्य मन्दिरस्य केनचिद् गवाक्षद्वारेण सवेगं निर्जगाम । शूकरोऽपि यदा तेनैव गवाक्षद्वारेण निर्गन्तुकाम आसीत्तदानीं स निमेषात्तत: प्रत्यावृत्य तस्य मन्दिरस्य बहिर्द्वारमावृत्य च सजीवमेव तं राज्ञे दर्शयामास । प्रतिज्ञाभङ्गभिया वीरबलवीरत्वभिया वा महीपालोऽपरूपरूपलावण्यमयीं राजकुमारीं तस्मै एव रूपहीनाय वामनाय प्रयच्छन् मनसा निर्वृतिं नाजगाम । रात्रौ स्वामिना सह प्रसुप्ता राजकुमारी "सूत्रं छिन्नं, काष्ठञ्च भग्नं, अहो कथमेतत् काष्ठासनं निर्म्मास्यामि ।" इत्येवं सूत्रधारवंशजमिव स्वामिनं प्रलपन्तं श्रुत्वा सा प्रभाते सर्व्वं तत् पित्रे निवेदयामास । राजा तदा मन्त्रिभिर्मन्त्रयित्वा 'अद्यैव रजन्यां गुप्तघातुकेन नीच मेतं सूत्रधार सुतं घातयामि, सजीवं वा तं शूले प्रयच्छामि''इति सर्व्वान् समादिदेश । तेषु कश्चिद् वीरबलबन्धुः सर्व्वमेतद् वीरबलाय प्रकाशितवान् । ततश्च स रात्रौ निद्राव्याजेनैवं प्रलपितुमुपचक्रमे—"सप्त येन हताः पूर्व्वं ततो दैत्यौ विभीषणौ ।

गण्डकश्च वराहश्च येनैतौ भीषणौ हतौ ।

स किं बिभेति राज्येऽस्मिन् राजसैन्येभ्य उच्चकैः ?"

श्रुत्वेमं तस्य सुप्तिप्रलापं सर्वे ते बहिर्द्वारस्थाः सशस्त्रा गुप्तघातुकाः भीताः सन्त्रस्ताश्च तूर्णं तस्मात् पलायिताः । सोऽपि तत आरभ्य राजपुत्र्या सह तत्र सुचिरं सुखमुवास ।

---

# सुदर्शनोपाख्यानम् ।

## पञ्चमोऽंशः ।

द्वितीयभागस्य १६३ पृष्ठतोऽनुवृत्तम् ।

लेखकः—श्रीयुक्तचारुचन्द्रराय-चतुर्धुरी बि. एल्. ।

एवं सुदर्शनस्तवेन परितुष्टा जगदम्बिका तमुवाच—"भो महाभाग ! त्वमयोध्याधिपतेर्ध्रुवसन्धेः पुत्रोऽसि, अयोध्यां गत्वा पितृसिंहासनमधिष्ठाय यथाविधि राज्यं परिपालय । तत्र त्वं प्रेमभक्तिपरायणः नवरात्रविधानेन मम पूजां कर्त्तुं कदाचिदेव विस्मरेः । मत्प्रसादात् तव राज्ये कल्याणं भविष्यति ।"

इत्युक्त्वा दुर्गादेवी अन्तर्दधे । तत्र समागताः सर्व्वे नृपाः सुदर्शनं प्रणम्य ऊचुः—"भो अयोध्याधिपते ! वयं सर्व्वे तव शासने सम्यगवतिष्ठामहे, त्वमस्माकं सर्व्वेषां रक्षिता भवितुमर्हसि, भो महाराज ! महीतले त्वं धन्यः कृतकृत्यो बहुपुण्यश्चासि, त्वत्कृते आद्याशक्ति भगवती धरातले प्रादुर्भूता । वयं सर्व्वे मूढाः सर्व्वदा धनदारसुतानां चिन्तने मग्ना भक्तिहीनाश्च ; भवरोगपीड़ितानस्मान् त्वं कृपया देवीमाहात्म्यं कथयितुमर्हसि ।"

सुदर्शन उवाच—"भो नृपसत्तमाः ! ब्रह्मादयो देवगणा अपि तस्या माहात्म्यं कथयितुं न शक्नुवन्ति, किं पुनर्मद्विधो जनः । सा आद्या परमा प्रकृतिः जगत्कारणस्वरूपा महालक्ष्मीर्मुक्तिहेतुः । सा पालनकार्य्ये सत्त्वरूपा, सृष्टिकार्य्ये रजोरूपा संहारकार्य्ये तमोरूपा च । सा सर्व्वकामफलप्रदा निर्गुणा च ब्रह्मादीनां सर्व्वेषां कारणस्वरूपा चतुर्वर्गफलप्रदा । निर्गुणा सा योगिभिरपि ज्ञातुमशक्या । तस्माद् बुधास्तां सगुणां च सुखसेव्यां सर्व्वदा सेवन्ते ।"

सर्व्वे नृपाः तन्निशम्य भक्तियुक्ताः सन्तः स्वगृहाणि प्रतिजग्मुः । ततो धर्म्मात्मा सुदर्शनोऽपि सपत्नीकः सहमातृकश्च रथगजादिपरिवृतः यथायोग्यमयोध्यां जगाम । तत्र प्रकृतयः सर्व्वा उपायनपाणयः ध्रुवसन्धिसुतं दृष्ट्वा परं मुदमापन्नाः । सुदर्शनः अयोध्यां गत्वा आदौ शत्रुजिन्मातु लीलावत्याः सकाशं गत्वा तां प्राह—"मातस्ते पिता पुत्रश्च युधाजित् द्वौ रणे दुर्गादेव्या हतौ । अवश्यम्भाविभावेषु प्रतिकारो न विद्यते । त्वं मृतपुत्रस्य हेतोः शोकं मा कुरु । सर्व्वे जीवाः स्वकर्म्मवशगाः सुखासुखानि भुञ्जते । पूर्व्वजन्मार्जितं

शुभाशुभं स्वकृतकर्म्मफलमवश्यमेव भोक्तव्यम्। इदं सर्व्वं दैवाधीनं न कथमपि आत्माधीनम्। मम मातामहे मृते यदाहं मात्रा सह वनं गतः, तदाहं स्वकृतं कर्म्म अवश्यमेव भोक्तव्यमिति चिन्तयन् नैव दुःखार्त्तोऽभवम्। तदा भयातुरा मे जननी बालपुत्रं मां गृहीत्वा वनमापन्ना, तत्र दस्युभिः सर्व्वं पाथेयं लुण्ठितम्; निराश्रया वस्त्रमात्रावृता सा बहुकष्टेन भरद्वाजाश्रमं प्राप्ता। वयं तत्र मुनिभिर्मुनिपत्नीभिश्च कृपया फलनीवारादिभिः पोषिताः। तदा मे मनसि किमपि दुःखं नासीत्, न चाद्य राजकोषाधिकारेऽपि मम सुखमस्ति। मम मनसि कदाचित् वैरं मात्सर्य्यं वा नासीत्। नीवारभक्षणं राजभोगात् श्रेष्ठम्, नीवाराशनः कश्चिन्नरकं न याति, राजभोगाशी तु नरकं याति। धीमान् पुरुषः सर्व्वथा जितेन्द्रियः धर्म्ममाचरेत्। सर्व्वाणि भूतानि नूनं आहारादिसुखं भुञ्जते, दुर्लभं मानुषं जन्म प्राप्य चतुर्वर्गप्रदमन्ययोनिषु दुर्लभं धर्म्मसाधनं सुधीभिरवश्यमेव कर्त्तव्यम्।"

लीलावती एवं मधुरं सुदर्शनवचनं श्रुत्वा अतिलज्जिता तमुवाच—"वत्स! मम पिता पुत्रश्च स्वकृतेनैव कर्म्मफलेन मृतौ, अहं तादृशं पुत्रं न शोचामि। परन्तु तत्कृतमेव स्मृत्वा शोचामि। वत्स! त्वयि मम क्रोधो वा शोकः कोऽपि नास्ति। देवीप्रसादेन त्वमिदं निष्कण्टकं राज्यं प्राप्तवान्, यथासुखं राज्यं कुरु, प्रजाश्च पालय।"

सुदर्शनस्तदाकर्ण्य सर्व्वान् मन्त्रिणः दैवज्ञांश्च आहूय "आदौ देवीस्थापनं पश्चात् राज्यं करिष्यामी" ति मन्त्रयित्वा शिल्पिभिः मनोहरं प्रासादं प्रतिमाञ्च कारयित्वा शुभे दिने च मुहूर्त्ते सुवर्णमये सिंहासने देवीं स्थापयामास। प्रेमभक्तिपरायणः स राजा देव्या नानाविधां पूजाञ्चकार। शरत्काले वसन्ते च नवरात्रविधानेन तस्या विशेषपूजाञ्च भक्तिपूर्व्वकञ्चकार। यथा रामस्य दिलीपस्य रघोश्च राज्ये धर्म्मतः प्रजापालनं प्रजानाञ्च सुखमासीत्, धर्म्मात्मनः सुदर्शनस्य राज्ये तथा प्रजानां सुखमभवत्। केषाञ्चिन्मनः नैवाधर्म्मे प्रवर्त्तितमासीत्, वर्णाश्रमाणाञ्च धर्म्मश्चतुष्पदासीत्, एवं सुदर्शनोऽयोध्यायां देवीप्रसादात् सुखेन धर्म्मेण च राज्यं पालयामास।

काशीपतिः सुबाहुरपि काश्यां देवीपूजाप्रतिष्ठार्थं प्रासादं शुभां प्रतिमां च कारयित्वा भक्तियुतःविश्वेश्वरस्य यथा, तथा विधानेन दुर्गापूजां प्रतिष्ठितवान्। तत्र देवीभक्तिपरायणाः सर्व्वे जना नवरात्रेषु ध्यानजपपरायणा आग-

मेक्तिः स्तोत्रादिभिर्यथाविधि देव्या विशेषपूजनं हवनं यागं च चक्रुः। मुक्तिपुर्य्यां वाराणस्यां प्रतिष्ठिता सा दुर्गादेवी सुविख्याता।

एवमयोध्यायां काश्यां च देवीस्थापनमासीत्।

इति सुदर्शनोपाख्यानं समाप्तम्।

---

## षट्पदीविवरणम्।

### पञ्चांगनिर्णयाभिधव्याख्यासनाथम्।

२य वर्षीयचतुर्थखण्डस्य २२८ पृष्ठतोऽनुवृत्तम्।

महामहोपाध्यायश्रीयुक्तजगन्नाथमिश्रतर्कदर्शनतीर्थेन।

अथावसरप्राप्तां श्रद्धां व्युत्पादयितुकामस्तस्या निर्वचनमाह, गुरूपदिष्टे इत्यादि,

षट्पदीविवरणम्—गुरूपदिष्टे निखिलेऽर्थजाते
संप्रत्ययो वेदशिरोऽधिगम्ये।
श्रद्धां बुधाः प्राहुरिमामबोध-
भ्रमोपजीव्यं व्यतिरेकमस्याः॥ ५६॥

गृणाति लौकिकमलौकिकं च हितमनुशास्तीति गुरुराचार्य्यः, तेन उपदिष्टे अनुशिष्टे, अनुशासनमेव व्यनक्ति, वेदशिरोऽधिगम्ये इति, वेदान्तप्रतिपाद्ये, निखिले अर्थजाते प्रपञ्चमिथ्यात्वब्रह्मसत्यत्वानन्दत्वादिरूपे मुमुक्षुभिरवश्यं प्रतिपत्तव्ये विषयजाले, संप्रत्ययो, य इत्यादिः, यः संप्रत्ययो विश्वासः इदमित्थमेवेत्यवधारणात्मा विश्रम्भः, बुधास्तत्त्वदृशः, इमामेतल्लक्षणां श्रद्धामाहुरित्यर्थः। स्यादेतत्, यदि श्रद्धा बोधोपयोगितामश्नुवीत, नत्वेवम्, विनापि श्रद्धां स्वतो बोधकतारूपशक्तियुजां वेदान्तवाक्यानां श्रवणमात्रेणैवार्थे बोधसम्भवादित्याशंकां निवर्त्तयितुं व्यतिरेकमुखेन तदुपयोगं विगमयति, अबोधेत्यादिना, अस्याः श्रद्धायाः व्यतिरेकमभावं अबोधभ्रमोपजीव्यं, अबोधोऽज्ञानं, भ्रमो विपर्य्ययः मिथ्याज्ञानमिति यावत्। तयोरुपजीव्यम्, निमित्तमाहुरित्यन्वयः। अयम्भावः, गुरुवेदान्तवाक्येषु विश्वासः श्रद्धेति संप्रदायसिद्धं लक्षणम्। विश्वासश्च तदभिधित्सितवस्तुन्येदमित्थमप्रतिपत्तिः, तेषु फलावश्यम्भावनिश्चयो वा, सा च मुमुक्षूणां श्रवणसिद्धये ऽवश्यमुपादेया, यतोऽसत्यामुक्तलक्षणायां श्रद्धायां श्रुतमश्रुतमिवान्यथाश्रुतमिव च प्रतिपद्यमानं कदाचिदज्ञानाय मिथ्याज्ञानाय

वा प्रभवेत् सर्वथा यथार्थाधिगतिबन्ध्यमेव प्रसज्येत । नच सहकारिवैधुर्य्ये प्रतिबन्धकोपनिपाते वा सत एव कार्य्योपजननसामर्थ्यस्य वन्ध्यता सम्भाविताऽऽपतेत् न तु अपरसामर्थ्यान्तरमनेन मिषेणाभ्युपगन्तु मुचितमिति वाच्यम् । अस्मन्मतेऽचिन्त्यानिर्वाच्यमायोपादाननिबन्धनस्य प्रपञ्चे यावदुपपन्नकार्य्योपजननसामर्थ्यस्तोमस्यानागन्तुकत्वोपगमात् । उद्भवानुद्भवयोः कार्य्यार्जनानर्जनप्रयोजकयोः परं सहकारिसमवधानासमवधानाधीनतया कादाचित्कत्वौचित्यात् । अतएव दावाग्निदग्धस्य वेत्रबीजस्य कदलीकाण्डप्ररोहजनकत्वं भस्मकदुष्टस्य चौदर्य्यस्य वह्नेर्बहन्नपचनहेतुत्वं तत्र तत्रोपगम्यमानमुपपद्यत इति दिक् । अत्र लिखितपाठादितः स्वतोऽनाप्तपुरुषान्तरव्याख्यानादिना वा गृहीतेऽर्थे गतानुगतिकतावारणाय 'गुरूपदिष्टे' इत्युक्तम् । न च गुरूणामपि कदाचिदनाप्तानां सम्भवात् श्रौतार्थविप्लवस्तावताऽपि तुल्यवत्प्रसज्यत इति वाच्यम् । यथावत् श्रौतार्थदर्शिन एवात्र गुरुपदेन विवक्षितत्वात्, शास्त्रे च तादृशस्यैवाचार्य्यकरणानुशासनात्, "समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठ" मित्याद्युपगमनश्रुत्या श्रुतिपरिशीलनजन्मनो ब्रह्मभूयस्य गुरुपदार्थतावच्छेदकतायाः स्पष्टमुक्तत्वाच्च । श्रुतौ श्रोत्रियशब्देन त्रैवर्णिकस्यैव ब्रह्मात्मदर्शिन उपादानाज्जन्मान्तराधीतवेदान्तादवगतिपर्य्यन्तस्येह जन्मनि ब्रह्मज्ञानस्य क्वचिद् विदुरादिवत् सम्भवेऽपि शूद्रात् श्रवणप्रतिषेधः सूचितः, कृताध्ययनादपि प्रत्यगानधिगततत्त्वाद् युञ्जानयोगिनः श्रवणं मा प्रमादीदिति ब्रह्मनिष्ठत्वग्रहणम् । तेना"न्धेनैव नीयमाना यथान्धा" इत्याद्युपपन्नतरं भवतीत्यपि सूचितम् । किं चा"चार्य्यवान् पुरुषो वेद" इत्यत्राचार्य्यपद, मनूक्तदिशा "उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः, सकल्पं सरहस्यं च तमाचार्य्यं प्रचक्षते" इत्युक्तलक्षण उपनयनपूर्वकसकल्पसरहस्यवेदाध्यापयितरि द्विजे, न पर्य्यवस्यति, तथा सति पूर्वोदाहृतश्रुतिगतगुरुशब्देन सह तस्य तुल्यार्थत्वासम्भवेन श्रुत्योर्विरोधाद्विकल्पः प्रसज्येत, नच तत्रत्य गुरुशब्दोऽपीदृशमेवाचार्य्यत्वमभिधत्त इति शक्यं वक्तुम्, तथासति शुकादेः श्रवणार्थितया जनकाद्युपसत्तिः श्रूयमाणा विरुध्येत, नहि शुकादयो जनकादिनोपनीताः, न वास्त्यधिकारो जनकादेः क्षत्रियजन्मनो वेदस्य सकल्पसरहस्यतयाऽध्यापने, येन तेषामाचार्य्यत्वं मनूक्तं कल्पयितुं पार्य्येतापि । किं तर्हि "आचिनोति च शास्त्रार्थमाचारे स्थापयत्यपि । स्वयमाचरते यस्मादाचार्य्यस्तेन चोच्यत" इत्युक्तरूपमेवाचार्य्यत्वमभिप्रैति, दर्शिता आचार्य्यवानि-

त्यादि श्रुतिः, तथा च गुरुशब्देन समानार्थत्वस्यानतिशंकनीयतया तद्वशेन जनकादेः श्रवणश्रुतिर्न विरुध्यत इतिध्येयम्। एवं चात्रैवर्णिकस्यापि मुमुक्षया श्रवणं मा प्रसांक्षीदित्येतदर्थं वेदशिरोऽधिगम्ये इत्यप्यनुसंहितं मन्तव्यमितरथाऽधीतवेदानामेव कृतसन्न्यासानां श्रवणाधिकारनियमो न सिद्ध्येदेव। तथाच गुरुभिर्वेदान्तवाक्येषु श्राविततेषु तेष्वेव श्रद्दधाना मुमुक्षवो विचाराय घटेरन् आब्रह्मात्मैक्यसाक्षात्कारमित्येतावानेव नियमोऽत्र वाचोभंग्या दर्शितः। यद्यपि सर्वेषां वेदान्तवाक्यानामद्वितीये ब्रह्मणि तात्पर्य्यं न त्वन्यत्रेति कथ "मर्थजाते" इति जातग्रहणमवकल्पते इत्युच्यते, तथापि यैरर्थैर्विना नाद्वैतब्रह्मणः संप्रतिपत्तिः शक्योत्पादा, तेऽप्यर्था द्वैतमिथ्यात्वमायोपादानत्वसदन्वयित्वादयोऽवश्यं तत्र तत्र श्रुतिवाक्येषु प्रतिपिपादयिषितव्याः, अरुन्धतीदर्शनन्यायेनोपायोपेयभावस्य प्रतिपिपादयिषायां तन्त्रत्वादतिप्रसंगभंगात्, नहि गां प्रतिपादयितुमुपक्रममाणस्य सास्नादिमत्तादिराकृतिरविवक्षितेति शक्यं वक्तुम् आकृत्यादेर्व्यक्तिप्रतिपादनोपायत्वेनावश्यकत्वात्, वस्तुतो देवताधिकरणसिद्धान्तोक्तन्यायेन ब्रह्मात्मनि यथावदवबोध्यमाने जगन्मिथ्यात्वादयोऽनायासेनैव बोधिता भवन्ति, नतु ते स्वबोधार्थमधिकां विवक्षामपेक्षन्तेऽतो मुमुक्षुप्रयोजनानंगत्वेऽपि तेषां ज्ञानं वेदान्तेषु न दुर्लभमिति ध्येयम् ॥ ५६ ॥

तदेव वैदिकलौकिकनिदर्शनोपन्यासद्वारेण समर्थयितुमुपक्रमते अश्रद्दधानस्येत्यादिना द्वयेन।

षट्पदीविवरणम्—अश्रद्दधानस्य यथा क्रियाभिः

> कार्य्यं न किंचित् क्रियते कदाचित्।
> धीसाधनान्यप्यदृढानि तद्वद्
> बोधं न तत्त्वे जनयन्ति जातु ॥ ५७ ॥

अश्रद्दधानस्य श्रद्धाविरहितस्य पुरुषस्य, क्रियाभिः स्ववर्णाश्रमोचिताभिः अग्निहोत्रादिलक्षणाभिः, कदाचित्—क्रियायाः समकालमुपरमोत्तरकालं वा, कार्य्यमपूर्वरूपं स्वर्गादिप्रयोजनरूपं वा, किंचित्, किंचिदपि न क्रियते जनयितुं न शक्यते, तद्वत् तथैव, धीसाधनानि श्रवणमननादीनि, अत्रापि अश्रद्दधानस्येत्यनुषज्यते, तदेवाभिप्रेत्याह-अदृढानीति, श्रद्धालक्षणसहकारिवैधुर्य्येण मूलशैथिल्यभाञ्जि, अप्रतिष्ठितानीति यावत्। जातु कश्चित्, तत्त्वे विषये, बोधं साक्षात्कारं न जनयन्तीत्यन्वयः। एतदुक्तं भवति, कर्मयोग इव ज्ञानयोगेऽपि श्रद्धा, साध-

नानां सामर्थ्यं सम्पादयन्ती परमा सहकारिणी अभ्युपेयते । तथाहि भगवता गीतायां "श्रद्धाविरहितं चैव तामसं परिचक्षते" इत्यनेन श्रद्धारहितस्य तप आदेः कर्मणस्तामसत्वमुक्त्वा "अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् । असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह" इत्यादिना श्रद्धाविरहिणा कृतस्यासाधुत्वमकृतकल्पत्वमुभयत्र फलाभावमुखेन प्रतिपादयता कर्मयोगे श्रद्धाया आवश्यकत्वमुपपादितम् । युक्तं चैतत्, लोकेऽपि हि वक्तुराप्तत्वे तद्वचनस्य च प्रामाण्ये विचिकित्समानो शब्दैकबोधनीयप्रक्रियासम्पादने क्रियाफले विमुखो वा भवेत् कथंचिद् भयादनुरोधादेर्वा निमित्तात्प्रवर्त्तमानोऽपि साधनसाद्गुण्यनियमानुपपत्त्या विफलप्रयासो वा, सर्वथा नैकान्तिकसिद्धिः स्यात्, तथैव शब्दैकप्रमाणके मन्त्रादिलक्षणशब्दसाधने च वैदिके कर्मणि श्रद्धामन्तरेण न कथमपि सिद्धिप्रत्याशा सम्भविनी, शास्त्रस्यास्तिकाधिकृतत्वात् श्रद्धाविरहेऽधिकारानुपपत्तौ शास्त्रीयेऽर्थेऽनधिकृतस्य कर्त्तुर्वैगुण्येन क्रियाफलनिष्पत्त्ययोगात् । किं च यदुत्कर्षापकर्षाभ्यां यस्येहोत्कर्षापकर्षौ प्रमाणसिद्धौ तत्तस्य कारणं तत्तस्य कार्य्यमिति नियमो नानेकान्तः, वह्न्युत्कर्षापकर्षाभ्यां धूमस्य, दुग्धोत्कर्षापकर्षाभ्यां दध्नस्तन्तुसंयोगाद्युत्कर्षापकर्षाभ्यां च पटस्योत्कर्षापकर्षावनन्यथासिद्धाविति तादृशव्याप्तौ व्यभिचारादर्शनात् । एवं च श्रद्धामान्द्ये क्रियासिद्धावपकर्षस्येव तदुत्कर्षे तत्समृद्धेरानुभविकतया यद्विशेषयोरितिन्यायेन च क्रियासामान्ये श्रद्धासामान्यस्य शब्दैकप्रवृत्तव्यवहारात्मके लौकिकेऽपि हेतुत्वस्य कल्पनार्हतया तत्सामान्येन वैदिकेऽपि कर्मणि तद्हेतुत्वमनायासेन सिद्ध्यति, भगवताऽपि श्रद्धात्रयविभागमुखेन कर्मणः साद्गुण्यासाद्गुण्ये प्रदर्शयतोपदर्शितव्याप्तिबलेनोक्तन्यायेन च वैदिके कर्मणि श्रद्धाया हेतुत्वस्य प्रसाधितत्वात् । यदाचापूर्वद्वारेण परलोकादिफलेऽपि यागादिकर्मणि श्रद्धाया अनन्यथासिद्धत्वमस्ति, तदा कैव कथा साक्षादिहापि जन्मनि कृतश्रवणस्य कदाचिदप्रतिबद्धं स्वात्मावगतिपर्य्यवसायिनि शमदमादिसाधनस्तोमे श्रवणांगतया श्रद्धाया उपयोगः सुतरामपवादं नार्हतीति ॥५७॥

षट्पदीविवरणम्—उप्तानि बीजानि यथोषरायां

प्ररोहवन्ध्यानि भवन्ति भूमौ ।
भवेदविश्वासविपाक्तचित्ते
तत्त्वोपदेशो विफलोऽध्रुवश्च ॥ ५८ ॥

लौकिकेनापि दृष्टान्तेन तमेवार्थं समर्थयति—उप्तानीति, उषरायां क्षार-

प्रधानायां भूमौ क्षेत्रे, उप्तानि बीजानि यथा प्ररोहवन्ध्यानि अंकुरजननासमर्थानि भवन्ति, तथाऽविश्वासविषाक्तचित्ते अविश्वास एव विषम् प्रमादित्वात् तेनाक्तमुल्वणं चित्तं यस्य तादृशे पुरुषे प्रतिपाद्य इति शेषः, तत्त्वस्य यथावस्थितस्य वस्तुनः सदद्वैतादेः उपदेशः अप्रतिपन्नप्रतिबोधनात्माव्यापारः, विफलोऽधिगत्यनुपधायकः वन्ध्य एव भवेत्, वन्ध्यस्यापि चेत् तादृशे प्रतिपाद्ये तथाविधस्य सुस्थितिस्तदा कुतस्तरामुषरोप्तबीजसादृश्यमस्य, बीजस्येवोषरायामल्पेनैव तु कालेन स्वरूपप्रणाशं प्रयाक्तत्वादत आह—अध्रुवश्चेति ।

अयमाशयः—यथा क्षारप्रधाने क्षेत्रे बीजान्युप्तमात्राणि विलीयन्ते, न पुनरंकुरप्ररोहाय जातु प्रभवन्ति । तथाऽश्रद्धादोषविषावसेकावशोषितनिःशेषरसस्वान्तेषु प्रतिपाद्यमानपुरुषेषु तत्त्वोपदेशाः सहस्रमपि अवणेऽवधाननियमानुपपत्त्याऽनुत्पन्नस्वरूपा वा कदाचिदुत्पन्नप्रध्वंसिनो वा स्युः सर्वथाऽऽत्मप्रतिपत्तिवन्ध्या एवेति । अत्र च निदर्शनेऽङ्कुराप्रभवित्वं बीजानां स्वरूपप्रणाशात्क्वचिज्जननशक्त्यपक्षयाच्चेत्युभयथाऽपि सम्भवात्तदुभयप्रकारप्रतिसन्धाननिबन्धनस्य दार्ष्टान्तिके अध्रुवश्चेत्यधिकानुसन्धानस्य नोपमानोपमेयभावव्याघातकरत्वमित्यवधेयम् ॥५८॥

भवेदेतदेवम्, यदि हि वस्तुशक्तिः कदाचिदाध्यात्मिकं सत्कारमपेक्षते, तथा सति निष्प्रतिबन्ध एव हिरण्यरेता सत्यपीन्धनसंप्रयोगे पुरुषेणावज्ञातः कदाचिन्न निर्दहेत्, नवा शीततरपाथःसंप्लुतान्यंगानि पुरुषधृतिगृहीतानि न वेपेरन्नच जडीभवेयुः । अतः श्रद्धावैधुर्येऽपि समाहितश्रोतृचेतःसमवधानप्रवृत्तस्तत्त्वोपदेशः कथंनामात्मलाभाय न प्रभवेत् ? कथं वा स्वार्थाधिगतिं नोत्पादयेत् एतस्य तदेकस्वभावत्वात् इत्याशंकामपनयति, अप्रामाण्यमित्यादिना—

षट्पदीविवरणम्—अप्रामाण्यममुष्य शंकितुमलं पुंदूषणोत्प्रेक्षया
प्रामाण्ये निरपेक्षतां प्रवदतां पक्षेऽपि युक्ता ततः ।
श्रद्धैवावति याऽवधूतपुरुषागःशंकमंकागताम्
जिज्ञासां जननी सुतामिव तथा बोधं यथा तत्सुतम् ॥ ५९ ॥

अमुष्य तत्त्वोपदेशस्य, पुंदूषणोत्प्रेक्षया पुंसां प्रवक्तृपुरुषाणां दूषणानि भ्रमप्रमादविप्रलिप्साकरणापाटवादिरूपाणि, तेषामुत्प्रेक्षा समूहनमाक्षेपः समारोप इति यावत् तया हेतुभूतया अप्रामाण्यं भ्रमजनकत्वं शंकितु मलं प्रसञ्जयितुं प्रभवेत्, श्रोतारिति शेषः । ननु बोधकत्वरूपं प्रामाण्यं शब्देषु साहजिकमेव, अबाधितार्थाधिगमहेतुत्वरूपमपि प्रामाण्यं स्वतः प्रामाण्यवादे सुग्रहमेवेति कुतस्तरां शंका-

कस्य चित् स्थूलवृक्षस्य पश्चादात्मानं गोपयित्वा स्थितः । प्रकाण्डं वृक्षकाण्डं परितो यावदेव गण्डकस्तमनुमन्दधाति, सोऽपि वृक्षपरिभ्रमणायासेन तदाक्रमणादात्मानं रक्षति । इत्थं बहुधा चेष्टमानो गण्डको जातक्रोधः गात्रज्वालया स्वकीयखड्गं तत्रैव वृक्षकाण्डे ऽकाण्डे सबलं प्रवेशयामास । दृढ़लग्नं तु तं खड्गं न स तस्मात् पुनरुन्मोचयितुं समर्थो जातः । बीरबलस्तदानीं रज्ज्वा तस्य गलदेशं वृक्षेण सह संबध्य परशुना खड्गं छित्वा खड्गिनमेतावदवस्थं राज्ञे प्रदर्शयामास ।

राजा तं पुनरपरमपि कार्य्यं मन्दिदेश 'गच्छ वन्यमेकं वराहं जहीति'' शिरसा राजादेशं संगृह्य स वनमध्ये कस्यचिद् मन्दिरस्य समीपतस्तस्थौ । शूकरोऽदूरात् घनघोरगर्ज्जनं कुर्व्वाणस्तीव्रं तमुद्दिश्याधावत् । स च क्षुद्राकृतिर्बीरबलस्तस्य मन्दिरस्य केनचिद् गवाक्षद्वारेण सवेगं निर्जगाम । शूकरोऽपि यदा तेनैव गवाक्षद्वारेण निर्गन्तुकाम आसीत्तदानीं स निमेषात्ततः प्रत्यावृत्य तस्य मन्दिरस्य बहिर्द्वारमावृत्य च सजीवमेव तं राज्ञे दर्शयामास । प्रतिज्ञाभङ्गभिया बीरबलबीरत्वभिया वा महीपालोऽपरूपरूपलावण्यमयीं राजकुमारीं तस्मै एव रूपहीनाय वामनाय प्रयच्छन् मनसा निर्वृतिं नाजगाम । रात्रौ स्वामिना सह प्रसुप्ता राजकुमारी "सूत्रं छिन्नं, काष्ठञ्च भग्नं, अहो कथमेतत् काष्ठासनं निर्म्मास्यामि ।" इत्येवं सूत्रधारवंशजमिव स्वामिनं प्रलपन्तं श्रुत्वा सा प्रभाते सर्व्वं तत् पित्रे निवेदयामास । राजा तदा मन्त्रिभिर्मन्त्रयित्वा 'अद्यैव रजन्यां गुप्तघातुकेन नीच मेतं सूत्रधार सुतं घातयामि, सजीवं वा तं शूले प्रयच्छामि''इति सर्व्वान् समादिदेश । तेषु कश्चिद् बीरबलबन्धुः सर्व्वमेतद् बीरबलाय प्रकाशितवान् । ततश्च स रात्रौ निद्राव्याजेनैवं प्रलपितुमुपचक्रमे—"सप्त येन हताः पूर्व्वं ततो दैत्यौ विभीषणौ ।

गण्डकश्च वराहश्च येनैतौ भीषणौ हतौ ।

स किं बिभेति राज्येऽस्मिन् राजसैन्येभ्य उच्चकैः ?"

श्रुत्वेमं तस्य सुप्तिप्रलापं सर्वे ते बहिर्द्वारस्थाः सशस्त्रा गुप्तघातुकाः भीताः सन्त्रस्ताश्च तूर्णं तस्मात् पलायिताः । सोऽपि तत आरभ्य राजपुत्र्या सह तत्र सुचिरं सुखमुवास ।

# सुदर्शनोपाख्यानम् ।

## पञ्चमोऽंशः ।

द्वितीयभागस्य १६३ पृष्ठतोऽनुवृत्तम् ।

लेखकः-श्रीयुक्तचारुचन्द्रराय-चतुर्धुरी बि. एल्. ।

एवं सुदर्शनस्तवेन परितुष्टा जगदम्बिका तमुवाच—"भो महाभाग ! त्वमयोध्याधिपतेर्ध्रुवसन्धेः पुत्रोऽसि, अयोध्यां गत्वा पितृसिंहासनमधिकृत्य यथाविधि राज्यं परिपालय । तत्र त्वं प्रेमभक्तिपरायणः नवरात्रविधानेन मम पूजां कर्त्तुं कदाचिन्नैव विस्मरेः । मत्प्रसादात् तव राज्ये कल्याणं भविष्यति ।"

इत्युक्त्वा दुर्गादेवी अन्तर्दधे । तत्र समागताः सर्व्वे नृपाः सुदर्शनं प्रणम्य ऊचुः—"भो अयोध्याधिपते ! वयं सर्व्वे तव शासने सम्यगवतिष्ठामहे, त्वमस्माकं सर्व्वेषां रक्षिता भवितुमर्हसि, भो महाराज ! महीतले त्वं धन्यः कृतकृत्यो बहुपुण्यश्चासि, त्वत्कृते आद्याशक्ति भगवती धरातले प्रादुर्भूता । वयं सर्व्वे मूढ़ाः सर्व्वदा धनदारसुतानां चिन्तने मग्ना भक्तिहीनाश्च ; भवरोगपीड़ितानस्मान् त्वं कृपया देवीमाहात्म्यं कथयितुमर्हसि ।"

सुदर्शन उवाच—"भो नृपसत्तमाः ! ब्रह्मादयो देवगणा अपि तस्या माहात्म्यं कथयितुं न शक्नुवन्ति, किं पुनर्मद्विधो जनः । सा आद्या परमा प्रकृतिः जगत्कारणस्वरूपा महालक्ष्मीर्मुक्तिहेतुः । सा पालनकार्य्ये सत्त्वरूपा, सृष्टिकार्य्ये रजोरूपा संहारकार्य्ये तमोरूपा च । सा सर्व्वकामफलप्रदा निर्गुणा च ब्रह्मादीनां सर्व्वेषां कारणस्वरूपा चतुर्वर्गफलप्रदा । निर्गुणा सा योगिभिरपि ज्ञातुमशक्या । तस्माद् बुधास्तां सगुणां च सुखसेव्यां सर्व्वदा सेवन्ते ।"

सर्व्वे नृपाः तन्निशम्य भक्तियुक्ताः सन्तः स्वगृहाणि प्रतिजग्मुः । ततो धर्म्मात्मा सुदर्शनोऽपि सपत्नीकः सहमातृकश्च रथगजादिपरिवृतः यथायोग्यमयोध्यां जगाम । तत्र प्रकृतयः सर्व्वा उपायनपाणयः ध्रुवसन्धिसुतं दृष्ट्वा परं मुदमापन्नाः । सुदर्शनः अयोध्यां गत्वा आदौ शत्रुजिन्मातु लीलावत्याः सकाशं गत्वा तां प्राह—"मातस्ते पिता पुत्रश्च युधाजित् द्वौ रणे दुर्गादेव्या हतौ । अवश्यम्भाविभावेषु प्रतिकारो न विद्यते । त्वं मृतपुत्रस्य हेतोः शोकं मा कुरु । सर्व्वे जीवाः स्वकर्म्मवशगाः सुखासुखानि भुञ्जते । पूर्व्वजन्मार्जितं

शुभाशुभं स्वकृतकर्म्मफलमवश्यमेव भोक्तव्यम्। इदं सर्व्वं दैवाधीनं न कथमपि आत्माधीनम्। मम मातामहे मृते यदाहं मात्रा सह वनं गतः, तदाहं स्वकृतं कर्म्म अवश्यमेव भोक्तव्यमिति चिन्तयन् नैव दुःखार्त्तोऽभवम्। तदा भयातुरा मे जननी बालपुत्रं मां गृहीत्वा वनमापन्ना, तत्र दस्युभिः सर्व्वं पाथेयं लुण्ठितम्; निराश्रया वस्त्रमात्रावृता सा बहुकष्टेन भरद्वाजाश्रमं प्राप्ता। वयं तत्र मुनिभिर्मुनिपत्नीभिश्च कृपया फलनीवारादिभिः पोषिताः। तदा मे मनसि किमपि दुःखं नासीत्, न चाद्य राजकोषाधिकारेऽपि मम सुखमस्ति। मम मनसि कदाचित् वैरं मात्सर्य्यं वा नासीत्। नीवारभक्षणं राजभोगात् श्रेष्ठम्, नीवाराशनः कश्चिन्नरकं न याति, राजभोगाशी तु नरकं याति। धीमान् पुरुषः सर्व्वथा जितेन्द्रियः धर्म्ममाचरेत्। सर्व्वाणि भूतानि नूनं आहारादिसुखं भुञ्जते, दुर्लभं मानुषं जन्म प्राप्य चतुर्वर्गप्रदमन्ययोनिषु दुर्लभं धर्म्मसाधनं सुधीभिरवश्यमेव कर्त्तव्यम्।"

लीलावती एवं मधुरं सुदर्शनवचनं श्रुत्वा अतिलज्जिता तमुवाच—"वत्स! मम पिता पुत्रश्च स्वकृतेनैव कर्म्मफलेन मृतौ, अहं तादृशं पुत्रं न शोचामि। परन्तु तत्कृतमेव स्मृत्वा शोचामि। वत्स! त्वयि मम क्रोधो वा शोकः कोऽपि नास्ति। देवीप्रसादेन त्वमिदं निष्कण्टकं राज्यं प्राप्तवान्, यथासुखं राज्यं कुरु, प्रजाश्च पालय।"

सुदर्शनस्तदाकर्ण्य सर्व्वान् मन्त्रिणः दैवज्ञांश्च आहूय "आदौ देवीस्थापनं पश्चात् राज्यं करिष्यामी"ति मन्त्रयित्वा शिल्पिभिः मनोहरं प्रासादं प्रतिमाञ्च कारयित्वा शुभे दिने च मुहूर्त्ते सुवर्णमये सिंहासने देवीं स्थापयामास। प्रेमभक्तिपरायणः स राजा देव्या नानाविधां पूजाञ्चकार। शरत्काले वसन्ते च नवरात्रविधानेन तस्या विशेषपूजाञ्च भक्तिपूर्व्वकञ्चकार। यथा रामस्य दिलीपस्य रघोश्च राज्ये धर्म्मतः प्रजापालनं प्रजानाञ्च सुखमासीत्, धर्म्मात्मनः सुदर्शनस्य राज्ये तथा प्रजाना सुखमभवत्। केषाञ्चिन्मनः नैवाधर्म्मे प्रवर्त्तितमासीत्, वर्णाश्रमाणाञ्च धर्म्मश्चतुष्पदासीत्, एवं सुदर्शनोऽयोध्यायां देवीप्रसादात् सुखेन धर्म्मेण च राज्यं पालयामास।

काशीपतिः सुबाहुरपि काश्यां देवीपूजाप्रतिष्ठार्थं प्रासादं शुभां प्रतिमां च कारयित्वा भक्तियुतःविश्वेश्वरस्य यथा, तथा विधानेन दुर्गापूजां प्रतिष्ठितवान्। तत्र देवीभक्तिपरायणाः सर्व्वे जना नवरात्रेषु ध्यानजपपरायणा आग-

मौक्तिः स्तोत्रादिभिर्यथाविधि देव्या विशेषपूजनं हवनं यागं च चक्रुः। मुक्तिपूर्यां वाराणस्यां प्रतिष्ठिता सा दुर्गादेवी सुविख्याता।

एवमयोध्यायां काश्यां च देवीस्थापनमासीत्।

इति सुदर्शनोपाख्यानं समाप्तम्।

---

## षट्पदीविवरणम्।

### पञ्चांगनिर्णयाभिधव्याख्यासनाथम्।

२य वर्षीयचतुर्थखण्डस्य २२८ पृष्ठतोऽनुवृत्तम्।

महामहोपाध्यायश्रीयुक्तजगन्नाथमिश्रतर्कदर्शनतीर्थेन।

अथावसरप्राप्तां श्रद्धां व्युत्पादयितुकामस्तस्या निर्वचनमाह, गुरूपदिष्टे इत्यादि,

षट्पदीविवरणम्—गुरूपदिष्टे निखिलेऽर्थजाते
संप्रत्ययो वेदशिरोऽधिगम्ये।
श्रद्धां बुधाः प्राहुरिमामबोध-
भ्रमोपजीव्यं व्यतिरेकमस्याः॥ ५६॥

गृणाति लौकिकमलौकिकं च हितमनुशास्तीति गुरुराचार्य्यः, तेन उपदिष्टे अनुशिष्टे, अनुशासनमेव व्यनक्ति, वेदशिरोऽधिगम्ये इति, वेदान्तप्रतिपाद्ये, निखिले अर्थजाते प्रपञ्चमिथ्यात्वब्रह्मसत्यत्वानन्दत्वादिरूपे मुमुक्षुभिरवश्यं प्रतिपत्तव्ये विषयजाले, संप्रत्ययो, य इत्यादिः, यः संप्रत्ययो विश्वासः इदमित्थमेवेत्यवधारणात्मा विश्रम्भः, बुधास्तत्त्वदृशः, इमामेतल्लक्षणां श्रद्धामाहुरित्यर्थः। स्यादेतत्, यदि श्रद्धा बोधोपयोगितामश्नुवीत, नत्वेवम्, विनापि श्रद्धां स्वतो बोधकतारूपशक्तिजुषां वेदान्तवाक्यानां श्रवणमात्रेणैवार्थबोधोदयसम्भवादित्याशंकां निवर्त्तयितुं व्यतिरेकमुखेन तदुपयोगं विगमयति, अबोधेत्यादिना, अस्याः श्रद्धायाः व्यतिरेकमभावं अबोधभ्रमोपजीव्यं, अबोधोऽज्ञानं, भ्रमो विपर्य्ययः मिथ्याज्ञानमिति यावत्। तयोरुपजीव्यम्, निमित्तमाहुरित्यन्वयः। अयम्भावः, गुरुवेदान्तवाक्येषु विश्वासः श्रद्धेति संप्रदायसिद्धं लक्षणम्। विश्वासश्च तदभिधित्सितवस्तुन्येदमित्थमप्रतिपत्तिः, तेषु फलावश्यम्भावनिश्चयो वा, सा च मुमुक्षूणां श्रवणसिद्धये ऽवश्यमुपादेया, यतोऽसत्यामुक्तलक्षणायां श्रद्धायां श्रुतमश्रुतमिवान्यथाश्रुतमिव च प्रतिपद्यमानं कदाचिदज्ञानाय मिथ्याज्ञानाय

वा प्रभवेत् सर्वथा यथार्थाधिगतिबन्ध्यमेव प्रसज्येत । नच सहकारिवैधुर्य्ये प्रतिबन्धकोपनिपाते वा सत एव कार्य्योपजननसामर्थ्यस्य बन्ध्यता सम्भाविताऽऽपतेत् न तु असत्सामर्थ्यान्तरमनेन मिथ्याभ्युपगन्तु मुचितमिति वाच्यम् । अस्मन्मतेऽचिन्त्यानिर्वाच्यमायोपादाननिबन्धनस्य प्रपञ्चे यावदुपपन्नकार्य्योपजननसामर्थ्यस्तोमस्यानागन्तुकत्वोपगमात् । उद्भवानुद्भवयोः कार्य्यार्जनानर्जनप्रयोजकयोः परं सहकारिसमवधानासमवधानाधीनतया कादाचित्कत्वौचित्यात् । अतएव दावाग्निदग्धस्य वेत्रबीजस्य कदलीकाण्डप्ररोहजनकत्वं भस्मकदुष्टस्य चोदर्य्यस्य वह्नेर्बहूनपचनहेतुत्वं तत्र तत्रोपगम्यमानमुपपद्यत इति दिक् । अत्र लिखितपाठादितः स्वतोऽनाप्तपुरुषान्तरव्याख्यानादिना वा गृहीतेऽर्थे गतानुगतिकतावारणाय 'गुरूपदिष्टे' इत्युक्तम् । न च गुरूणामपि कदाचिदनाप्तानां सम्भवात् श्रौतार्थविप्लवस्तावताऽपि तुल्यवत्प्रसज्यत इति वाच्यम् । यथावत् श्रौतार्थदर्शिन एवात्र गुरुपदेन विवक्षितत्वात्, शास्त्रे च तादृशस्यैवाचार्य्यकरणानुशासनात्, "समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठ" मित्याद्युपगमनश्रुत्या श्रुतिपरिशीलनजन्मनो ब्रह्मभूयस्य गुरुपदार्थतावच्छेदकतायाः स्पष्टमुक्तत्वाच्च । श्रुतौ श्रोत्रियशब्देन त्रैवर्णिकस्यैव ब्रह्मात्मदर्शिन उपादानाज्जन्मान्तराधीतवेदान्तादवगतिपर्य्यन्तस्येह जन्मनि ब्रह्मज्ञानस्य क्वचिद् विदुरादिवत् सम्भवेऽपि शूद्रात् श्रवणप्रतिषेधः सूचितः, कृताध्ययनादपि प्रत्यक्षानधिगततत्त्वाद् युञ्जानयोगिनः श्रवणं मा प्रसांक्षीदिति ब्रह्मनिष्ठत्वग्रहणम् । तेना"न्धेनैव नीयमाना यथान्धा" इत्याद्युपपन्नतरं भवतीत्यपि सूचितम् । किं चा"चार्य्यवान् पुरुषोवेद" इत्यत्राचार्य्यपदं, मनूक्तदिशा "उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः, सकल्पं सरहस्यं च तमाचार्य्यं प्रचक्षते" इत्युक्तलक्षण उपनयनपूर्वकसकल्पसरहस्यवेदाध्यापयितरि, द्विजे, न पर्य्यवस्यति, तथा सति पूर्वोदाहृतश्रुतिगतगुरुशब्देन सह तस्य तुल्यार्थत्वासम्भवेन श्रुत्योर्विरोधाद्विकल्पः प्रसज्येत, नच तत्रत्य गुरुशब्दोऽप्येतादृशमेवाचार्य्यत्वमभिधत्त इति शक्यं वक्तुम्, तथासति शुकादेः श्रवणार्थितया जनकाद्युपसत्तिः श्रूयमाणा विरुध्येत, नहि शुकादयो जनकादिनोपनीताः, न चास्त्यधिकारो जनकादेः क्षत्रियजन्मनो वेदस्य सकल्पसरहस्यतयाऽध्यापने, येन तेषामाचार्य्यत्वं मनूक्तं कल्पयितुं पार्य्येतापि । किं तर्हि "आचिनोति च शास्त्रार्थमाचारे स्थापयत्यपि । स्वयमाचरते यस्मादाचार्य्यस्तेन चोच्यत इत्युक्तरूपमेवाचार्य्यत्वमभिप्रैति, दर्शिता चाचार्य्यवाचि-

त्यादि श्रुतिः, तथा च गुरुशब्देन समानार्थत्वस्यानतिशंकनीयतया तद्रूपेण जनकादेः श्रवणश्रुतिर्न विरुध्यत इति ध्येयम्। एवं चात्रैवर्णिकस्यापि मुमुक्षया श्रवणं मा प्रसांक्षीदित्येतदर्थं वेदशिरोऽधिगम्ये इत्यप्यनुसंहितं मन्तव्यमितरथाऽधीतवेदानामेव कृतसन्न्यासानां श्रवणाधिकारनियमो न सिद्ध्येदेव। तथाच गुरुभिर्वेदान्तवाक्येषु श्रावितेषु तेष्वेव श्रद्दधाना मुमुक्षवो विचाराय घटेरन् ब्रह्मात्मैक्यसाक्षात्कारमित्येतावानेव नियमोऽत्र वाचोभंग्या दर्शितः। यद्यपि सर्वेषां वेदान्तवाक्यानामद्वितीये ब्रह्मणि तात्पर्य्यं न त्वन्यत्रेति कथ"मर्थजाते" इति जातग्रहणमवकल्पते इत्युच्यते, तथापि यैरर्थैर्विना नाद्वैतब्रह्मणः संप्रतिपत्तिः शक्योत्पादा, तेऽप्यर्था द्वैतमिथ्यात्वमायोपादानत्वसदन्वयित्वादयोऽवश्यं तत्र तत्र श्रुतिवाक्येषु प्रतिपिपादयिषितव्याः, अरुन्धतीदर्शनन्यायेनोपायोपेयभावस्य प्रतिपिपादयिषायां तन्त्रत्वादतिप्रसंगभंगात्, नहि गां प्रतिपादयितुमुपक्रममाणस्य सास्नादिमत्त्वादिराकृतिरविवक्षितेति शक्यं वक्तुम् आकृत्यादेर्व्यक्तिप्रतिपादनोपायत्वेनावश्यकत्वात्, वस्तुतोऽद्वैताधिकरणसिद्धान्तोक्तन्यायेन ब्रह्मात्मनि यथावदवबोध्यमाने जगन्मिथ्यात्वादयोऽनायासेनैव बोधिता भवन्ति, नतु ते स्वबोधार्थमधिकां विवक्षामपेक्षन्तेऽतो मुमुक्षुप्रयोजनानंगत्वेऽपि तेषां ज्ञानं वेदान्तेषु न दुर्लभमिति ध्येयम् ॥ ५६ ॥

तदेव वैदिकलौकिकनिदर्शनोपन्यासद्वारेण समर्थयितुमुपक्रमते अश्रद्दधानस्येत्यादिना द्वयेन।

षट्पदीविवरणम्—अश्रद्दधानस्य यथा क्रियाभिः

काय्यं न किंचित् क्रियते कदाचित्।
धीसाधनान्यप्यदृढानि तद्वद्
बोधं न तत्त्वे जनयन्ति जातु ॥ ५७ ॥

अश्रद्दधानस्य श्रद्धाविरहितस्य पुरुषस्य, क्रियाभिः स्ववर्णाश्रमोचिताभिः अग्निहोत्रादिलक्षणाभिः, कदाचित्—क्रियायाः समकालमुपरमोत्तरकालं वा, कार्य्यमपूर्वरूपं स्वर्गादिप्रयोजनरूपं वा, किंचित्, किंचिदपि न क्रियते जनयितुं न शक्यते, तद्वत् तथैव, धीसाधनानि श्रवणमननादीनि, अत्रापि अश्रद्दधानस्येत्यनुषज्यते, तदेवाभिप्रेत्याह-अदृढानीति, श्रद्धालक्षणसहकारिवैधुर्य्येण मूलशैथिल्यभाञ्जि, अप्रतिष्ठितानीति यावत्। जातु कस्मिंश्चित्, तत्त्वे विषये, बोधं साक्षात्कारं न जनयन्तीत्यन्वयः। एतदुक्तं भवति, कर्मयोग इव ज्ञानयोगेऽपि श्रद्धा, साध-

नानां सामर्थ्यं सम्पादयन्ती परमा सहकारिणी अभ्युपेयते । तथाहि भगवता गीतायां "श्रद्धाविरहितं चैव तामसं परिचक्षते" इत्यनेन श्रद्धारहितस्य तप आदेः कर्मणस्तामसत्वमुक्त्वा "अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् । असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह" इत्यादिना श्रद्धाविरहिणा कृतस्यासाधुत्वमकृतकल्पत्वमुभयत्र फलाभावमुखेन प्रतिपादयता कर्मयोगे श्रद्धाया आवश्यकत्वमुपपादितम् । युक्तं चैतत्, लोकेऽपि हि वक्तुराप्तत्वे तद्वचनस्य च प्रामाण्ये विचिकित्समानो शब्दैकबोधनीयप्रक्रियासम्पाद्ये क्रियाफले विमुखो वा भवेत् कथंचिद् भयादनुरोधादेर्वा निमित्तात्प्रवर्त्तमानोऽपि साधनसाद्गुण्यनियमानुपपत्त्या विफलप्रयासो वा, सर्वथा नैकान्तिकसिद्धिः स्यात्, तथैव शब्दैकप्रमाणके मन्त्रादिलक्षणशब्दसाधने च वैदिके कर्मणि श्रद्धामन्तरेण न कथमपि सिद्धिप्रत्याशा सम्भविनी, शास्त्रस्यास्तिकाधिकृतत्वात् श्रद्धाविरहेऽधिकारानुपपत्तौ शास्त्रीयेऽर्थेऽनधिकृतस्य कर्त्तुर्वैगुण्येन क्रियाफलनिष्पत्त्ययोगात् । किं च यदुत्कर्षापकर्षाभ्यां यस्येहोत्कर्षापकर्षौ प्रमाणसिद्धौ तत्तस्य कारणं तत्तस्य कार्य्यमिति नियमो नानैकान्तः, वह्नेरुत्कर्षापकर्षाभ्यां धूमस्य, दुग्धोत्कर्षापकर्षाभ्यां दध्नस्तन्तुसंयोगाद्युत्कर्षापकर्षाभ्यां च पटस्योत्कर्षापकर्षावनन्यथासिद्धाविति तादृशव्याप्तौ व्यभिचारादर्शनात् । एवं च श्रद्धामान्द्ये क्रियासिद्धावपकर्षस्यैव तदुत्कर्षे तत्समृद्धेरानुभविकतया यद्विशेषयोरितिन्यायेन च क्रियासामान्ये श्रद्धासामान्यस्य शब्दैकप्रवृत्तव्यवहारात्मके लौकिकेऽपि हेतुत्वस्य कल्पनार्हतया तत्सामान्येन वैदिकेऽपि कर्मणि तद्धेतुत्वमनायासेन सिद्ध्यति, भगवताऽपि श्रद्धात्रयविभागमुखेन कर्मणः साद्गुण्यासाद्गुण्ये प्रदर्शयतोपदर्शितव्याप्तिबलेनोक्तन्यायेन च वैदिके कर्मणि श्रद्धाया हेतुत्वस्य प्रसाधितत्वात् । यदाचापूर्वद्वारेण परलोकादिफलेऽपि यागादिकर्मणि श्रद्धाया अनन्यथासिद्धत्वमस्ति, तदा कैव कथा साक्षादिहापि जन्मनि कृतश्रवणस्य कदाचिदप्रतिबद्धे स्वात्मावगतिपर्य्यवसायिनि शमदमादिसाधनस्तोमे श्रवणांगतया श्रद्धाया उपयोगः सुतरामपवादं नार्हतीति ॥५७॥

षट्पदीविवरणम्—उप्तानि बीजानि यथोषरायां

प्ररोहवन्ध्यानि भवन्ति भूमौ ।
भवेदविश्वासविशाक्तचित्ते
तत्त्वोपदेशो विफलो ध्रुवश्च ॥ ५८ ॥

लौकिकेनापि दृष्टान्तेन तमेवार्थं समर्थयति—उप्तानीति, ऊषरायां क्षार-

प्रधानायां भूमौ क्षेत्रे, उप्तानि बीजानि यथा प्ररोहवन्ध्यानि अंकुरजननाक्षमाणि भवन्ति, तथाऽविश्वासविषाक्तचित्ते अविश्वास एव विषम् प्रमादित्वात् तेनाक्तमुल्वणं चित्तं यस्य तादृशे पुरुषे प्रतिपाद्य इति शेषः, तत्त्वस्य यथावस्थितस्य वस्तुनः सदद्वैतादेः उपदेशः अप्रतिपन्नप्रतिबोधनात्माव्यापारः, विफलोऽधिगत्यनुपधायकः वन्ध्य एव भवेत् , वन्ध्यस्यापि चेत् तादृशे प्रतिपाद्ये तथाविधस्य सुस्थितिस्तदा कुतस्तरामुषरोप्तबीजसादृश्यमस्य, बीजस्यैवोषरायामल्पेनैव तु कालेन स्वरूपप्रणाशं प्रणष्टत्वादत आह—अध्रुवश्चेति ।

अयमाशयः—यथा क्षारप्रधाने क्षेत्रे बीजान्युप्तमात्राणि विलीयन्ते, न पुनरंकुरप्ररोहाय जातु प्रभवन्ति । तथाऽश्रद्धादोषविषावसेकावशोषितनिःशेषरसस्वान्तेषु प्रतिपाद्यमानपुरुषेषु तत्त्वोपदेशाः सहस्रमपि श्रवणेऽवधाननियमानुपपत्त्याऽनुत्पन्नस्वरूपा वा कदाचिदुत्पन्नप्रध्वंसिनो वा स्युः सर्वथाऽऽत्मप्रतिपत्तिवन्ध्या एवेति । अत्र च निदर्शनेऽङ्कुराप्रसवित्वं बीजानां स्वरूपप्रणाशात्क्वचिज्जननशक्त्यपनयाद्वेत्युभयथाऽपि सम्भवात्तदुभयप्रकारप्रतिसन्धाननिबन्धनस्य दार्ष्टान्तिके अध्रुवश्चेत्यधिकानुसन्धानस्य नोपमानोपमेयभावव्याघातकरत्वमित्यवधेयम् ॥ ५८॥

भवेदेतदेवम् , यदि हि वस्तुशक्तिः कदाचिदाध्यात्मिकं सत्कारमपेक्षते, तथा सति निष्प्रतिबन्ध एव हिरण्यरेता सत्यपीन्धनसंप्रयोगे पुरुषेणावज्ञातः कदाचिन्न निर्दहेत् , नवा शीततरपाथःसंप्लुतान्यंगानि पुरुषधृतिगृहीतानि न वेपेरंश्च जडीभवेयुः । अतः श्रद्धावैधुर्येऽपि समाहितश्रोतृचेतःसमवधानप्रवृत्तस्तत्त्वोपदेशः कथंनामात्मलाभाय न प्रभवेत् ? कथं वा स्वार्थाधिगतिं नोत्पादयेत् एतस्य तदेकस्वभावत्वात् इत्याशंकामपनयति, अप्रामाण्यमित्यादिना—

षट्पदीविवरणम् —अप्रामाण्यममुष्य शंकितुमलं पुंदूषणोत्प्रेक्षया

प्रामाण्ये निरपेक्षतां प्रवदतां पक्षेऽपि युक्ता ततः ।

श्रद्धैवावति याऽवधूतपुरुषागःशंकमंकागताम्

जिज्ञासां जननी सुतामिव तथा बोधं यथा तत्सुतम् ॥ ५९ ॥

अमुष्य तत्त्वोपदेशस्य, पुंदूषणोत्प्रेक्षया पुंसां प्रवक्तृपुरुषाणां दूषणानि भ्रमप्रमादविप्रलिप्साकरणापाटवादिरूपाणि, तेषामुत्प्रेक्षा समूहनमाक्षेपः समारोप इति यावत् तया हेतुभूतया अप्रामाण्यं भ्रमजनकत्वं शंकितु मलं प्रसञ्जयितुं प्रभवेत् , श्रोतारिति शेषः । ननु बोधकत्वरूपं प्रामाण्यं शब्देषु साहजिकमेव, अबाधितार्थाधिगमहेतुत्वरूपमपि प्रामाण्यं स्वतः प्रामाण्यवादे सुघटमेवेति कुतस्तरां शंका-

वकाश इत्यत आह–प्रामाण्यइति। शब्दस्य निरुक्तरूपे द्विविधेऽपि प्रामाण्ये निरपेक्षतां स्वाभाविकताम् स्वत उत्पद्यमानतां स्वतोग्राह्यतां च प्रवदतामातिष्ठमानानां प्रावादुकानां प्राभाकराणां मतेऽपीत्यर्थः। तेन हेतुना श्रद्धैव, युक्ता श्रवणांगतयेत्यादिः। ननु श्रवणस्वरूपे तदिच्छायां वा न श्रद्धोपयुज्यत इत्याशंक्य उभयत्रापीत्युत्तरयन् परिहरति-भवति इति, या श्रद्धा जननी माता, सुतां दुहितरमिव जिज्ञासां श्रवणेच्छां, ब्रह्मविविदिषायाः स्वविषयब्रह्मावगतिफलनिवर्त्तनीयतया तत्साधनश्रवणादिगोचरेच्छामजनयित्वा पूरणासम्भवाद् विविदिषातो विलक्षणा श्रवणेच्छा आवश्यकीति वस्तुगत्या श्रवणस्य बोधविशेषरूपतामभिप्रेत्यैवेह जिज्ञासापदेन प्रसिद्धवदेव श्रवणेच्छाया एव ग्रहणमुपकल्पते अन्यथा ब्रह्मविविदिषात्मनि जिज्ञासास्वरूपे निरुक्तश्रद्धाहेतुत्वोक्तावपसिद्धान्तापत्तेरिति चिन्त्यम्। अतएवाह–अवधूतेति, अवधूतपुरुषागःशंकम् विगलितपुरुषदोषसंसर्गसंशयम् यथा तथा भवति रक्षति, यथाच जननी तत्सुतम् दुहितुस्तनयं भवति, तथा बोधं श्रवणफलं रक्षतीत्यन्वयः। अयमर्थः, तत्त्वोपदेशो हि वेदद्वारेणागमान्तरद्वारेण वा भवतु सर्वथा गुर्वादिव्याख्यासव्यपेत एवेति पुरुषदोषानुप्रवेशस्तत्र सुलभाशंकः, यद्यपि शब्दप्रामाण्यस्य स्वाभाविकतया झटिति तदवधारणं सुकरमेवातो न शंकयाऽवावकाशः समासादयितुं शक्यते, तथापि उत्सर्गप्राप्तमपि प्रामाण्यं पुरुषदोषावधारणेनापोद्यारादप्रामाण्यमापादयितुं लभ्यत एव। नचोच्चारयितुः प्रत्यक्षत उपलब्धत्वेऽपि वेदकर्तुरनुपलब्धचरत्वेन स्वरसतस्तत्र दोषनिश्चयासम्भवात्सत्यपि दोषसंशये आपादकानिश्चयमन्तरेणाप्रामाण्यस्यापादनायोग इति वाच्यम्, यतोऽस्मदादिदृष्टान्तेन वेदकर्तुः पुरुषस्यापि पुरुषत्वसामान्येन दोषानुमानकृततन्निश्चयोऽर्वाग्जनस्य स्वरसतः सुकरो भवति ततोऽपि नापादनाऽसम्भवोऽवकल्पते। वस्तुतस्तु, व्याप्यसंशयाहितव्यापकसंशयन्यायेन कारणदोषबाधोपधानान्यतरप्रयुक्तमप्रामाण्यं प्रति तदन्यतरस्य व्याप्यतायाः स्वाभाविकतया तत्संशयेऽप्रामाण्यसंशय आवश्यक एव। श्रद्धासमिद्धं पुनः श्रोतॄणामन्तःकरणं ज्ञातव्यमर्थं जिज्ञासमानमुत्तरोत्तरमुत्कण्ठावष्टम्भेनावहिततरं तावदवतिष्ठते। यावताऽनुदात्तमपि गुरूच्चरितमध्यवसातुमुत्सहते। न खलु श्रद्धालोस्तत्त्वबुभुत्सा आतत्त्वबोधात् प्रणश्यति, इच्छायाः स्वगोचरनिष्ठैकनिवर्त्तनीयत्वात्, प्रकामं तु क्रमवर्द्धमानाऽऽहत्यैव साधनसामग्र्यामायतत इति। यत्तु वस्तुशक्तिर्नाध्यात्मिकं सत्कारमपेक्षत इति नैतदेकान्तम्, तुल्येऽपि वैश्वानरसंप्रयोगेऽवहितानवहितयोर्वेदनावैरूप्यरूपफलतारतम्य-

स्यानुभवसिद्धत्वात् । वस्तुतश्चेतनमात्रविषयोऽयं तत्त्वोपदेशो नाध्यात्मिकमर्य्यादामतिशेत इत्यनिह्नुताऽपि श्रद्धासत्कारादिसंराधनमुपयुज्यमानं नितरां नापलपितुं शक्यत इति सुधीभिरेव विवेचनीयम् । यद्यपि शब्दस्वरूपपर्य्यवसन्नस्योपदेशस्य न द्रागिवास्ति ज्ञानादिवदाराद(?)ाध्यात्मिकत्वम्, तथाप्याकांक्षादिसांचिव्येनैवासावर्थवानित्यस्ति पुरुषपारतन्त्र्यमक्षतमुपदेशस्य । नहि निराकांक्षः शब्दः स्वार्थप्रतिपादनायालं, न जातु व्यासक्तमनसोऽन्यत्र स्वरसप्रसक्तात्मनः स उपदेशः स्वरूपोपलब्धिमप्याधातुं प्रभवतीति सर्वमवदातम् । अत्र चेश्वरकर्तृकत्वपक्षेऽकर्तृकत्वपक्षे च पुरुषदोषनिश्चयाभावात् 'वेदकर्त्ता भ्रमादिमान्' पुरुषत्वादस्मदादिवत्' 'वेदाः सदोषपुरुषप्रणीताः वाक्यत्वात्प्रत्यक्षागोचरार्थाभिधायिशब्दत्वादुन्मत्तवाक्यवत्, इत्यादितर्काभासा एव संशयकारणीभूतविप्रतिपत्तेरुपजीव्या इत्युत्प्रेक्षापदेनाभिहितम् । परतः प्रामाण्यपक्षे दोषाभावादिनैव प्रामाण्यानुमानात्सति दोषसंशये न कथंचिदपि तदनुमानसम्भवोऽस्तीत्यावेदयितुं प्रामाण्ये निरपेक्षतां प्रवदतां पक्षेऽपीत्युक्तम् । तदत्र सांप्रदायिकानां चत्वारः पक्षाः, तथाहि—प्रामाण्यमप्रामाण्यं चोभयमेव वस्तुस्वभावसम्बद्धतया निरपेक्षमुत्सर्गतः स्वत एव भवति गृह्यते चेति सांख्याः । तदुभयमेवानिरूपितस्वभावं कारणदोषादिभिरेवावसीयत इति नैयायिकाः । अप्रामाण्यमौत्सर्गिकमेव, प्रामाण्यं तु पुनः कारणगुणज्ञानात्संवादाद्वेति बौद्धाः । प्रामाण्यमेवौत्सर्गिकं कारणदोषज्ञानादिना तु परत एवाप्रामाण्यमिति वेदवादिनः । तथाचोक्तम्, प्रमाणत्वाप्रमाणत्वे स्वतः सांख्याः समाश्रिताः । नैयायिकास्ते परतः सौगताश्चरमं स्वतः । प्रथमं परतः प्राहुः प्रामाण्यं वेदवादिनः । प्रमाणत्वं स्वतः प्राहुः परतश्चाप्रमाणताम् । इति । तथाहि—अप्रामाण्यस्य स्वाभाविकत्वे सर्वबुद्धिव्यक्तिष्वनाश्वासात्स्वरसप्रवृत्त्यनुदयप्रसंगः । युगपद्विरुद्धायाः प्रामाण्याप्रामाण्योभयस्वभावताया अभ्युगमस्य व्याघातपराहतत्वात् । नापि प्रमाणत्वस्य परतस्त्वं सम्भवति साध्यप्रसिद्ध्यर्थं प्राथमिकतद्ग्रहणस्य कस्यचिद्बुद्धिविशेषस्य प्रामाण्यं स्वतो गृह्यते इत्येवं तेषामप्यवश्यमभ्युगन्तव्यतयाऽन्यत्र तदनुपगमस्य स्वभावव्यवस्थादौःस्थ्यापादकत्वात् । कोह्यनुन्मत्तः स्वरसग्रहणार्हतां प्रामाण्यस्यैकत्राभ्युपेत्यैव स्वभावादकारणं प्रच्यावयितुं पुनस्तदुत्सहेत । कथं वा एकत्र तत् स्वतोगृह्यत इत्यभ्युपेतुं शक्यते, यावता प्रामाण्यस्य स्वतोग्राह्यत्वस्वभावो नावधार्य्यते, तदवधारणे तु न खलु भावः स्वभावविमुक्तः कयाचिदपि प्रणाड्या सम्भावयितुं पार्य्यत इत्यकामयमानस्यापि दुर्वार-

मनपेक्षप्रामाण्यमापतितम् । नचैवं संशयानुपपत्तिः प्रसंगमर्हति, उत्सर्गप्राप्तस्यापि प्रामाण्यस्य बाधकप्रत्ययेन कारणदोषानुसन्धानादिना वाऽपवादस्वीकारात्क्वचिद्दोषसंशयाहितप्रामाण्यसंशयस्यापि सुतरामुपपादयितुं शक्यत्वात् । इतरथा रंगादितत्त्वज्ञाने जातेऽपि पूर्वोत्पन्नरजतदर्शनस्य प्रामाण्यनिश्चयेन प्रतिरुद्धतया कथंचिदपि तस्याप्रामाण्यावधारणासम्भवादिति दिक् । इत्थं च शब्दानामपि स्वतः प्राप्तं प्रामाण्यं पुरुषदोषाहितेनाप्रामाण्येन क्वचिदपोद्यत इत्येवं प्रकारेऽस्मत्सिद्धान्ते व्यवस्थिते कथंचिदश्रद्धावशेन पुरुषदोषसंशयाहितः प्रामाण्यसंशयो दुर्निरास इति श्रौतार्थदार्ढ्यासम्भवादप्रामाण्यशङ्कानास्कन्दितस्य बुभुत्सानिवर्त्तकीभूतश्रवणफलस्याशक्योत्पादतया पाषाणकर्षणादिकामनावज्जिज्ञासाया अपार्थकैव निवृत्तिः कृतश्रवणस्याव्यक्तार्थता च प्रसज्येतामित्यतः श्रद्धैव मुमुक्षुभिः शरणीकरणीयेति ध्येयम् । एतेन जिज्ञासा ज्ञानगोचरेच्छा, सा च ज्ञानस्यासिद्धत्वज्ञानमात्राल्लब्धात्मभावा स्वोत्पत्तये न श्रद्धामपेक्षते । एवं शाब्दं ज्ञानमपि शाब्दीं सामग्रीमाकांक्षायोग्यतासत्तिज्ञानादिगर्भामेवोपजीव्य जायमानं नैव श्रद्धामपेक्षत इति समाहितम् । दर्शितदिशाऽनर्थकतया निवृत्तितो रक्षणरूपत्वेनसाधारणकारणत्व एव जिज्ञासां प्रति श्रद्धासापेक्षतायाः पर्य्यवसानस्य विवक्षितत्वात् । एवमुत्पन्नमपि तत्त्वज्ञानं याथार्थ्यनिश्चयायापेक्षते श्रद्धामित्यस्यातिस्फुटत्वात् । यथाहि मात्रा दुहिता पुरुषान्तरापराधसंसर्गशङ्काकलङ्काद्रक्ष्यते, यावत्तत्कलङ्कपरिक्लिष्टैवा प्रसूता न विनंक्ष्यतीति, एवमागमस्य पुरुषदोषसंसर्गशङ्कितापामाण्यजन्यत्वेन जिज्ञासा निरर्थैव मा प्रसांक्षीदिति श्रद्धया परिरक्ष्यते, यथाच सुजातपुत्राया अपि दुहितुः सुतः स्वजननीकलंकेनात्मापवादाद्दपि मातामह्या सर्वदा साभिनिवेशं रक्ष्यते तथा जनितोऽप्यागमिकस्तत्त्वबोधः पश्चात्पुरुषदोषाशंकाहितः समासञ्जितेनाप्रामाण्येन गलितमर्य्यादो यावन्नायमोदेदित्येतादृशोऽयः अवगतिपदोपसन्धानबलम्य एवेति सर्वं चतुरस्रम् ॥ ५९ ॥

षट्पदीविवरणम्—सत्यपि भेदापगमे नाथ तवेत्यादिनैव तामाह ।

गुर्वागमयोरुक्तं तत्त्वं यदकुण्ठमस्त्वोपीत् ॥ ६० ॥

निरुक्तां श्रद्धां व्याख्येयग्रन्थांशेन संगमयति—सत्यपीत्यादिना

षरममूलेन ( पं )—सत्यपि भेदापगमे नाथ तवाहं न मामकीनस्त्वम् ।

सामुद्रो हि तरंगः क्वचन समुद्रो न तारंगः ॥ ३ ॥

इत्यनेन सम्पूर्णश्लोकेनेत्यर्थः । एवकारो भिन्नक्रमः तामित्यनन्तरमन्वयी ।

आह इत्यस्य आचार्य्य इत्यादिः। तत्र हेतुमाह—गुर्वागमयोरित्यादि । यत् यतः, गुरुश्चागमश्च, तयोरुक्तं ताभ्यामुपदिष्टं तत्त्वं रहस्यम्, जीवब्रह्मणोरभेदेऽपि ब्रह्मैव जीवविवर्त्ताधिष्ठानं न पुनर्जीवो ब्रह्मविवर्त्ताधिष्ठानमित्यादिलक्षणम् । अकुण्ठम्, (कुण्ठा संकोचः सत्याध्यवसायप्रामाण्यावधारणाविरहजन्मा अन्तःकरणवृत्तिभेदो ऽतथात्वसम्भवनालक्षणः तद्विधुरं) यथास्यात्तथा, अस्तौषीत्—स्तुतवान्, गुणोत्कीर्त्तनं * हि स्तुतिः, साच विद्यमानोत्कर्षमेवाभिधत्ते । तथा च गुरुवेदान्तशास्त्राभ्यामवगतस्यात्माद्वैतादितत्त्वस्यासंकोचेन उत्कर्षख्यापनमुखेनाचार्य्यकृतोपन्यासः श्रद्धामेव विहितां प्रतिपादयति । न खलु गुरुवेदान्तवाक्ययोरिदमित्थमेवावधारणलक्षणविश्वासापरपर्य्यायभूतश्रद्धापदार्थं विना तदुपन्यासः फलायावकल्पते । स्तुत्युपनिबन्धनस्य स्वगोचराध्यवसायदार्ढ्यमन्तरेण दुरुपपत्त्वात् । नचात्र स्तुतिरेव नोपन्यस्ता, तद्वाचकशब्दानुपलम्भात्, वस्तुमात्रकीर्त्तनस्य स्तुतित्वासम्भवाच्चेति वाच्यम् । जीवस्य ब्रह्माधिष्ठानत्वलक्षणतत्त्वस्यार्थान्तरन्यासमिषोन्मिषित-'समर्थनीयता' रूपोत्कर्षस्य वाक्यस्वरसविकृत्यावर्जनीयतया विवक्षितस्य वाक्यार्थत्वानपायादिति भावः ॥ ६० ॥

निरुक्तां समन्वितां च श्रद्धां उपपादयिष्यन् संप्रति तल्लक्षणमतिव्याप्त्या दूषयितु माशङ्कते शापादिभीतेरिति ।

वे-विवरणम्—चेत् शापभीतेरथ नास्तिकत्वापवादभीतेरपि यत् प्रसह्य ।

गतानुगत्यागतबुद्धिबाधौदासीन्यमाक्षिप्तमिदं निरुक्त्या ॥ ६१ ॥

अथ शापादिभीतेः गुर्वादिप्रकोपजनिताद् भयाद्, नास्तिकत्वापवादभीतेः वेदोक्तापलापित्वापवादजालादपि भयात्, प्रसह्य बलात्, गतानुगत्यागतबुद्धिबाधे, गतस्य परम्परया पूर्वप्राप्तस्य, अनुगतिरनुसरणम् तया आगतानां तद्वशसमुन्मेषशालिनीनां बुद्धीनां गुरुवेदान्तवाक्यादिस्वरूपतदभिप्रायपरिशुद्धिविषयिणीनां धियां बाधे बाधने भ्रमत्वापादने, यत्, माध्यस्थ्यमौदासीन्यमप्रवृत्तिलक्षणोऽन्तःकरणस्य वृत्तिभेदः; इदमुक्तलक्षणं माध्यस्थ्यम् । निरुक्त्या दर्शितविश्वासपदवेद्यावेदकश्रद्धालक्षणेन; आक्षिप्तं संगृहीतम्, भवतीति शेषः । चेत्—यदीत्यन्वयः । अयमर्थः; इह तावद् गुरोः स्वरूपतदुपदेशाद्यनादरे शापादिभयात् वेदाविश्वासे च नास्तिकत्वापख्यातिकृताच्च भयाद्गतानुगतिकतया प्रवृ-

* गुणोत्कीर्त्तनं गुणावयवोत्कीर्त्तनम् तेनोत्कीर्त्तनपर्य्यवसितस्तुधातुधात्वर्थस्यान्तर्भावितकर्मकतया नाकर्मकत्वप्रसङ्ग इति ध्येयम् ।

णास्तत्र तत्रैदमित्थ्यावगाहिन्योबुद्धयोऽनालोचितसाधनादिविशुद्धयोऽपि न द्राग्विषापबाध्यन्ते इत्युपलब्धं बहुलं लोके । ततश्चोपदर्शितस्य गुरुवेदान्तवाक्येषु विश्रम्भः श्रद्धेतिलक्षणस्य तत्साधारण्यमनिवार्य्यमेव । नहि तादृश्योऽबाधिता बुद्धयो यथोक्तमेदमित्थ्यं नैव गोचरयन्तीति शक्यमुपपादयितुं, नच तद्गोचरतायाममीषां किंचिदपि वैलक्षण्यमीक्षामहे । नवा गुर्वाद्यभिप्रेतार्थगोचरबुद्धिबाधौदासीन्यादन्यः कश्चिद्विश्रम्भपदार्थः प्रमाणवृत्तिमध्यास्ते । तथाचैवंविधबोधबाधनिवृत्तिपर्य्यवसन्न चौदासीन्ये तल्लक्षणमतिव्याप्तमेवेति । अत्रच शापपदं लौकिकालौकिकसाधारणदुःखमात्रपरम् । तेन गुरोः स्वत एव सामर्थ्ये दण्डनिपातनादिभयस्यापि संग्रहः । एवं नास्तिकत्वापवादेन्यप्युपलक्षणम् । नातोवेदबाह्यत्वाभिशंसनादिनिबन्धनराजदण्डादेरपिवासंग्रहः । प्रसह्य पदोपसन्धानाच्च कृतानादरस्यापि क्वचिच्चिरभिनिवेशं पूर्वोक्तलक्षणमौदासीन्यं प्रसिद्धवत् प्रत्याय्य तस्यालक्ष्यत्वमेव प्रकटीकृतमिति ध्येयम् ॥ ६१ ॥

शंकितामतिव्याप्तिमुद्धर्त्तुकामोलक्ष्यालक्ष्ययोः स्वरूपं विभजते-येत्यादिना-

मं-विवरणम्-या भयादुपरतिर्मतिबाधात्तामसः स, हृदयस्य हि दीनः ।

वृत्तिभेद उदितो, न विबोधात्, श्रद्धया कथमसौ ग्रहणार्हः ॥६२॥

मतिबाधात् गुरुवेदान्तवाक्योत्थबुद्धेर्बोधाद्बाधनात् "नेदमित्थंभूत"मित्यापादनादसमीचीनत्वप्रदर्शनात्मकस्वव्यापारादिति यावत् । भयात् हेतोर्या उपरतिर्निवृत्तिरौदासीन्यम्, हृदयस्यान्तःकरणस्य तामसः तमोऽभिभवकृतः वृत्तिभेदः परिणामविशेषः सः, तत्र हेतुमाह—हीति, यस्मादित्यर्थः । स वृत्तिभेदः दीनः कार्पण्यरूपः, चित्तप्रसादविरोधी संकोचलक्षणः; अतएव विबोधात् भूयोऽनुसन्धानजात् विशेषदर्शनात् न उदितः नोत्पन्नः । सुतरामसौ श्रद्धया प्रसादपदपर्य्यवसन्नया तत्संज्ञया कथं ग्रहणार्हः? ग्रहणार्ह एव नेति काकुः । भयादिजनिता हि चित्तवृत्तिः स्वभावप्रसृतमपि सत्त्वं चित्तस्याभिभूय दैन्यरूपेणाविर्भवन्ती संकोचयन्तीव स्रोतोमुखमनध्यवसायपरिपालनलक्षणं मूढमूढं स्वसन्तानमेवानुभावयन्ती सर्वथाऽध्यवसायक्षमं प्रसादमन्तःकरणे समासादयितुं नोत्सहते तमस एव तदानीं समुद्रेकात् । क्रमविकाशस्तु पुनः स तादृशः प्रत्ययप्रचयजन्मा सत्त्वोत्कर्षः समीचीनप्रत्ययलक्षणं फलमविरलीकुर्वन्नेव संप्रत्ययपदवेदनीयश्रद्धापदार्थशरीरमुद्भावयतीति कुतस्तरान्तयोरतितमां विविक्तछाययोः संकरगन्ध इति भावः ॥ ६२ ॥

दर्शितामतिव्याप्तिं संग्राह्यप्रतिक्षिप्तव्ययोः स्वरूपभेदोपपादनेनापोह्ये-दानीं कारणभेदफलभेदाभ्यामप्यपाकरोति । औदासीन्यमित्यादिना, अदः एतत् भयादिप्रयुक्तमित्यर्थः । औदासीन्यम्, अपवाधनाऽप्रवृत्तिः । नायं युक्तवादी, नेदमाप्तवचनम्, इति स्वरूपतो गुरुवेदान्तवाक्ययोः, "नायमर्थ एवंविधः, नैषा बुद्धिर्यथार्था", इत्यादितदुक्तार्थतद्बुद्ध्योर्वा बाधनोपरम इति यावत् ।

( क्रमशः )

---

## महामहोपाध्यायश्रीयुक्तसीतारामन्यायाचार्य्य-शिरोमणिमहोदयस्य संक्षिप्तजीवनवृत्तम् ।

### वङ्गाब्दाः १३२६

### प्रथमतोऽस्य पितृवंशपरिचयः ।

१। स्रष्टा जगत् सृजति यः, खलु तस्य वंश्यः शाण्डिल्यनामक ऋषिः प्रवरो मुनीनाम् ।
तद्वंशसम्भव उदीरितनाम-भट्टनारायणः स य इहाटति कान्यकुब्जात् ॥

२। तर्कालङ्कार इत्याख्यगोपीनाथोऽस्य वंशजः ।
विद्यादिग्विजयी दण्डी जितो येन नृपान्तिके ॥

३। अयमेव महाप्राज्ञः प्रार्थितो वसुवंशजैः ।
नदीयातः समागत्य वर्द्धमाने कृताश्रयः ॥

४। तद्वंशरत्नाकरतः समुत्थितो नवीनचन्द्राभिध-नूत्न चन्द्रमाः ।
तदङ्गजाताः सुविशुद्धबुद्धयश्चत्वार एष्वेष बुधो हि मध्यमः ॥

तथाहि—

५। शिवरामः स्थितो ज्यायान् सीतारामस्तु मध्यमः ।
तृतीयो घनरामोऽत्र रघुरामश्चतुर्थकः ॥

### अथास्य मातामहवंशपरिचयः ।

६। विधातुः प्रथमः पुत्रो मरीचिरिति विश्रुतः ।
मारीचः कश्यपो नाम यस्माज्जाताः सुरासुराः ॥
तद्वंशरत्नखनितोऽजनि नाम दक्षो, दक्षप्रजापतिरिवैष कृतौ च दक्षः ।
तत् कान्यकुब्जत इहातिसमादरेणानीतः स वङ्गपतिना सुतकामिनेति ।

७। जयाह जन्म तद्वंशे वट्टश्रीमधुसूदनः ।
यद्ग्रन्था भुवि विख्याताः स्मृतिज्योतिषशास्त्रयोः ॥

८ । पञ्चाननोऽस्य वंशीयः पञ्चानन इवापरः ।
संगीतरस-विज्ञोऽपि विद्यासागर-पारगः ॥

९ । तस्यात्मजा सर्व्वसुलक्षणा श्रीनिस्तारिणी मूर्त्तिमती क्षमेव ।
तद्गर्भजातोऽयमुदारचेष्टो गुणैरिदानीं परिचीयते यः ॥

१० । सीतारामः सुविमलमतिः सर्व्वशास्त्रार्थवेत्ता
सर्व्वांल्लोकान् सुखयतितरां यत्कवित्वं सुधेव ।
यो विख्यातो भुवि निजगुणैः सर्व्वदा हृष्टचेताः
सार्द्धं सर्व्वैः मिलति शिशुभिः सैव मिष्टस्वभावः ॥

११ । सीतारामस्य तनयः श्रीमान् कुमारकेशवः ।
नाम्ना स ऋभुरामोऽपि शिक्षितो बहुसद्गुणः ॥

१२ । श्रीअपर्णाकुमारीति सुताप्येकास्य विद्यते ।
तस्या अपि सुतश्चैकः श्रीनारायणसंज्ञकः ॥

१३ । जामाता श्रीहेमचन्द्र उच्चान्तःकरणो महान् ।
सर्व्वलक्षणसम्पन्नो मुखोपाध्यायवंशजः ॥

१४ । घनरामोऽनुजः श्रीमान् सुमतिः सुकृती कृती ।
ज्येष्ठस्य पुत्रः सद्बुद्धिर्महाराज इति श्रुतः ॥

## अथास्य वयःपरिचयः ॥

१५ । व्योमादितिस्वविधुसम्मित वङ्गजाब्दे कुम्भं गते तिमिरहारिणि सप्तमेऽह्नि ।
आर्द्राश्रितं मिथुनराशिमिते सुधांशौ वारे शुभे सुरगुरौ बुध एष जातः ॥

## अथास्य विद्यापरिचयः ।

१६ । प्रारभ्य पञ्चमे वर्षे पञ्चविंशे समापितम् ।
पठनं शब्दशास्त्राणां दर्शनानाञ्च सूरिणा ॥

१७ । शब्दशास्त्रं पितुः पद्मां दर्शनान्यन्यतोऽपि च ।
अधीतवानतः शिक्षागुरवस्त्रय एव हि ॥

१८ । एको गुरुर्गुरुरिवास्य नवीनचन्द्रो भूगोर्ष्यतिर्भुवनमोहन ईरितोऽन्यः ।
वेदान्तशास्त्र तत्रावपि कर्णधारः स्वामी जितेन्द्रियचयोऽस्य च बालरामः ॥

१९ । तेन मेने गुरुत्वेन पुनः काश्यामितेन तु ।
पूज्यपादः श्रीविशुद्धानन्दस्वामी जगद्गुरुः ॥

२० । भूरिप्रश्नसमुत्तीर्णः परीक्षात्रयतो ह्यसौ ।
तेनोपाधित्रयं लब्धं कृतिना तेन दुर्लभम् ॥

तेन हि—

तर्कतीर्थस्तर्करत्नो न्यायाचार्य्यशिरोमणिः ।
भट्टाचार्य्यश्चाभिहितो वन्द्योपाध्यायवंशजः ।

२१ । प्रायः प्रसिद्धान्यखिलानि शास्त्राण्यैक्षिष्ट विज्ञानबलेन विप्रः ।
यद्य यद्धि शास्त्रं ननु तेन दृष्टं प्रायेण सर्व्वत्र कृतापि टीका ॥

क्रमशः

## तमाकुतत्त्वम् ।

### ( 'एडुकेशन गेजेट'- नामक पत्रिकात उद्धृतम् )

मघोनः सभायां महेशस्य प्रश्नः, कलौ कः पदार्थो जनानां मनोज्ञः ।
चतुर्भिर्मुखाब्जैरवादीद् विधाता, तमाकुस्तमाकुस्तमाकुस्तमाकुः ॥

अथ यन्त्रनिरूपणम्—

ब्रह्मा ऽदात् स्वकमण्डलुं पशुपतिर्धुस्तूरपुष्पं ददौ
कंसारिर्मुरलीञ्च वह्निवरुणौ तत्रावतीर्णौ स्वयम् ।
देवर्षिः खलु नारदस्त्रिजगतां कल्याणकामी मुहु-
र्लोकानां सुख-सङ्गमे हरिहरि ब्रह्माक्षरं गायति ॥

अथ रूपभेदः—

तमाकुस्त्रिरूपी गुड़ाकुश्च दोक्ता ऽथ नस्यं त्वशिष्टैर्वधूभि र्विशिष्टैः ।
सुसेव्यो विख्याद्या समाकृष्णमेवं जगत्यां जयो वर्त्तते ताम्रकूटैः ॥

अथ ध्यानम्—

ध्यायेन्नित्यं 'चिलीमं' तिमिर-गिरि-निभं चाहनैचावृतसम् ।
श्रीमज्ज्वालोज्ज्वलाङ्गं निखिल-भयहरं चैकवक्त्रं द्विनेत्रम् ॥

अथ मन्त्रः—

हुं हुक्कां कां कृष्णवर्णां गां गड़रवां हां हुक्कायै नमः ।

अथ दानफलं—

ताम्रकूटं महद् द्रव्यं श्रद्धया दीयते यदि ।
अश्वमेधफलं तस्य टाने टाने भविष्यति ॥

अथ प्रत्याख्यान-फलम्—

ताम्रकूटं न भुंक्ते यः शृगालत्वं गतो नरः ।
गृहं त्यक्त्वा वनं गत्वा हुक्का हुक्केति गायति ॥

## ग्रन्थ-पत्रिका-सन्दर्भादीनां- प्राप्तिस्वीकारः समालोचनम् ।

स्वीक्रियतेऽस्माभिरेतासामधोलिखितानामनवद्यानां सुललित–प्रबन्धनिचयपुष्टकलेवराणां ग्रन्थ-पत्रिकाणामधिगमः । याचामहे च एतासां सम्पादक-प्रमुखात् कार्य्यदर्शिनः सततं निरामयम् । आङ्गलभाषामय–ग्रन्थपत्रिकादीनां प्राप्तिस्वीकारः आङ्गलपरिशिष्टे द्रष्टव्यः । सं॰ भा॰ सम्पादकाः:–

१६–आर्य्यप्रभा–संस्कृतमासिकपत्रिका । सम्पादकः–श्रीकुञ्जविहारी तर्कसिद्धान्त–काव्यतीर्थः । सहकारीसम्पादकः–श्रीनगेन्द्रनाथ सिद्धान्तरत्नः । अस्य अग्रिमवार्षिकमूल्यं सार्द्धैकरूप्यकम् । प्रतिखण्डमानकत्रयम् । प्राप्तिस्थानम् वेडेबिलतोरा मानभूम ।

२०–मञ्जुभाषिणी-संस्कृतसाप्ताहिकसमाचारपत्रिका । प्रतिशुक्रवारं प्रकाश्यते । सम्पादकाः–श्रीकाञ्चीप्रतिवादिभयङ्करमठाध्यक्षानन्ताचार्य्याः । वार्षिकमस्या अग्रिममूल्यं रूप्यकत्रयम् । प्राप्तिस्थानं काञ्चीनगरं मद्रदेशान्तर्गतम् ।

२१–संस्कृतसाहित्यपरिषत् पत्रम्–संस्कृतपरिषदो मासिकं मुखपत्रम् । सम्पादकः–श्रीदुर्गाचरण सांख्यवेदान्ततीर्थः । सहकारिसम्पादकौ–श्रीकालीपदतर्काचार्य्यः । श्रीसुरेन्द्रनाथमजुमदारशास्त्री च । वार्षिकमूल्यं रूप्यकत्रयम् । प्रतिखण्डमूल्यमानकचतुष्टयम् । प्राप्तिस्थानम्–कलिकातानगर्य्यां श्यामबाजार'ब्रीजरोडस्थं संस्कृतसाहित्यपरिषद्भवनम् ।

२२–अमृतभारती–प्रतिपक्षं प्रकाश्यमाना संस्कृतपत्रिका । वर्षस्यैकस्य मूल्यमस्या रूप्यकद्वयं, मासषट्कस्य मूल्यम्–एकरूप्यकम् । प्राप्तिस्थानम् त्रिप्पुनिथोर–कोचिनराज्ये ।

२३–विद्योदयः–संस्कृतमासिकपत्रम् । सम्पादकौ श्रीभवविभूति विद्याभूषणः एम्. ए., श्रीभवभूति विद्यारत्नश्च । वार्षिकमूल्यम् छात्राणामसमर्थानां* पक्षे सपादैकरूप्यकम् । तदन्येषान्तु रूप्यकद्वयम् । प्राप्तिस्थानम्–विद्योदयकार्य्यालयः, भाटपाड़ा, २४ परगणा ।

२४–ब्राह्मण-समाजः–बङ्गभाषामयं मासिकपत्रम् । सम्पादकाः–श्रीयुक्तभवभूतिविद्याभूषणः, श्रीयुक्तवसन्तकुमारतर्कनिधिः, कुमारश्रीयुक्त पञ्चाननमुखोपाध्यायवाहादुरः, कुमारश्रीयुक्तशरणचन्द्र सिंहशर्म्मा एम्, ए, वाहादुरश्च । वार्षिकमूल्यमस्य रूप्य-

कद्वयं, प्रतिखण्डमाणक-चतुष्टयम् । प्राप्तिस्थानम्—कलिकातामहानगर्य्यां ८७ नं आमहार्ष्ट ष्ट्रीट् स्थितभवनम् ।

२५—**प्रतिभा**—ढाका-साहित्यपरिषच्चालिता बङ्गभाषामयी मासिक पत्रिका । सम्पादकः—अध्यापकश्रीअनुकूलचन्द्रसरकारः, एम्, ए, पि, एइच्, डि, एफ्, सी, एस् । वार्षिकमूल्यम् २।=) । प्राप्तिस्थानम्—प्रतिभा-कार्य्यालयः, ढाका ।

२६—**साहित्यपरिषत्पत्रिका**—बङ्गभाषामयी त्रैमासिकपत्रिका । पत्रिका-ध्यक्षः—श्रीखगेन्द्रनाथमित्रः एम्, ए । प्राप्तिस्थानम्—कलिकातानगर्य्यां २४३।१ अपार सार्कुलार रोडस्थित बङ्गीय-साहित्यपरिषत्मन्दिरम् । अस्याः प्रतिसंख्याया मूल्यम्—द्वादशानकाः ।

२७—**श्रीश्रीनित्यधर्म्मः**—सर्व्वधर्म्म—समन्वयो वा, बङ्गभाषामय मासिक—पत्रम् । वार्षिकमूल्यम् रूप्यकद्वयम्, प्रतिसंख्या—मूल्यम् आनकचतुष्टयम् । प्राप्तिस्थानम्—कालीघट्टस्थ—महानिर्व्वाणमठम् कलिकाता, २६ नं० मनोहरपुकुर—रोड ।

२८—**ऋग्वेदसंहिता**-संस्कृतभाषामयी, ब्राह्मणग्रन्थधृतव्याख्यया वेदाचार्य्यया-स्ककृतनिर्व्वचनैः शङ्करवटसायनमहीधरदयानन्दसरस्वतीकृतभाष्यैः श्रीउमेशचन्द्रविद्यारत्नकृतया टीकया च समलङ्कृता । ढाकान्तर्गतनारायणवास्तव्यवदान्यवररायश्रीयुक्तपार्व्वतीशङ्करचतुर्धुरीणमहाशयस्य व्ययेन मुद्रिता संख्येयम् । प्रत्येकखण्डस्य मूल्यम् रौप्यैकमात्रम् ।

२९—**ऋग्वेदसंहिता**—द्वितीयभागः तृतीयसंख्या च, श्रीउमेशचन्द्रविद्यारत्नेन सटीकानुवादं सम्पादिता । कलिकाताराजधान्यां ६७, संख्यक शिमूलियावीथिकासंस्थात् सारस्वतगेहात् श्रीआशुतोषदासेन प्रकाशिता । मूल्यम् प्रतिभागस्य—रूप्यकमेकम् ।

३०—**वैराग्यशतकम्**—संस्कृतपद्यमयं बङ्गानुवादसहितञ्च । भर्त्तृहरिकृतमिदं श्रीपूर्णचन्द्रकाव्यरत्नेन सम्पादितम् । श्रीहरिदासचट्टोपाध्यायेन प्रकाशितम् मूल्यम्—द्वादशाणकानि ।

३१—**उद्भटसागरः**—प्रथम-द्वितीय-तृतीय-प्रवाह-समन्वितः । उद्भटसागर—श्रीपूर्णचन्द्रकविभूषणेन सङ्कलितः । सानुवादश्लोकात्मकः । मूल्यम्—रौप्यकद्वयम् ।

**३२-स्तवसमुद्रः**-प्रथमप्रवाहः, श्रीपूर्णचन्द्रकविरत्नेन सम्पादितः। श्रीहरिदासचट्टोपाध्यायेन प्रकाशितः। सानुवादसंस्कृतश्लोकात्मकः। मूल्यम्-रौप्यकद्वयम्।

**३३-मोहमुद्गरः मोहकुठारश्च**-श्रीमद्भगवत्पादशङ्कराचार्य्यविरचितः। श्रीपूर्णचन्द्रकाव्यरत्नेन सगृहीतः अनूदितश्च। मूल्यम्-आणकचतुष्टयम्।

**३४-प्रश्नोत्तरमणिरत्नमाला, प्रश्नोत्तररत्नमाला, प्रश्नोत्तररत्नमालिका च**-कविभूषणश्रीपूर्णचन्द्रकाव्यरत्नेन संगृहीता अनूदिताश्च। मूल्यम्-षष्ठाणकानि।

**३५-भूदेवचरितम्**-स्वर्गीयमहेशचन्द्रतर्कचूड़ामणिप्रणीतम्। श्रीकुमारदेवमुखोपाध्यायेन प्रकाशितम्। संस्कृतपद्यनिबद्धमिदं चतुर्विंशतिसर्गात्मकम्। मूल्यम्-सार्द्धरूप्यकम्।

**३६-अधिकरणरत्नमाला**-परमार्थदर्शनीया सवार्त्तिका। श्रीयुक्तपण्डितरामावतारशर्म्मणा प्रणीता प्रकाशिता च। संस्कृतगद्यपद्यमयीयं षष्टाध्यायेन समाप्ता। मूल्यमेकरूप्यकम्।

**३७-संक्षिप्तरामायणम्**-संस्कृतसरलश्लोकात्मकमिदं सप्तकाण्डेन परिसमाप्तम्। श्रीप्रफुल्लकृष्णेण विरचितम्। मूल्यम्-आणकचतुष्टयम्।

**३८-चित्रकाव्यम्**-श्रीपतिठाकुरविरचितम्। श्रीमदिन्द्रमोहनठाकुरेण सम्पादितं प्रकाशितञ्च। सटीकसंस्कृतपद्यमयस्यास्य मूल्यम्-अष्टाणकानि। प्राप्तिस्थानम्-माणिक्यहारदेवमन्दिरम्। शक्तिपुर, मुर्शिदावाद।

**३९-मानवेर आदिजन्मभूमि, वा प्रत्नतत्त्ववारिधिः**-तृतीयभागः। ऋग्वेदव्याख्यानुवादकारकेण श्रीउमेशचन्द्रविद्यारत्नेन प्रकाशितः। कलिकातानगर्यां ३२ संख्यकशिमला'स्ट्रीट'स्थित-सारस्वतगेहात् श्रीआशुतोषदासेन प्रकाशितः। संस्कृतबङ्गभाषालंकृताया अस्याः मूल्यम्-सार्द्धरौप्यकद्वयम्।

---

पादकत्वाच्च। अतः सुखादिमत्त्वमेवोत्तमत्त्वादिकम्। किञ्च घटरूपमितिप्रत्ययवत् स्त्रीसुखं चन्दनसुखमित्यादिप्रत्ययादपि विषये सुखाद्युचितम्। अधिकन्तु भाष्ये द्रष्टव्यम्। तदेवं प्रकृतिर्निरूपिता। (फ)

---

करणयोरेकत्र समावेशः, सच भूतत्वादेर्जातित्वे बाधकः, तथाहि, भूतत्वं विहाय मनसि मूर्त्तत्वं विद्यते, तथा मूर्त्तत्वं विहाय गगने भूतत्वं विद्यते, ततश्च परस्परात्यन्ताभावसमानाधिकरणयोः भूतत्वमूर्त्तत्वयोः पृथिव्यादिचतुष्टये सत्त्वात् न तयोः जातित्वम्। एवमुत्तमत्वं नीलत्वादिकं विहाय तदत्यन्ताभावाधिकरणे रसादौ वर्त्तते, तथा नीलत्वम् उत्तमत्वादिकं विहाय तदत्यन्ताभावाधिकरणेऽधमे नीलादौ वर्त्तते, उत्तमनीलादौ च उभयोः नीलत्वोत्तमत्वयोः समावेशोऽस्ति, अतः तयोः न जातित्वम्, तस्मात् रूपादिनिष्ठोत्तमत्वादिजातीनां सांकर्य्यदोषेण बाधितत्वात् न सुखादिहेतुताऽङ्गीकर्त्तुं शक्यते इत्यर्थः। साङ्कर्य्यस्य जातिबाधकत्वमनङ्गीकुर्वतः प्रत्याह,—"कालादिभेदैरि"ति। दृश्यते हि एकमेव कामिनीरूपादिकं कदाचित् कस्यचित् सुखजनकं, तदेव अन्यदा दुःखजनकमिति, तत्र यदि उत्तमत्वादिजातिः सुखजनिकेत्युच्यते तदा सर्वदा सर्वस्य सुखोत्पत्तिप्रसङ्गः दुर्वारः, अतो रूपादौ नोत्तमत्वादिः जातिः सुखादिजनकतया शक्याङ्गीकारेति भावः।

उत्तमत्वादीनां सुखाद्यात्मकत्वम् द्वितीयविकल्पोक्तमङ्गीकरोति,—"अतः" इति। "अतः"=उत्तमत्वादीनां जातिरूपत्वासम्भवादि। "सुखादिमत्त्वम्"=सुखादि। उत्तमत्वं न सुखादेरतिरिच्यत इत्यर्थः, अतः सिद्धं यद् उत्तमत्वादिकं सुखादिहेतुतया इष्यते भवता तत् सुखादिस्वरूपमेव नान्यत्। अनया युक्त्या अपरितुष्यतः स्वात्मानुभवं प्रमाणयति "किञ्चेति"। घटरूपमित्यनुभवात् यथा घटे रूपसिद्धिः तथा स्त्रीसुखमित्यनुभवात् स्त्र्यादौ विषये सुखादिकं सिध्यतीत्यर्थः। एतेनापि अपरितुष्यतः भाष्याद्युक्तयुक्तिदर्शनार्थमुपदिशति "अधिकन्त्वि" ति। "भाष्ये"=सांख्यप्रवचनभाष्ये, ब्रह्ममीमांसाव्याख्यानात्मके विज्ञानामृताख्ये भाष्ये चेत्यर्थः। अधिकं दिदृक्षूणां कौतूहलविनिवृत्तये प्रवचनभाष्यमुद्ध्रियते,

महत्तत्त्वं निरूप्यते। प्रकृतेः सकाशाद् बुद्ध्याख्यं महत्तत्त्वं जायते, तस्य धर्म्मादिरूपप्रकृष्टगुणयोगान् महत्-सञ्ज्ञा, तदेव च लक्षणम्। महान् बुद्धिः प्रज्ञेत्यादयश्च तस्य पर्य्याया:।

---

यथा,—ननु विषयेषु सुखादिमत्त्वे प्रमाणं नास्ति "अहं सुखी" इत्याद्येवानुभवात, तत्कथं कान्तादिविषयो दृष्टान्त इति चेन्न सुखाद्यात्मकबुद्धिकार्य्यतया स्रक्सुखं चन्दनसुखमित्याद्यनुभवेन च विषयाणामपि सुखादिधर्म्मकत्वसिद्धेः श्रुतिस्मृति-प्रामाण्याच्च। किञ्च यस्यान्वयव्यतिरेकौ सुखादिना सह दृश्येते तस्यैव सुखाद्युपा-दानत्वं कल्प्यते, तस्य निमित्तत्वं परिकल्प्यान्यस्योपादानत्वकल्पने कारणद्वय-कल्पनागौरवात्। अपि च अन्योन्यसंवादेन प्रत्यभिज्ञया च विषयेषु सर्वपुरुष-साधारणस्थिरसुखसिद्धिः। तत्सुखग्रहणाय अस्मन्नये वृत्तिनियमादिकल्पना-गौरवं च फलमुखत्वान्न दोषावहम्। अन्यथा प्रत्यभिज्ञया अवयव्यसिद्धिप्रसङ्गात्, तत्कारणादिकल्पनागौरवादिति, विषयेऽपि सुखादिकञ्च मार्कण्डेये प्रोक्तम्,—"तत्सन्तु चेतस्यथवापि देहे सुखानि दुःखानि च किं ममात्र॥" इति। अहं सुखीत्यादिप्रत्ययस्तु अहं धनीत्यादिप्रत्ययवत् स्वस्वामिभावाख्यसम्बन्धविषयक-स्तेषां प्रत्ययानां समवायसम्बन्धविषयकत्वभ्रमनिरासार्थं तु सुखिदुःखिमूढेभ्यः पुरुषो विविच्यते शास्त्रेष्विति। शब्दादिषु च सुखाद्यात्मकताव्यवहारः एकार्थता-समवायात्, अस्तु वा शब्दादिषु साक्षादेव सुखमुक्तप्रमाणेभ्यः, विषयगतसुखादेश्च बुद्धिमात्रग्राह्यत्वं फलबलात्। यत्तु विषयासंप्रयोगकाले शान्तिसुखं सात्त्विकं सुषुप्त्यादौ व्यज्यते तदेव बुद्धिधर्म्म आत्मसुखमुच्यत" इति। प्रकृतिनिरूपणमुप-संहरति "तदेवमि"ति। (फ)

महत्तत्त्वनिरूपणं प्रतिजानीते "महत्तत्त्वमि"ति। महत्तत्त्वस्य उपादान-कारणमाह,—"प्रकृतेरि"ति। तस्य "महान्" इति संज्ञाया बीजं तल्लक्षणं चाह,—"तस्ये"ति। "धर्म्मादौ"ति आदिशब्देन ज्ञानवैराग्यैश्वर्य्यधर्म्माणां, व्यष्टौ अधर्म्माज्ञानावैराग्यानैश्वर्य्याणां च ग्रहणम्। "तदेव" = प्रकृष्टधर्म्मादिमत्त्वमेव, एतच्च व्युत्पत्तिनिमित्तमुक्तम्, वस्तुतस्तु अध्यवसाय एव महतः लक्षणम्। महतः पर्य्यायान् दर्शयति,—"महान् बुद्धिरि"ति।

तथा चोक्तमनुगीतायाम्,—

महानात्मा मतिर्विष्णुर्जिष्णुः शम्भुश्च वीर्य्यवान् ।
बुद्धिः प्रज्ञोपलब्धिश्च तथा ब्रह्मा धृतिः स्मृतिः ॥
पर्य्यायवाचकैरेतैर्महानात्मा निगद्यते ।
सर्वतः पाणिपादश्च सर्वतोऽक्षिशिरोमुखः ।
सर्वतः श्रुतिमाँल्लोके सर्वं व्याप्य स तिष्ठति ॥
अणिमा लघिमा प्राप्तिरीशानो ज्योतिरव्ययः ।
ज्ञानवन्तश्च ये केचिदलुब्धा जितमन्यवः ॥

---

अत्र महाभारतीयमनुगीतावाक्यं प्रमाणयति,—"तथा चोक्तमि"ति । तद्वाक्यमुदाहरति "महानात्मे"ति समष्टिमहत्तत्त्वस्य वाचकाः शब्दा उच्यन्ते,—"महानात्मे"त्यादिभिः । अस्य सर्वव्यापकत्वमुच्यते "सर्वत" इत्यादिभिः । अस्य ऐश्वर्य्यमत्तां दर्शयति "अणिमे"त्यादिभिः । "अणिमा"दिशब्दैः तत्तदैश्वर्य्यमत्त्वमुच्यते । तत्र "अणिमा"=अणुभावः, यतः शिलामपि प्रविशति । "लघिमा"=लघुभावः, यतः सूर्य्यमरीचीन् आलम्ब्य सूर्य्यलोकं याति । "प्राप्तिः"=अङ्गुल्यग्रेणापि स्पृशति चन्द्रम् । एषु भावनिर्देशस्तु धर्म्मधर्म्म्यभेदादिति स्वयमेव वक्ष्यति । "ईशानः"=ऐश्वर्य्यवान् । एतेन सर्वाण्येव ऐश्वर्य्याणि उक्तानि, पूर्वेषां तु उपलक्षणविधया प्रदर्शनम् । पूर्वपूर्वसर्गेषु उपासनाद्यात्मकज्ञानद्वारेण करणवर्गेण सहैव सायुज्यमुक्तिं प्राप्तानां जीवानां महत्तत्त्वस्वरूपताप्राप्तिरुच्यते "ज्ञानवन्तश्चे"त्यादिना । एकस्यैव महत्तत्त्वस्य ब्रह्मविष्णुशिवात्मकत्वं कथमुच्यते इत्याशङ्क्य एकस्यैवास्य सत्त्वरजस्तमोरूपांशात्मकैरुपाधिभेदैर्ब्रह्मादिसंज्ञाभेदः, अंशिरूपैकत्वविवक्षया एकत्वमिति समाधानमाह,—"अत्रे"ति । "अत्र"=महत्तत्त्वे । "सत्त्वाद्यंशत्रयेण"=सत्त्वरजस्तमोरूपैः अंशैः । "तदविवेकेन"=सत्त्वाद्यविभागेन अंशिरूपेणेत्यर्थः । अत्र विष्णुपुराणवाक्यं प्रमाणयति,—"तदुक्तमि"ति । तद्वचनमुदाहरति,—"सात्त्विक" इति । मत्स्यपुराणवाक्यमुपन्यस्यति,—"मात्स्ये चे"ति । तद्वाक्यमुदाहरति,—"सविकारादि"ति । "सविकारात्"=गुणक्षोभ-

विमुक्ताः सर्व एवैते महत्त्वमुपयान्त्युत ।
विष्णुरेवादिसर्गेषु स्वयम्भूर्भवति प्रभुः ॥ इति।

अत्र सत्त्वाद्यंशत्रयेण महतो देवतात्रयोपाधित्वात् तद्विवेकेन ब्रह्मविष्णुशिवत्ववचनम् । तदुक्तं विष्णौ,—

सात्त्विको राजसश्चैव तामसश्च त्रिधा महान् । इति ।

मात्स्ये च,---

सविकारात् प्रधानात्तु महत्तत्त्वमजायत ।
महानिति यतः ख्यातिर्लोकानां जायते सदा ॥
गुणेभ्यः क्षोभ्यमाणेभ्यस्त्रयो देवा विजज्ञिरे ।
एका मूर्त्तिस्त्रयो देवाः ब्रह्मविष्णुमहेश्वराः ॥ इति ।

अणिमेत्यादिभावनिर्द्देशो धर्म्माधर्म्माभेदात् । ब्रह्मशङ्करापेक्षयाप्यादौ विष्णुरूपेणैव महानाविर्भवतीति विष्णुरेवेत्युद्दिष्टेनोक्तम् । इदमेव महत्तत्त्वमंशतोरजस्तमःसम्भेदेन परिणतं सद्

---

विशिष्टात् । "क्षुभ्यमाणेभ्यो गुणेभ्यः" = आदिपुरुषसम्बन्धात् सक्रियेभ्यः गुणेभ्यः, भिक्षुसिद्धान्ते बुद्धराद्युपादानसत्त्वादिगुणानां परिच्छिन्नतया तत्र सृष्टिप्रयोजकक्रियाङ्गीकारात्, प्रकृतेः निष्क्रियत्वं तु अध्यवसायादिरूपक्रियाराहित्यमित्युक्तम् प्राक् । "त्रयो देवाः" = ब्रह्मविष्णुरुद्ररूपाः । एतासां तिसृणां देवतानां सत्त्वाद्युपाधिभेदविवक्षायां भेदम्, अंशिरूपेण उपाधेरेकत्वादेकत्वञ्चाह,—"एका मूर्त्तिरि"ति, बुद्ध्याख्यं समष्टिमहत्तत्त्वं हि त्रिगुणात्मकम् एकमेव ; तच्च सत्त्वाद्यंशभेदेन त्रयाणां देवानां सूक्ष्मशरीरं भवति इत्येकमूर्त्तिरुच्यते । स्वयमेव पुराणवाक्यानि व्याचष्टे "अणिमे"त्यादि । "विष्णुरेवादिसर्गेष्विति" वाक्यं व्याचष्टे,—"ब्रह्मशङ्करापेक्षये"ति । समष्टिरूपमहत्तत्त्वस्वरूपमुक्त्वा व्यष्टिमहत्तत्त्वमाह,—"इदमेवे"ति । तत्र प्रमाणभूतं सांख्यसूत्रमुदाहरति,—"महदुपरागाद्

व्यष्टिजीवानामुपाधिरधर्म्मादियुक्तं क्षुद्रमपि भवति "महदुपरागाद् विपरीतमि"ति सांख्यसूत्रात् । महत्तत्त्वस्य प्राधान्येनाऽसाधारण्येन चाध्यवसायो वृत्तिः । महदहङ्कारमनस्वितयात्मकस्यान्तःकरणस्य महत्तत्त्वं बीजावस्थेति ॥ अत्र प्रकृतेर्महान् महतोऽहंकारः इत्यादिसृष्टिक्रमे शास्त्रमेव प्रमाणम् । अनुमानेन सामान्यतः कार्य्याणां सकारणकत्वमात्रसिद्धेः,

---

विपरीतमि"ति । महत्तत्त्वं रजस्तमोभ्यामुपरागात्, विपरीतं क्षुद्रम् अधर्म्माज्ञानावैराग्यानैश्वर्य्यधर्म्मकमपि भवतीत्यर्थः । महत्तत्त्वस्यासाधारणधर्म्ममाह,—"महत्तत्त्वस्ये"ति । "प्राधान्येन" = श्रेष्ठत्वेन । "असाधारण्येन" = स्वजातीयविजातीयव्यावर्त्तकतया । "अध्यवसायः" = निश्चयरूपबुद्धिपरिणामः । अन्तःकरणातिरिक्ततया प्रमाणसिद्धत्वाभावेन अस्य अन्तःकरणबीजावस्थारूपतां दर्शयति, "महदि"ति । महदादिसृष्टिक्रमे प्रत्यक्षादिप्रमाणगोचरत्वाभावात् शास्त्रं प्रमाणयति,—"अत्रे"ति । "शास्त्रमेवे"त्येवकारेण प्रत्यक्षानुमानयोः व्यावृत्तिः । सृष्टिक्रमे प्रत्यक्षस्य कथमपि सम्भावनाया विरहात् तद्गोचरतामनिषिध्य कथञ्चित् सम्भवद्विषयकमनुमानं प्रतिषेधति "अनुमानेने"ति । सृष्टिक्रमे अनुमानादेरविषयत्वे प्रकृतिमहदादिसाधकानुमानस्य निर्विषयतापत्तिरित्याशङ्क्य तस्य विषयं दर्शयति,—"सामान्यतः"इति । "सामान्यतः" = कार्य्यकारणत्वादिसामान्यधर्म्मपुरस्कारेण । "कार्य्याणां" = महाभूतादीनाम् । "सकारणकत्वमात्रसिद्धेः" = केवलकारणवत्त्वस्यैव साधनात्, न तु आदौ कस्मात् कारणात् किं कार्य्यम् उत्पन्नमिति क्रमस्यापि । महदादिकार्य्यकारणभावे प्रोक्तमनुमानं सामान्यरूपेण तेषां केवलं कार्य्यकारणभावमवगमय्य क्षीणमिति न ततो विशेषावधारणसम्भव इति भावः । सृष्टिक्रमे सन्देहमाह,—"भूतादिक्रमो वा अन्तःकरणादिक्रमो वा इति" = आदौ भूतानां सृष्टिः बुद्ध्याद्यन्तःकरणानां वा सृष्टिरिति, अनुमानात् एतयोः कोट्योरेकतरस्यावधारणं न सम्भवतीत्याह,—"एकतरावधारकमि"ति = अन्यतरपक्षस्य निश्चायकमित्यर्थः ।

अत्र हेतुमाह,—"स्पष्टलिङ्गाभावादि"ति । अनुमापकस्य व्यभिचारशङ्कारहित-

ननु सृष्टौ भूतादिक्रमो वाऽन्तःकरणादिक्रमोवेत्येकतरावधारकमनुमानं सम्भवति, स्पष्टलिङ्गाभावात् । श्रुतिस्मृत्यनुगृहीतं यथाकथञ्चिल्लिङ्गं तु महदादिक्रमेऽस्तीति भाष्येऽस्माभिः प्रदर्शितम् । महत्तत्त्वं निरूपितम् । ( ब )

अहङ्कारो निरूप्यते । महत्तत्त्वादहङ्कार उत्पद्यते, अङ्कुरात् शाखावत् । तस्य चाभिमानवृत्तिकत्वादहङ्कारसंज्ञा कुम्भकारसञ्ज्ञावत् । तदेव लक्षणम् । तस्य च पर्य्यायाः कौर्म्मे प्रोक्ताः,---

---

हेतोरभावात् । अस्य शास्त्रस्य मननशास्त्रत्वेन श्रुत्यनुगृहीततर्कोऽप्यत्र दर्शनीय इत्याह,—"श्रुत्यनुगृहीतमि"ति । तदनुमानं तु प्रवचनभाष्ये द्रष्टव्यमित्याह,—"भाष्येऽस्माभिरि"ति । तदत्र संक्षेपात्ततः उद्धृत्य प्रदर्श्यते,—तत्र पञ्चतन्मात्रानुमानं यथा,—"अपकर्षकाष्ठापन्नानि स्थूलभूतानि स्वविशेषगुणवद्द्रव्योपादानकानि स्थूलत्वात् घटपटादिवत् । अत्रानवस्थापत्त्या सूक्ष्ममादायैव साध्यं पर्य्यवस्यति, अनुकूलतर्कश्चात्र कारणगुणक्रमेण कार्य्यगुणोत्पत्तेर्बाधकव्यतिरेकेणापरिहार्य्यत्वं, श्रुतिस्मृतयश्चे"ति । अहंकारानुमानं यथा,—"तन्मात्रेन्द्रियाणि अभिमानवद्द्रव्योपादानकानि अभिमानकार्य्यद्रव्यत्वात्, यन्नैवं तन्नैवं यथापुरुषादिरि"ति । बुद्ध्यनुमानं यथा "अहंकारद्रव्यं निश्चयवृत्तिमद्द्रव्योपादानकं निश्चयकार्य्यद्रव्यत्वात्, यन्नैवं तन्नैवं यथापुरुषादिरि"ति । प्रकृत्यनुमानं तु अत्रैव पूर्वमुक्तं ग्रन्थकृता । एतैरनुमानैः प्रकृतेरन्तःकरणादिक्रमेण भूतसृष्टिरिति क्रमोऽपि अवगतः । महत्तत्त्वनिरूपणमुपसंहरति "महत्तत्त्वमि"ति । (ब)

अहंकारनिरूपणं प्रतिजानीते "अहंकार" इति । अहंकाररूपकार्य्यस्य कारणं दर्शयति "महत्तत्त्वमि"ति । अत्र दृष्टान्तमाह,—"अङ्कुरादिति",=अस्फुटरूपाद् अङ्कुरात् स्फुटरूपा शाखेवेत्यर्थः । तस्य लक्षणं सञ्ज्ञाबीजं चाह,—"तस्य चे"ति । "अभिमानः"=अस्मदर्थगोचरा वृत्तिः । यथा कुम्भस्य कर्त्तुः कुम्भकारसंज्ञा तथाहमित्यस्मदाकाराया वृत्तेः कर्त्तुः अहंकारसंज्ञेत्यर्थः ।

अहंकारोऽभिमानश्च कर्त्ता मन्ता च संस्मृतः।
आत्मा च प्रकुलो जीवो यतः सर्वाः प्रवृत्तयः॥ इति।

स चाहंकारस्त्रिविधतया त्रिविधकार्य्यहेतुः।
तदुक्तं कौर्म्मे,---

वैकारिकस्तैजसश्च भूतादिश्चैव तामसः।
त्रिविधोऽयमहंकारो महतः संबभूव ह॥
तैजसादिन्द्रियाणि स्युर्देवा वैकारिकाद् दश।
एकादशं मनश्चात्र स्वगुणेनोभयात्मकम्।
भूततन्मात्रसर्गस्तु भूतादेरभवन् प्रजाः॥ इति।

---

"तदेव" = अभिमानाख्यवृत्तिरेव। अहंकारवाचकाः शब्दा उच्यन्ते "तस्य चे"ति "कौर्म्मे" = कूर्म्मपुराणे। "कर्त्ता" = कृतिमान्। "मन्ता" = मननवान्। "प्रकुलः" = देहाभिमानी। 'देही'ति पाठेऽपि स एवार्थः। 'यतः सर्वाः प्रवृत्तय" इति = अहंकारपूर्वकत्वात् सर्वासां प्रवृत्तीनां, तस्मात् सर्वाः प्रवृत्तयः भवन्तीत्यर्थः। सत्त्वरजस्तमोगुणात्मकतया अहङ्कारस्य, त्रयाणां गुणानामुद्भवानुद्भवद्वारेण त्रिविधकार्य्यहेतुत्वं दर्शयति,—"स चे"ति।

तत्र कूर्म्मपुराणवाक्यं प्रमाणयति,—"तदुक्तमि"ति। स्वयमेव पुराणवाक्यानि व्याचष्टे "वैकारिक" इति। मनसो ज्ञानकर्मोभयेन्द्रियात्मकत्वे हेतुमाह,— अन्यत्रमनाः" इति। मनसः व्यासङ्गे ज्ञानेन्द्रियाणां श्रोत्रादीनां, कर्मेन्द्रियाणां वागादीनां च व्यापाराभावात्, तत्संयोगे च उभयोः व्यापारदर्शनात् मनसः उभयेन्द्रियात्मकत्वं, तथा चेत्थं श्रुतिस्वरससिद्धः प्रयोगोऽवगन्तव्यः,—मनो ज्ञानेन्द्रियं ज्ञानेन्द्रियकार्य्यजनकसंयोगाश्रयत्वात् श्रोत्रादिवत्। मनः कर्मेन्द्रियं कर्मेन्द्रियकार्य्यजनकसंयोगाश्रयत्वाद् वागादिवदिति। "अन्यत्रमनाः" = अन्यविषयासक्तमनस्कः, श्रवणेन्द्रियविपयेण मनःसंयोगहीनः इति यावत्, अनया श्रुत्या मनसः संयोगाभावे श्रोत्रशब्दसंयोगेऽपि शब्दज्ञानानुत्पत्तेः मनसो लिङ्गमुक्तम्। तदयं कौर्म्मवाक्यानां निष्कर्षः,—महत्तत्त्वात् समुत्पन्नः अहंकारः सात्त्विकराजस-

वैकारिकः = सात्त्विकः । तैजसो = राजसः । स्वगुणेन = इन्द्रियवृत्तिषु साहाय्यरूपेणोत्कर्षेण । उभयात्मकं = ज्ञानकर्म्मभयेन्द्रियात्मकम् । अन्यत्रमना अभूवं नाश्रौषम् इत्यादिश्रुत्या मनसो ज्ञानकर्म्मोभयेन्द्रियसहकारित्वसिद्धेरिति । एकादशेन्द्रियदेवाश्च,—दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः । चन्द्रश्च इति । अहंकारो निरूपितः । ( भ )

इन्द्रियादीनि निरूप्यन्ते,—अहंकारादादौ मन उत्पद्यते ।

शब्दरागाच्छ्रोत्रमस्य जायते भावितात्मनः ।
रूपरागात् तथा चक्षुर्घ्राणं गन्धजिघ्रक्षया ॥

इत्यादिना मोक्षधर्मादाविन्द्रियादीनां मनोवृत्तिरागादिकार्य्यत्वश्रवणात् । ततश्चाहंकारात् सङ्कल्पपूर्वकं दशेन्द्रियाणि

---

तामसभेदेन त्रिविधः, तत्र सात्त्विकादहंकारात् मनः, समष्टिचक्षुरादिशरीरिणः सूर्य्यादिचेतनाः चक्षुरादिदेवताश्च जायन्ते, राजसादहङ्काराद् दशेन्द्रियाणि, तामसादहंकाराच्च तन्मात्राणि इति । सांख्यशास्त्रे समष्टिव्यष्टीन्द्रियाणामेकत्वविवक्षया पृथग्देवतोत्पत्तिर्नोक्ता । इयन्तु व्याख्या भिक्षुपादमतेनोक्ताः, वाचस्पतिमिश्रमते तु,—मनःसहकृतानि एकादशसंख्यकानीन्द्रियाणि सात्त्विकात्, तन्मात्राणि तामसात् अहंकारादुत्पद्यन्ते राजसाहंकारस्तु सत्त्वतमसोः क्रियोत्पादनद्वारेण उभयविधकार्य्योत्पत्तौ कारणं, न स्वतः तस्मात् कस्यापि कार्य्यस्योत्पत्तिरिति । एकादशानामिन्द्रियाणां देवा उच्यन्ते "एकादशे"ति । अहंकारनिरूपणमुपसंहरति अहंकार इति । (भ)

इन्द्रियनिरूपणं प्रतिजानीते "इन्द्रियादीनी"ति । अहंकारकार्य्यत्वे सति करणत्वमिन्द्रियत्वमितीन्द्रियलक्षणमवगन्तव्यम् । अहंकारात् प्रथमतः मनस उत्पत्तिमाह,—अहंकारादि"ति । तत्र प्रमाणभूतं मोक्षधर्म्मादिवाक्यमुदाहरति "शब्दरागादि"ति । "अस्य भावितात्मनः" = अस्य हिरण्यगर्भस्य । "शब्दरागात्"

पञ्चतन्मात्राणि चोत्पद्यन्ते। इन्द्रियतन्मात्रयोश्च कार्य्यकारण-भावस्याभावात् क्रमनियमो नास्ति।

तत्रेन्द्रियेषु नास्त्यन्यान्तरकार्य्यकारणभावः प्रमाणा-भावात्। तन्मात्रेषु तु अस्ति। स यथा,—शब्दतन्मात्राद् वक्ष्यमाणक्रमेण स्पर्शतन्मात्रं शब्दस्पर्शोभयगुणकमेवं क्रमेणै-कैकगुणवृद्धा परतन्मात्रत्रयं पूर्वपूर्वतन्मात्रेभ्य उत्पद्यते पातञ्जलभाष्ये तन्मात्रेषु क्रमेणैकैकगुणवृद्धिवचनात्। ततश्च पञ्चतन्मात्रेभ्यः पञ्चभूतानि जायन्ते। तत्राहंकारात् पञ्च-तन्मात्राणां तद्द्वारा भूतानां चोत्पत्तौ क्रमः, कूर्म्मविष्णुादि-पुराणेषूक्तः।

---

=मया अनेन इन्द्रियेण शब्दादिकं भोक्तव्यम्, इदमेव सुखसाधनमित्यादि-सङ्कल्पात्मकमनोवृत्तिरूपरागात्, आदिसर्गेषु "श्रोत्र"=श्रवणेन्द्रियं जायते। एवं रूपरागाच्चक्षु, घ्राणजिघृक्षया" =गन्धरागेण, घ्राणेन्द्रियं जायते इति तदर्थः। अस्य निकृष्टार्थमाह,—"मनोवृत्ती"ति। "ततः"=मनसः उत्पत्तेः परम्। बुद्ध्यहङ्कारमनसाम् उत्पत्तौ यथाक्रमनियमोऽस्ति, इन्द्रियतन्मात्रयो-स्तथाक्रमो नास्तीत्याह—"इन्द्रिये"ति। इन्द्रियेषु अन्योन्यं कार्य्यकारणभावो नास्तीत्याह,—"तत्रेन्द्रियेष्वि"ति। तन्मात्रेषु क्रमं दर्शयितुं प्रतिजानीते "तन्मात्रेष्वि"ति। क्रमं दर्शयति "स यथे"ति। "शब्दतन्मात्रात्"=तामसाहं-कारादुत्पन्नादित्यर्थः। "वक्ष्यमाणक्रमेण"=भूतादिस्तु विकुर्वाण इत्यादि वक्ष्यमाणक्रमेण। "परतन्मात्रत्रयं"=रूपरसगन्धतन्मात्राणि। "पातञ्जलभाष्ये"= योगदर्शनस्य महर्षिव्यासकृते भाष्ये। तथा चावधेयमेतद् भाष्यम्, "शब्दतन्मात्रं, स्पर्शतन्मात्रम्, रूपतन्मात्रम्, रसतन्मात्रं, गन्धतन्मात्रम् चेति एकद्वित्रिचतुःपञ्च-लक्षणाः शब्दादयः पञ्च विशेषा" इति। पूर्वोक्तक्रमे प्रमाणमुपन्यस्यति "तत्रे"ति। प्रमाणभूतकूर्म्मपुराणवाक्यानि उदाहरति,—"भूतादिस्त्वि"ति। "भूतादिः" =

यथा कूर्म्मे,—

भूतादिस्तु विकुर्वाणः शब्दमात्रं ससर्ज ह।
आकाशं सुषिरं तस्मादुत्पन्नं शब्दलक्षणम् ॥
आकाशस्तु विकुर्वाणः स्पर्शमात्रं ससर्ज ह।
वायुरुत्पद्यते तस्मात् तस्य स्पर्शो गुणो मतः ॥
इत्यादिक्रमेणेति। (म)

तामसोऽहंकारः। "विकुर्वाणः" = क्षोभं प्राप्तः। "शब्दमात्रं" = शब्दतन्मात्रम्। "आकाशं सुषिरं" = छिद्रात्मकमाकाशाख्यं महाभूतम्। "शब्दलक्षणम्" = शब्दगुणकम्। "आकाशस्तु विकुर्वाणः" = अहंकारसहकृतं शब्दतन्मात्रं क्षुभ्यत् सत्। "स्पर्शमात्रं" = वायुतन्मात्रम्। "तस्मात्" = आकाशाश्रितस्पर्शतन्मात्रात्। "वायुः" = वायुनामकमहाभूतम्। "तस्य" = वायोः। "स्पर्शोगुणः = वायोः शब्दस्पर्शौ गुणौ इत्यर्थः। परतन्मात्रत्रयसृष्टौ अपि एवं विष्णुपुराणादिवाक्यानि ज्ञातव्यानि तद् यथा,—

आकाशं शब्दमात्रं तु स्पर्शमात्रं समावृणोत्।
ततो वायुः विकुर्वाणो रूपमात्रं ससर्ज ह ॥
ज्योतिरुत्पद्यते वायोस्तद्रूपगुणमुच्यते।
स्पर्शमात्रं तु वै वायूरूपमात्रं समावृणोत् ॥
ज्योतिश्चापि विकुर्वाणं रसमात्रं ससर्ज ह।
सम्भवन्ति ततोऽम्भांसि रसाधाराणि तानि च।
रसमात्राणि चाम्भांसि रूपमात्रं समावृणोत्।
विकुर्वाणानि चाम्भांसि गन्धमात्रं ससर्जिरे।
सङ्घातो जायते तस्मात् तस्य गन्धो गुणो मतः ॥ १।२।४०

तदयं निर्गलितः क्रमः,—अहंकारात् शब्दतन्मात्रस्य उत्पत्तिः, तस्य शब्दो गुणः। अहंकारानुगतात् शब्दतन्मात्रात् शब्दस्पर्शगुणकस्य स्पर्शतन्मात्रस्य उत्पत्तिः, अहंकारशब्दतन्मात्रानुगतस्पर्शतन्मात्रात् शब्दस्पर्शरूपगुणकस्य रूप-

नन्वेवमाकाशादिभूतचतुष्टयस्यापि तत्त्वान्तरारम्भकत्वेन प्रकृतित्वापत्त्या केवलविकृतित्वसिद्धान्तक्षतिरिति चेन्न। आकाशादीनां स्पर्शादितन्मात्रेष्वहंकारोपष्टम्भमात्रेण कारणत्वस्य पुराणेषूक्तत्वादिति। तदेवं त्रयोविंशतितत्त्वानामुत्पत्तिरुक्ता। (य)

तत्र पञ्चभूतानि वर्ज्जयित्वाऽहंकारश्च बुद्धौ प्रविश्य सप्तदशकं लिङ्गशरीरसञ्ज्ञं भवति वह्नेरिन्धनवदात्मनोऽभि-

---

तन्मात्रस्य, अहंकारशब्दस्पर्शतन्मात्रानुगतात् रूपतन्मात्रात् शब्दस्पर्शरूपरसगुणकस्य रसतन्मात्रस्य, अहंकारशब्दस्पर्शरूपतन्मात्रानुगतात् रसतन्मात्रात् शब्दस्पर्शरूपरसगन्धगुणकस्य गन्धतन्मात्रस्य उत्पत्तिः। एवं शब्दतन्मात्रात् आकाशस्य, आकाशाश्रितस्पर्शतन्मात्राद् वायोः, एवं क्रमेण वायुसमाश्रितात् रूपतन्मात्रात् तेजसः, तेजःसमाश्रिताद् रसतन्मात्रात् जलस्य, जलाश्रितगन्धतन्मात्रात् पृथिव्याः उत्पत्तिरित्यवगन्तव्यम्। उत्तरतन्मात्राणां पूर्वपूर्वभूतसमाश्रयेणैव स्वकार्य्यमहाभूतारम्भकत्वस्य पुराणेषु श्रवणात्। (म)

सांख्यशास्त्रे प्रकृतिविकृत्यादिविभाग एवमुक्तः,—प्रधानं केवलप्रकृतिः, बुद्ध्यहंकारौ पञ्चतन्मात्राणि चेति सप्त प्रकृतिविकृतयः, पञ्चमहाभूतानि एकादशेन्द्रियाणि चेति षोड़श केवलविकृतयः। “भूतादिस्त्वि”त्यादिपुराणवाक्यानुसारेण पूर्वपूर्वमहाभूतस्य आकाशादेः परपरभूतवाय्वादिकारणकत्वे तेषां केवलविकृतित्वसिद्धान्तक्षतिरित्याशङ्कते,—“नन्वेवमि”ति। “तत्त्वान्तरारम्भकत्वेन” = उत्तरोत्तरभूतजनकत्वेन। शङ्कां निषेधति “ने”ति। उत्तरमाह,—“आकाशादीनामि”ति = आकाशादीनां कारणभूताहंकारादेराश्रयदानद्वारेण निमित्तकारणता, न तु उपादानकारणता, तत्त्वान्तरोपादानस्यैव विकारात् न तेषां विकृतित्वमित्यर्थः। त्रयोविंशतितत्त्वविवेचनमुपसंहरति, “तदेवमि”ति। पञ्चविंशतितत्त्वेषु नित्यौ प्रकृतिपुरुषौ वर्ज्जयित्वा अन्येषां त्रयोविंशतितत्त्वानामुत्पत्तिरुक्तेत्यर्थः। (य)

इदानीं भोगसाधनं लिङ्गशरीरं प्रतिपादयति वैराग्यार्थं “तत्रे”ति। “तत्र” =

व्यक्तिस्थानत्वात्। तच्च सर्वपुरुषाणां सर्गादावुत्पन्नं प्राकृतप्रलयपर्य्यन्तं तिष्ठति। तेनैव चेहलोकपरलोकयोः संसरणं जीवानां भवति।

प्राणश्च बुद्धेरेव वृत्तिभेदः कृत्स्नतो न लिङ्गशरीरात् पृथङ् निर्दिश्यते। तस्य लिङ्गशरीरस्य सूक्ष्माणि पञ्चभूतानि आश्रयः, चित्रादिवदाश्रयं विना परमसूक्ष्मस्य लोकान्तरगमनासम्भवात्। इदं च लिङ्गशरीरमादौ स्वयम्भुव उपाधिभूतमेकमेव जायते तस्यैव विराडाख्यवक्ष्यमाणस्थूलशरीरवत्। ततश्च व्यष्टिजीवानामुपाधिभूतानि व्यष्टिलिङ्गशरीराणि तदंशभूतानि ततो विभज्यन्ते। पितुर्लिङ्गशरीरात् पुत्रलिङ्गशरीरवत् तदुक्तं सूत्रकारेण,--"व्यक्तिभेदः कर्मविशेषादि"ति मनुनाप्युक्तम्,---

---

तेषु महदादिमहाभूतान्तेषु त्रयोविंशतितत्त्वेषु। "अहंकारश्च बुद्धौ प्रवेश्य" = कार्य्यकारणयोरभेदेन तयोरैक्यं विवक्षित्वा इत्यर्थः। अस्य लिङ्गसंज्ञाया बीजं सदृष्टान्तमाह—"वह्नेरि"ति।

यथा इन्धनं वह्नेरभिव्यक्तिस्थानत्वात् तस्य लिङ्गम्, एवमात्मनोऽभिव्यक्तिस्थानत्वादेतत् लिङ्गशरीरमुच्यते। तस्य विवेकज्ञानपर्य्यन्तस्थायितां दर्शयति "तच्चे"ति। तस्य प्रयोजनं दर्शयति "तेनैवे"ति। केचित् 'पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम्। शरीरं सप्तदशभिः सूक्ष्मं तल्लिङ्गमुच्यते॥' इत्यादिस्मृतिप्रामाण्यात् तन्मात्रं विहाय लिङ्गशरीरघटकतया प्राणादिपञ्चकमङ्गीकरोति तन्निराकरोति "प्राणश्चे"ति। प्राणादिवायुपञ्चकस्य बुद्धिवृत्तित्वेन तदनतिरेकाद् न पृथङ्-निर्देशार्हत्वमित्यर्थः। तन्मात्राणां लिङ्गशरीरघटकत्वेनाङ्गीकारस्य आवश्यकत्वमपि दर्शयति "तस्य लिङ्गशरीरस्ये"ति। "सूक्ष्माणि पञ्चभूतानि" = पञ्चतन्मात्राणि।

तेषां त्ववयवान् सूक्ष्मान् षसामप्यमितौजसाम्।
सन्निवेश्याऽऽत्ममात्रासु सर्वभूतानि निर्ममे ॥ इति

षसामिति, षडिन्द्रियं समस्तलिङ्गशरीरोपलक्षकम्। तथाच स्वयम्भूः स्वलिङ्गशरीरावयवान्, सूक्ष्मान् = अल्पान्, आत्ममात्रासु = स्वांशचेतनेषु संयोज्य सर्वप्राणिनः ससर्जेत्यर्थः। लिङ्गशरीरं निरूपितम्। (२)

---

यथा भित्त्याद्याश्रयं विना चित्रमवस्थातुं नार्हति एवं तन्मात्राश्रयणं विना परमसूक्ष्मबुद्ध्यादेः परलोकगमनाद्यसम्भवात् तन्मात्राणि सूक्ष्मशरीरघटकतया अवश्यमङ्गीकरणीयानीत्यर्थः। समष्टिव्यष्टिरूपेण लिङ्गशरीरस्य भेदं दर्शयन्, आदौ समष्टिभूतं सूक्ष्मशरीरं दर्शयति, "इदं चे"ति। "स्वयम्भुवः" = हिरण्यगर्भस्य। व्यष्टिभूतं लिङ्गशरीरं दर्शयति,—"ततश्चे"ति। "ततः" = समष्टिसूक्ष्मशरीरोत्पत्त्यनन्तरम्। तत्र दृष्टान्तमाह,—"पितुरि"ति। अत्र सूत्रकारवाक्यं प्रमाणयति,—"व्यक्तिभेदः" इति। यद्यपि सर्गादौ हिरण्यगर्भोपाधिरूपमेकमेव लिङ्गं, तथापि तस्य पश्चात् व्यक्तिभेदो व्यक्तिरूपेणांशतो नानात्वमपि भवति, यथेदानीमेवास्य पितृलिङ्गदेहस्य नानात्वमंशतो भवति पुत्रकन्यादिलिङ्गदेहरूपेण। तत्र कारणमाह,—कर्म्मविशेषादिति, जीवान्तराणां भोगहेतुककर्म्मादेरित्यर्थः। व्यष्टिलिङ्गशरीरोत्पत्तौ मनुवचनमपि प्रमाणयति, "मनुनाप्युक्तमि"ति। "अमितौजसां" = सर्वत्राप्रतिहतशक्तिकानां, "तेषां षसां" = इन्द्रियषट्कोपलक्षितसमस्तसूक्ष्मशरीरस्य "सूक्ष्मान्" = दुर्लक्ष्यान्, "अवयवान्" = अंशान्, "आत्ममात्रासु" = स्वांशचेतनेषु. "सन्निवेश्य" = संयोज्य, "सर्वभूतानि निर्ममे" = सकलप्राणिसूक्ष्मशरीराणि उत्पादयामासेत्यर्थः।

मनुवचनं स्वयं व्याकरोति "षसामि"ति। लिङ्गशरीरनिरूपणमुपसंहरति, "लिङ्गशरीरमि"ति। षडिन्द्रियं = षसामिन्द्रियाणां समाहारः (२)

स्थूलशरीरोत्पत्तिरुच्यते । दशगुणितमहत्तत्त्वमध्येऽहंकारोऽहङ्कारस्यापि दशगुणितस्य मध्ये व्योम, व्योम्नोऽपि दशगुणितस्य मध्ये वायुः, वायोरपि दशगुणितस्य मध्ये तेजः, तेजसोऽपि दशगुणितस्य मध्ये जलं, जलस्यापि दशगुणितस्य मध्ये पृथिवी समुत्पद्यते । सैव स्थूलशरीरस्य बीजम् । तदेव च पृथिवीरूपं बीजमण्डरूपेण परिणमते । तस्यापि दशगुणितस्याण्डरूपस्य पृथिव्यावरणस्य मध्ये चतुर्द्दशभुवनात्मकं स्वयम्भुवः स्थूलशरीरं तत्संकल्पादेव उत्पद्यते । तेनैव शरीरेण स्वयम्भूर्नारायण इत्युच्यते । तदुक्तं मनुना स्वयम्भुवं प्रकृत्य,—

---

स्थूलशरीरोत्पत्तिनिरूपणं प्रतिजानीते,—स्थूलशरीरोत्पत्तिरि"ति । स्थूलभूतं यावत् अहंकारादिकार्य्यं स्वतः दशगुणितेन कारणेन समावृतमिति दर्शयति "दशगुणिते"ति । चतुर्दशभुवनात्मकसमष्टिस्थूलशरीरावच्छिन्नस्य हिरण्यगर्भस्य ब्रह्मणः नारायणसंज्ञायां मनुवाक्यं प्रमाणयति,—"सोऽभिध्याय" इति । तदर्थश्च,—"सः" = समष्टिसूक्ष्मशरीरावच्छिन्नः परमात्मा विविधाः प्रजाः, "सिसृक्षुः" = स्रष्टुमिच्छुः, "अभिध्याय" = बहु स्यां, प्रजायेयम्, आपो जायन्ताम् इत्याद्येवंरूपेण स्वसयोगात्मकेन अभिध्यानमात्रेण, "स्वात् शरीरात्" = अव्याकृतरूपात् स्वतोऽविभक्तात् प्रधानादिरूपात् शरीरात् । "आदौ" = पृथिवीसृष्टेः प्राक् महदादिसृष्टेः परं, "अपः" = जलं, "ससर्ज" = सृष्टवान् । "तासु" = अप्सु, "बीजं" = पृथिवीरूपम् । "अवासृजत्" = आरोपितवान् । एतेन प्रकृतिपुरुषसंयोगात् प्रकृतेः प्रथमपरिणामरूपा आदिसृष्टिः प्रोक्ता । "तद्बीजं" = पृथिवीरूपं, "हैमं" = हैममिव हैमं शुक्लगुण-, योगात् विशुद्धरूपम् अतएव सहस्रांशुसमप्रभम्, अण्डं = चतुर्द्दशभुवनावरणभूतं स्वयम्भुवः स्थूलशरीरम् अभवत् । "तस्मिन्" = अण्डे = समष्टिस्थूलशरीरे

सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जाऽऽदौ तासु बीजमवासृजत् ॥
तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।
तस्मिन् जज्ञे स्वयं ब्रह्मा सर्व्वलोकपितामहः ॥
स वै शरीरी प्रथमः स वै पुरुष उच्यते ।
आदिकर्त्ता स भूतानां ब्रह्माग्रे समवर्त्तत ॥
आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
ता यदस्यायनं पूर्व्वं तेन नारायणः स्मृतः ॥ इत्यादिनेति ।

तत एव चाऽऽदिपुरुषात् व्यष्टिपुरुषाणां विभागादन्ते च तत्रैव लयात् स एव चैक आत्मेति श्रुतिस्मृत्योर्व्यवह्रियते ।

---

"सर्व्वलोकपितामहः" = स्वांशद्वारा सकलपुरुषव्यष्टिस्थूलशरीरजनकः, "ब्रह्मा" = विराडाख्यः, "जज्ञे" = प्रकटीभूतः । तस्यैव आदिशरीरित्वे प्रमाणमाह,—"स वै पुरुष" इति । तस्य नारायणसंज्ञायां बीजमाह,—"आप" इति । "आपः" = नारशब्देन उच्यन्ते, अप्सु नारशब्दस्याप्रसिद्धेस्तदर्थमाह,—यतस्ताः नराख्यस्य परमात्मनः सूनवः अपत्यानि । आपः, अस्य परमात्मनः ब्रह्मरूपेणावस्थितस्य, पूर्व्वम्, "अयनम्" = आश्रयः, इत्यसौ नारायण इति आगमेषु आम्नातः ।

नन्वेवमात्मभेदस्य सिद्धत्वात् "एक एव हि भूतात्मा भूते भूते व्यवस्थितः" "अहमात्मा गुडाकेश सर्व्वभूताशयस्थित" इत्यादिषु श्रुतिस्मृतिषु आत्मैकत्वप्रतिपादनविरोध इत्याशङ्क्य व्यवहारपरतया एतद्विरोधं परिहरति,—"तत एवे"ति, व्यष्ट्यात्मनाम् अन्योन्यं भेदेऽपि समष्टिरूपहिरण्यगर्भाद् उत्पत्तौ तेषां विभागात् प्रलये तत्रैव लयाच्च तदेकत्वव्यवहारः, न तु परमार्थतः आत्मैकत्वं सिद्धान्त इत्यर्थः । एतेन,—"नारायण एवेदं सर्व्वं यद्भूतं यच्च भव्यम्, निरञ्जनो निर्विकल्पो निराख्यातः शुद्धो देव एको नारायणो न द्वितीयोऽस्ति कश्चिदित्यादिश्रुतौ नारायणमुपक्रम्य "स्थितः स्थिरात्मा सर्व्वात्मा परमात्मा प्रजापतिरि"त्यादिः, स्मृतौ च नारायणस्य सर्व्वात्मकताव्यवहारोऽपि उपपन्न इत्याह,—"अतः" इति । "अतः" =

अतो न व्यवहारपरतया नारायण एव सर्वभूतानामात्मेति श्रुतिस्मृतिविरोध इति। ततश्च स नारायणो विराट्शरीरी स्वनाभिकमलकर्णिकास्थानीयस्य सुमेरोरुपरि चतुर्मुखाख्य-स्वयम्भुवं सृष्ट्वा तद्द्वाराऽन्यानपि व्यष्टिशरीरिणः स्थावरान्तान् ससर्ज। तथाच स्मर्य्यते।

तच्छरीरसमुत्पन्नैः कार्य्यैस्तैः कारणैः सह।

क्षेत्रज्ञाः समजायन्त गात्रेभ्यस्तस्य धीमतः॥ इति। (ल)

यत्तु शेषशायिनो नारायणस्य नाभिकमलश्रोत्रचक्षुरादि-भ्यश्चतुर्मुखस्याऽऽविर्भावः श्रूयते तद् दैनन्दिनसर्गेष्वेव कल्पभेदेन मन्तव्यम्। दैनन्दिनप्रलयेष्वेव हि नारायणशरीरे प्रविश्यैकीभूय सुप्तानां देवानां चतुर्मुखादिक्रमेणाऽऽविर्भावः शेषशायिनः सकाशात् घटते नत्वादिसर्गेषु। दैनन्दिनप्रलय

---

समष्टिरूपादिपुरुषस्य एकत्वात्। स्थूलशरीरसमष्ट्युपहितनारायणाख्यविराट्-शरीरिणः चतुर्मुखब्रह्मसृष्टिद्वारा व्यष्टिशरीरसृष्टिमाह,—"ततश्चे"ति। व्यष्टिसृष्टौ स्मृतिवाक्यं प्रमाणयितुमाह, —"तथा चे"ति। तत् स्मृतिवाक्यमुदाहरति,— "तच्छरीरे"ति। "तच्छरीरसमुत्पन्नैः"= समष्ट्यात्मकविराट्शरीरसमुत्पन्नैः। "करणैः" = इन्द्रियैः। "कार्य्यैः" = देहैः। "क्षेत्रज्ञाः" = व्यष्टिजीवाः। (ल)

ननु यद्येवं चतुर्दशभुवनरूपसमष्टिस्थूलशरीरात्मकनारायणस्य नाभिकमल-स्थानीयात् सुमेरोः चतुर्मुखस्य ब्रह्मणः उत्पत्तिः, तदा शेषशायिनः नारायणस्य नाभिकमलादिभ्यः पुराणेषु प्रसिद्धा चतुर्मुखस्योत्पत्तिः कथं सङ्गच्छते? इत्या-शङ्क्य दैनन्दिनसर्गादिभेदेन तदुपपादयति,,—"यत्त्वि"ति। "दैनन्दिनसर्गेषु"= ब्रह्मणोरात्र्यवसाने जायमानदिनादौ समुत्पन्नेषु सर्गेषु। तदुक्तम्,—"यदा स देवो जागर्त्ति तदेदं चेष्टते जगत्। यदा स्वपिति शान्तात्मा तदा सर्वं निमीलति

प्रथमः ।—कथं वह्निशिखा द्वितीयमपि गृहं कवलयितुमुद्यता !!

द्वितीयः ।—नृत्यतीव, मे हृदयम् । तत् किं तालपत्रसञ्चालनेन सन्धुक्षयामि दहनम् ?

तृतीयः । - अयं सन्धुक्षित एव ।

[ पुनः प्रविशति कात्यायनी ]

कात्यायनी ।—कथं, ज्वलति द्वितीयमपि गृहम् ? वत्सो मे इहैव वर्त्तते । का दशा तस्य ! हा हतास्मि मन्दभागिनी । ( इति वेगेन प्रविशति । )

चतुर्थः ।—इयमपि भस्म वर्द्धयितुमुद्यता ।

द्वितीयः ।—भवतु, वह्निकवलिता भर्त्तुः प्रागेव स्वर्गगता भविष्यति ।

कात्यायनी ।—( निष्क्रम्य ) हा हा धूमापिहितनयना न किञ्चन विलोकयामि । पतति च गृहकुट्टिमे ज्वलदङ्गारराशिः । हा वत्स ! हा जीवितप्रतिम ! ( ग्रामवासिनः प्रति ) भद्राः ! भद्राः ! तनयो मे वह्नेर्भोज्यतां गच्छति । ज्वलति गृहे शयानोऽसौ । रक्षत रक्षत ।

द्वितीयः ।—को नाम ते तनयार्थं जीवितं संशये पातयेत् ?

प्रथमः ।—भवतु, अहं निष्क्रामयामि बालम् ।

द्वितीयः ।—नहि नहि, दग्धो भविष्यसि । ( इति निवारयति । )

कात्यायनी ।—कथं मामपि एकाकिनीमबलां विलोक्य युष्माकं दया न जायते ? हा भाग्यम् । तदहमेव पुनः प्रविशामि । ( इति प्रवेष्टुमिच्छति । )

( ततः प्रविशतो जयदेव-पराशरौ । )

जयदेवः ।—न पुनः प्रवेष्टव्यं भवत्या । अहमेव प्रविशामि । पराशर ! मामनुसर । ( इत्युभौ प्रविष्टौ । )

तृतीयः ।—कथं जयदेवः !

चतुर्थः ।—कथं जयदेवोऽपि लोकपीडनपरस्य दीर्घशिखहतकस्योपकारार्थं संशयितजीवितः संवृत्तः !

प्रथमः । नास्ति तस्य शत्रौ मित्रे च भेदबुद्धिः ।

( गृहान्निष्क्रामतो जयदेवपराशरौ । )

जयदेवः ।—आर्य्ये ! अयमक्षतविग्रहस्ते तनयः ।

कात्यायनी ।—( गृहीत्वा ) मङ्गलमयो युवयोर्मङ्गलं विदधातु ।

जयदेवः ।—अये भद्राः ! कथं, दण्डायमानाः पश्यथ वह्नेर्विलासम् ! नास्ति निर्वापनार्थमुद्यमलेशोऽपि !! कच्चिदुचितमेतद्भवताम् ? आर्य्ये ! कलसानुपनय, तड़ागात् सलिलमानयामः । ( कात्यायनी निष्क्रम्य कलसानानयति । ) भद्राः ! अलं विचारणया । विपदापन्नः शत्रुरपि मित्रत्वेन मन्तव्यः ।

तृतीयः ।—कथं जयदेवोऽस्मानभ्यर्थयते ?

प्रथमः । अथ किम् ? आनयामः सलिलम् । ( इति कलसं गृह्णाति । )

जयदेवः ।—भद्राः ! परमो धर्म्मः खलु परोपकारः । तदागच्छत, सर्वं एव वयं मिलित्वा सलिलमानीय दहनं निर्वापयामः ।

सर्वे ।—एवं कुर्म्मः ।

( इति गृहीतकलसा निष्क्रम्य पुनःपुनः सलिलमानीय सिञ्चन्ति । )

कश्चित् ।—अत्र अत्र ! वह्निगर्भमेतत् स्थानं धूमायते ।

( इति पुनरपि सिञ्चन्ति । )

पराशरः ।—सखे ! निर्वापितप्राय एवायमनलः ।

जयदेवः ।—तथापि सिच्यताम् । यथा स्फुलिङ्गोऽपि न तिष्ठेत् ।

( इति सर्वे तथा कुर्वन्ति । )

जयदेवः ।—अये सर्वं विधौतम् । नास्ति स्फुलिङ्गोऽपि । वरुणेन पराजितो वह्निः । अलमतःपरं सेचनेन । भद्राः ! महत् खलु पुण्यं कृतं युष्माभिः । शत्रो-रुपकारकरणादेव महती वैरशुद्धिः । मूढ़ाः प्रत्यपकारेण वैरं निर्य्यातयितु-मिच्छन्ति । पराशर ! तदेहि गच्छावश्चिकीर्षितमेव साधयितुम् ।

( इति सपराशरो निष्क्रान्तः । )

प्रथमः । अयि ग्रामनायकवनिते ! एतस्यैव परोपकाराय तृणीकृतजीवितस्य जयदेवस्य ताड़नाय ते भर्त्ता दण्ड उत्क्षिप्तोऽभूत् ।

द्वितीयः ।—अरे पापोऽसौ ।

कात्यायनी ।—भद्राः योऽसौ सोऽसौ । अलं मत्पुरतस्तं निन्दित्वा ।

( ततः प्रविशतो दीर्घशिखचन्द्रचूड़ौ । )

दीर्घशिखः ।—अन्विष्टोऽपि न लब्धो जयदेवः ! गृहं मे वह्निना दह्यते इत्या-कर्ण्य त्वरितं प्रत्यावृत्तोऽस्मि । ब्राह्मणि !

कात्यायनी ।—आर्य्यपुत्र ! आगतोऽसि ? सर्वं विध्वस्तम् । उत्सादिता वयम् ।

दीर्घशिखः ।—कथं सर्व्वतोव्यापी कालिमा वह्निरुद्दामसंहारलीलां सूचयति ! उचितमेवैतन्माहशस्य । अहो स्तब्धं गृहं तूष्णीं रोदितीव, सूचयतीव विधातृशासनस्यानुल्लङ्घनीयताम् । अथ केन निर्व्वापितो दहनः ?

कात्यायनी ।—पराशरद्वितीयेन जयदेवेन, एतैर्महाभागैश्च ।

दीर्घशिखः ।—जयदेवेन !!! आश्चर्य्यम् । एवं कुर्व्वन्नसौ विषशलाकयेव विध्यति मे हृदयम् । अपकारपरः पापोऽपि तेनाऽहमेवमुपकृतः । अहावत, न कथं दीर्घशिखस्य शिरसि वज्रं पतति ? न कथमयं जनः पातालकुक्षिगतो भवति ? नहि नहि, जीवितव्यं मया । अधुनापि जयदेवो न प्रसादितः । अप्रसादिते च तस्मिन् मरणेऽपि नास्ति मे शान्तिः । चन्द्रचूड़ ! गच्छ सत्वरम् जयदेवभवनम् । बलेन धृत्वा रक्षणीयोऽसौ । यावदहं तत्र गत्वा तच्चरण-निपतितमात्मानं करोमि ।

चन्द्रचूड़ः ।—यथाज्ञापयसि । ( इति निष्क्रान्तः )

दीर्घशिखः ।—अयि भ्रातरः ! कथं निर्व्वापितो युष्माभिर्दहनः ? न पारितं युष्माभिर्ज्वलद्दीर्घशिखभवनं विलोक्य हसितुं, सकरतालं नर्त्तितुञ्च ? तथा कृते भवद्भिर्मम शान्तिरभविष्यत् । सर्व्व एव देवसुलभेन गरिम्णा विभूषिता मामभितो वर्त्तन्ते । अहमेक एव दानव इव तेषामनिष्टोपायं चिन्तयामि । ईदृशेऽपि जने युष्माकं करुणा ?

प्रथमः ।—भद्र ! स्पर्शमणेः स्पर्शेन लौहमपि कनकत्वमापद्यते । वयमपि तथैवोपकारिणः संवृत्ताः । जयदेवं ज्वलद्गृहं प्रविशन्तं विलोक्य, श्रुत्वा च तद्वचनं न पारितमस्माभिरौदासीन्येन वर्त्तितुम् । तदत्र स महाभाग एव प्रशंसास्पदं, न खलु वयम् । किं बहुना तस्य स्पर्शेनैव शान्तो दहनः ।

( ततः प्रविशति चन्द्रचूड़ः । )

दीर्घशिखः ।—चन्द्रचूड़ ! प्रत्यावृत्तोऽसि ? कथमेतत् ?

चन्द्रचूड़ः ।—आर्य्य ! न लब्धो जयदेवः ।

दीर्घशिखः । न लब्धः !! कथमिव ?

चन्द्रचूड़ः । स खलु इतो गत्वैव पुरुषोत्तमतीर्थाय प्रस्थित इति श्रुतं मया प्रतिवेशिमुखात् ।

दीर्घशिखः ।—पुरुषोत्तमतीर्थाय प्रस्थितः !! अथवा तत्सान्निध्यमपि कथं

लभेत मद्विधः । ब्राह्मणि ! उपकल्पय प्रास्थानिकम् । अहमपि पुरुषोत्तमतीर्थाय प्रस्थास्ये । यावदसौ न लभ्यते, तावत् तदन्वेषणाय विचरणीया मया मही । हा जयदेव ! कथं दयापरवशोऽपि कातराय मे दर्शनं न ददासि ?

---

## षष्ठं दृश्यम्—अरण्यम् ।

ततः प्रविशन्त्यध्वगवेशाः जयदेवः, पद्मावती, पराशरश्च ।

जयदेवः ।—पराशर !

चलितुमलमहं नो तृष्णया पीड़िताङ्गः
तपति च हरिदश्वो वह्निकल्पैर्मयूखैः ।
न सरति मम वाणी शुष्ककण्ठोऽस्मि बन्धो !
सलिलमिह कुतो वा लभ्यते, हा हतोऽस्मि ॥

पद्मावती ।—( कातरम् ) क्व नु खलु सलिलं लभ्यते ?

पराशरः । भवतु सखे ! अत्र छायायामुपविश्य मार्गखेदमपनय, यावदहं सलिलमन्विष्यामि । ( इति निष्क्रान्तः । )

जयदेवः ।—( निश्वस्य ) कान्तारेऽस्मिन् का नाम सलिललाभसम्भावना ?

पद्मावती । नहि, नहि, लप्स्यते सलिलम् ।

जयदेवः । हा नाथ ! विष्णो ! जगतामधीश !
त्वमेव हन्तामरताप्रदश्च ।
जीवेषु नित्यं प्रभुता तवैव,
तथापि किं नाम मुधा निहंसि ?

पद्मावती । अयं ते सखा समागच्छति ।

जयदेवः । कथं शून्यहस्त इव लक्ष्यते ! पराशर ! सखे ! न लब्धं सलिलम् ?

पराशरः । ( प्रविश्य ) सखे ! बहु अन्विष्टं मया । तथापि जलाशयो नावलोकितः, न वा दृष्टः कश्चन मानवः । तत् किमहं करोमि, कथं ते पिपासा निर्वाप्यते ?

जयदेवः । सखे ! किमपरं वा करिष्यसि ? को वा ललाटलिखितमुत्प्रोञ्छितुं शक्नुयात् ?

पद्मावती। आर्य्यपुत्र! अहं गच्छामि सलिलमन्वेष्टुम्।

जयदेवः। त्वं पुनर्गत्वा किं करिष्यसि? पराशरो निवृत्तः, इतः परं त्वया किं कर्त्तुं शक्यते? नाधुना पुरुषोत्तममन्तरेण कोऽपि शरणम्। स चेज्जीवयति, जीवामि, न जीवयति चेत् तदा-"

पद्मावती-पराशरौ। शान्तम् शान्तम्।

जयदेवः। तीव्रा खलु पुरुषोत्तमचरणदर्शनवासना मनसि मे प्रादुरासीत्। न खलु विषयीभूतो भगवानेतयोर्नयनयोः। तदत्र विधिलिपिरेव प्रभवति। हा पुरुषोत्तम!

त्वत्पादपद्मयुगलं हृदये निधाय
गायन् मुदा परमया तव नामगीतिम्,
नेष्यामि जीवनमितीश्वर! चित्त आसीद्
हा हा भवामि सहसा विपिने विपन्नः।
अज्ञानेन कृतं नूनं मया पापं न चेत् कथम्।
पिपासारूपमाश्रित्य त्वत्कृपा दहतीह माम्?

अहो,

वह्निज्वाला हृदयमखिलं प्लुष्यतीवातितीव्रा,
दृष्टिर्लीना तमसि नियतं मज्जतीवातिघोरे,
जिह्वा शुष्का जड़िमविधुरा याति वक्त्राद्बहिर्वा,
गात्रस्तस्मादिह नितरां कम्पमानेव भूमिः।

पद्मावती। (बद्धाञ्जलिः) हा पुरुषोत्तम! सर्व्वतः सञ्चारी किल भवान्। तत् प्रार्थये तीव्रामिमां पिपासां मह्यं प्रदाय जीवय आर्य्यपुत्रम्।

जयदेवः। हा पुरुषोत्तम! कथं दयाम्बुधिरपि न दयसे? अयि शुष्ककण्ठ-तया न मे स्फुरति वाक्। हा जीवितेश! हा जगन्नाथ! हा जगन्नाथ! (इति शेते।)

(ततः प्रविशति गोपबालकवेशी भगवान् नारायणः।)

नारायणः। अयि के यूयम्? कथं मामाह्वयथ?

पराशरः। को भवान्? अथवा अलं प्रश्नेन। अस्ति कुत्रापि सलिलम्? ब्राह्मणोऽयं पिपासया गतप्रायजीवितः। तद् यदि कुत्रापि सलिलं भवेत्, तदानीय—याचे—जीवय ब्राह्मणम्।

नारायणः । अयमासन्नस्तड़ागः । एषोऽहमागच्छामि सलिलं गृहीत्वा । आश्वासय गोस्वामिनम् । ( इति निष्क्रान्तः । )

पराशरः । सखे ! उत्तिष्ठ उत्तिष्ठ । आकर्णिता भगवतास्मत्प्रार्थना ।

( नारायणः पत्रपुटेन जलं गृहीत्वा प्रविशति । )

नारायणः । एतत् सलिलम् । गोस्वामिन् पिब । ( इति पाययति । )

जयदेव । ( पीत्वा ) अहो जीवितोऽस्मि ।

नारायणः । गोस्वामिन् ! अपि शान्ता ते पिपासा ? अथवा पुनरप्यानयामि सलिलम् ?

जयदेवः । नहि नहि, तृप्तोऽस्मि । कः पुनस्त्वं बालक ! येन पुनर्ज्जीवनं लम्भितोऽयं जनः ?

नारायणः । गोपोऽहमस्मिन् वने गाश्चारयामि । अथ गोस्वामिन् ! कथं मन्नाम ज्ञातं त्वया, यदहं नामग्राहमाहूतः ?

जयदेवः । किं पुनस्ते नामधेयम् ?

नारायणः । यथा आहूतवानसि, जगन्नाथनामधेय एवाहम् ।

जयदेवः । सत्यं, जगन्नाथ एवासि । जगन्नाथमन्तरेण को वा एतदवस्थं मां जीवयितुं शक्नुयात् ?

पराशरः । तज्जगन्नाथ ! कुतः सलिलमानीतं त्वया ? अस्माभिस्तु कृतान्वेषणैरपि न लब्धस्तड़ागः ।

नारायणः । कान्तारे कुत्र तड़ागो वर्त्तते, तद्वैदेशिका भवन्तः कथं जानन्तु ? अयमासन्नस्तड़ागः । (इत्यङ्गुल्या निर्द्दिशन्) अमुष्य शालतरोः पार्श्वत एव । क्व पुनर्गच्छन्ति भवन्तः ?

जयदेवः । पुरुषोत्तमतीर्थाय प्रस्थिता वयम् ।

नारायणः । पुरुषोत्तमतीर्थाय ? दूरः खलु मार्गः । अनेन पथा बहवः पुरुषोत्तमयात्रिका गच्छन्ति । अपि जानासि केन पथा काननान्निर्गन्तव्यमिति ?

जयदेवः । न जानामि ।

नारायणः । तत् कथं गमिष्यसि ?

जयदेवः । यथा इयद्दूरमागतोऽस्मि तथैव गमिष्यामि । भगवान् पुरुषोत्तम एव नः पन्थानं दर्शयति । स एवाधुनापि दर्शयिष्यति ।

नारायणः । युज्यते । तथापि अहमेव निष्क्रमणमार्गं दर्शयामि । गहने कान्तारे मार्गभ्रष्टो यदि पुनरपि विपदापन्नो भवसि ।

जयदेवः । तव गावश्च नियमनाभावादन्यत्र गच्छन्ति ?

नारायणः । अलं चिन्तया । अन्येऽपि गोचारकाः सन्ति, ते रक्षणीया मे गावः । तदुत्तिष्ठ, दर्शयामि मार्गम् । ( भारं विलोक्य ) अयि देहि ते भारम् । अहं नयामि । ( इति गृह्णाति । )

पराशरः । मा तावत् । अहं गृह्णामि । विरम विरम । कथं गृहीत एव ?

नारायणः । को दोषः ? क्लान्ता यूयम् । अहमपि भारवहनाभ्यस्त एव । आगच्छत, अनेन पथा । अहमपि युष्माकं मार्गं निर्दिश्य गृहाद्गोत्र्यं गृहीत्वा प्रत्यागच्छामि ।

पराशरः । क्व पुनस्ते गृहम् ?

नारायणः । अस्यामेव दिशि । ( इति सर्वे निष्क्रामन्ति । )

जयदेवः । जगन्नाथ ! क्रीतोऽहं त्वया । पुरुषोत्तमस्त्वां वर्द्धयतु ।

नारायणः । शिरसा गृहीता ब्राह्मणस्याशीः । इतः इतः ।

( इति निष्क्रान्ताः सर्वे । )

---

सप्तमं दृश्यम्—प्रान्तरवर्त्म ।

ततः प्रविशतो दीर्घशिखचन्द्रचूड़ौ ।

दीर्घशिखः ।—( निश्वस्य ) जयदेवानुसरणप्रस्थितयोरावयोरतीतो बहुतिथः कालः । अभिप्रेतसिद्धिरतिदूरवर्त्तिनी,—अभाविनी वेति, नास्ति शक्तिरवधारयितुम् । दिनमनु दिनमागच्छति, उदेत्यस्तमेति च भगवान् सहस्रकिरणः,—तथापि क्व जयदेवः, क्व च दैवोपहतोऽयं दीर्घशिखः । प्रतिदिनमेव प्रातरुत्थाय चिन्तयामि—अद्यैव जयदेवो नयनविषयीभवितेति । पुनस्तमसा धरातलमवगुण्ठयन्ती सन्ध्या समागच्छति, महती ममाशंसा शिशोर्धूलिमयो प्रासादरचनेव पुनर्धूलिसादेव भवति । चन्द्रचूड़ ! एहि अत्र तरुतले कियच्चिरमुपविश्य श्रममपनयाव ।

चन्द्रचूड़ः ।—यथाज्ञापयसि । ( इत्युभावुपविशतः । )

दीर्घशिखः ।—चन्द्रचूड़ ! अपि विलोकयसि भगवन्तमादित्यमस्ताचलशिखरावलम्बिनम् ?

चन्द्रचूड़: ।—विलोकयामि ।

दीर्घशिख: ।—योऽयमादित्योऽस्मच्छरीरमध्यास्ते, सोऽप्येकदा एवमेवास्ताचलचूडामधिरुह्य सहसैव जलधितलगतो भविष्यति । विशेषस्त्वेतावानेव, यत् न खलु तदा प्रतीचीवदनं गौरकरोज्ज्वलं भविता । प्रत्युत काचन तमःसन्ततिरन्तर्द्योतिष्यति । को जानाति, ततः प्रागेव जयदेवो नयनपथमागमिष्यति न वेति ।

चन्द्रचूड़: ।—आर्य ! सन्ध्या समापतति । न च दृश्यते मनुष्यवसतिः । तत् कथमियं रजनी यापनीया ?

दीर्घशिख: ।—यद् भाव्यं तद्भवतु । अलं चिन्तयात्मानं क्लेशयित्वा ।

चन्द्रचूड़: ।—अयं कश्चित् पथिक इत एवागच्छति ।

दीर्घशिख: ।—अस्मद्दुःखदुःखितेन पुरुषोत्तमेन प्रेषितो भविष्यति ।

( ततः प्रविशति पथिकः । )

चन्द्रचूड़: ।- भद्र ! कियद्दूरं गमिष्यति भवान् ?

पथिक: ।—सन्निहितमेव ग्रामं गमिष्यामि । कौ पुनर्भवन्तौ ?

दीर्घशिख: ।—तीर्थयात्रिकावावामित्येतावदेवावगन्तुमर्हति महाभागः ।

पथिक: ।—कथं तीर्थयात्रिकौ ! तत् किंतीर्थमुद्दिश्य चलितौ भवन्तौ ?

दीर्घशिख: ।—भगवान् पुरुषोत्तमो जानाति ।

पथिक: ।—अहो पुरुषोत्तमतीर्थयायिनौ भवन्तौ । धन्योऽहं भवतोर्दर्शनलाभेन, संसारविड़म्बितानामस्माकं दूरापास्ता किल तीर्थयात्रायाश्चिन्तापि ।

दीर्घशिख: ।—कश्चिदन्योऽपि यात्रिका अनेन पथा गच्छन्ति ?

पथिक: ।—बहवः । दिनचतुष्टयात् प्राक् पुरुषोत्तमतीर्थमेव गच्छन् सदारमित्रः कश्चन महाभागः आतिथ्येन मद्भवनमलमकरोत् । महात्मा किलासौ ।

दीर्घशिख: ।—( सौत्सुक्यम् ) भद्र ! अपि ज्ञायतेऽसौ नामधेयतः ?

पथिक: ।—अथ किम् ? जयदेवगोस्वामीत्यभिधानोऽसौ । अपि जानासि तं महाभागम् ?

दीर्घशिख: ।—हुं जानामि ।

पथिक: ।—सन्ध्यापि समागता, तत्र कथं भवन्तावपि ममातिथ्यमङ्गीकृत्य पवित्रीकुरुतो मद्भवनम ?

दीर्घशिख: ।—निराश्रयावावामभिनन्दावो भवदभ्यर्थनाम् ।

पथिक: ।—तदलं विलम्बेन मामनुसर्तुमर्हतो भवन्तौ ।

दीर्घशिख: ।—अनुगृहीतौ स्वः । चन्द्रचूड़ ! गच्छाग्रतः । ब्रह्माण्डनौकर्णधार एव रक्षति नि खलं जगत् । भगवन् ! एव कुर्वन्नपि मादृशैरन्धकल्पैर्न स्मर्यसे तदहो विलसितं ते मायायाः । इति निष्क्रान्ताः सर्वे ।

# SAMSKRITA BHARATI SUPPLEMENT.

OR

# A quarterly English Magazine

OF

## LITERATURE, SCIENCE AND ARTS.

The Editors will in no way be responsible for the views and opinions of the contributors.

Place of Printing—Benares.

Publisher—Manager of the 'Mahamandal Press.'

Office—Burdwan, Bengal.

Annual subscription (inclusive of postage) in advance for

Samskrita Bharati Supplement ... Re. 1—8 As.

Do. Do. Do. for Samskrita Bharati ... Rs. 3—8 As.

Do. Do. Do. Do. for both the parts ... Rs. 5.

## MOTTOS.

(RENDERED FROM SANSKRIT.)

Even a Chandala, if he is a devotee of Hari (God), is superior to a man of the twice born caste (Brahmin); and even a man of the twice-born caste (Brahmin), if he is destitute of devotion to Hari (God), is inferior to a Chandaa —Mahanirvantantram.

This (man) is our relative, that (man) is an alien—this is the calculation of the mean-minded; the noble-minded, on the contrary, look upon the whole world as their kith and kin.—Hitopadesa.

A hero in deed leads those who are skilled (only) in speech-craft. The heroes in speech serve the energetic and persevering to their delight.—Mahabharatam, Santiparvan.

Having shaken off sorrow practise fortitude now. Let there be firmness and courage in tracing her (Sita's) whereabouts. Resolute men do not waver even in very difficult tasks in this world.—Ramayanam, Aranyakandam.

Dear to me (i. e. God) is the man who looks upon praise and dispraise in the same light, who is taciturn, who is satisfied with whatever he gets, who (as a recluse) has no fixed abode, who is of a firm disposition, and who has pious faith—Bhagavadgita, chapter XII.

A person can be reckoned great amongst us, neither by years nor by gray hair, neither by wealth nor by friends and relations, but by adeptness in Vedic lore—such was the injunction of the sages—Manusamhita, Chapter II.

Even a boy-king must not be slighted as a man; for, he is a great Divinity in the form of a human being.—Manusamhita, Chapter VII.

---

## RULES.

(a) Persons desirous of subscribing to this journal should write clearly their names and addresses to the Manager. *All remittances are to be made to him at Burdwan, Bengal.*

(b) Rules as to the publication of advertisements in this journal are to be ascertained from the Manager.

(c) Articles on various subjects excepting religion and modern politics, will be published in this journal. Articles containing reflections on individuals, sects, castes, tribes, communities, creeds, and religious beliefs, will be rejected.

(d) All articles, books and journals etc., are to be forwarded to *Babu Uma Charan Banerjee, M, A, Burdwan, Bengal.*

(e) There will be no acknowledgment of receipt of rejected contributions, They will be returned if the writers want them back, on giving necessary postal stamps.

(f) Writers of articles and commentators should take special care to see that the language of the articles and commentaries *be especially easy, accurate and lucid.*

(g) Results of research concerning the antiquities of India, carried on by well-qualified European and Indian scholars, will be embodied.

(h) Fables, stories, tales, anecdotes, short poems, biographical notices, news etc, will be published.

(i) Good English translation of famous Sanskrit, Pali, Bengali, Hindi works etc., or portions thereof, will occasionally be published.

(j) Gentlemen seeking answers to letters are requested to enclose necessary postal stamps.

## PATRONS AND THE ADVISORY BOARD.

## ADVISORY BOARD AND CONTRIBUTORS.

1. Mahamahopadhyaya Srijut Haraprasad Sastri, M. A., C. I. E., Formerly Principal, Sanskrit College, Calcutta.
2. Mr. Byomkesh Chakrabarti, M. A., Barrister-at-law, Calcutta.
3. Rai Bahadur Joges Chandra Ray Vidyanidhi, M. A, F. R. A. S. Ex-Professor, Ravenshaw College, Cuttack.
4. Srijut Ramnarayan Dutt, B. A., formerly Principal, Burdwan Raj College.
5. Professor J. N. Das Gupta, M. A., Bar-at-law, Presidency College Calcutta.
6. Professor D. N. Mullik, M. A. D. Sc., Do. Calcutta.
7. Srijut Sarada Ranjan Roy, Vidyavinod, M. A., Principal, Vidyasagar College, Calcutta.
8. Professor Lalitkumar Banerjee, Vidyaratna, M. A., Bangabasi College, Calcutta.
9. " Tulshi Das Kar, M. A., Medical College, Calcutta.
10. " Satyendra Nath Bhadra, M. A., Dacca,
11. Principal Sj. M. R. Roy S. K. Yegnarayan Aiyar Avl. M. A. Selam College, Madras,
12. Sj. P. P. Subrahmanya Sastri, B- A. (Oxon), M. A. (Madras), Superintendent, Samskrit schools and Colleges, Madras,

---

BURDWAN, BENGAL.
*Dated the*..........................1920.

DEAR SIR.

With a view to popularising the study of the Sanskrit Literature, especially its vedic, Philosophic and pouranic Branches—the splendid monuments of Hindu glory—we have started a Quarterly Sanskrit Magazine with an English Supplement. By god's grace and with the help and co-operation of several educated gentlemen we were able to start the paper, on the 3rd year of its existenee, in January, 1920. We have not yet met with a hearty response to our appeal. But the response though feeble, is steadily gaining in strength, and we are determined not to lose heart; we hope that the nobleness of the cause will soon draw our learned countrymen to our ranks, and that they will put forth their best efforts to make this novel venture a success. This idea leads us confidently to expect that you will actively afford us material help and co-operation :—Literary contributions esp. rare manuscripts, learned philosophic disquisitions, work of research in various fields, interesting biographhical notices short stories etc, whether in English or Sanskrit would be particularly welcome from learned scholars. Practical encouragement in various ways is solicited of the well-to-do members of the Indian Aristocracy and Gentry who take special interest in the advancement of Sanskrit learning.

If pecuniary help be forth-coming, we are ready to distribute *gratis* 1,000 copies of Sanskrit Bharati and another thousand of the English Supplement amongst the poorer tols, High Schools, Public Libraries etc. all over India.

Yours very truly,
Kamal Krishna Bose, M.A., B.L.,
Prafulla Charan Banerji, B.A.,
Surendra Mohan Kavya-Vyakaran-Puran-Tirtha.

---

Bound Volumes for 1918 and 1919 may be had at the following rates (inclusive of postage)

SAMSKRITA BHARATI

| | | | | | |
|---|---|---|---|---|---|
| With the English supplement | Rs. | 5 | as. | 6 |
| Samskrita-Bharati | Rs. | 3 | as. | 12 |
| Samskrita Bharati supplement | Re. | 1 | as. | 10 |

Special improvements in this Magazine for the year 1921 will, God willing, be :—

(a) Studies in Ancient Biography of India.
(b) Articles involving work of research, investigation in Indian History, Economics &c.,
(c) Disquisitions on Vedanta and other systems of Indian philosophy.

Prafulla Charan Banerjee.
*Manager*
SAMSKRITA BHARATI OFFICE.

# SAMSKRITA BHARATI SUPPLEMENT.

VOL. 3. July-September 1920. No. 3.

## THE POSITION OF THE NON-ARYANS IN THE AGE OF THE RAMAYANAM.

### THE PEOPLE.

BY PROFESSOR BAMA CHARAN BANERJI M. A.,

(Contd. from Vol. III No. 2 p. 41)

I have been at some pains to show that the Vanaras were a non-Aryan tribe and not monkeys. They were one of those innumerable aboriginal tribes to whom the woods and hills of Southern India have ever been a welcome retreat. They were a primitive race of men—men who lived in the dim dawn of creation. Of the three races of people described in the Ramayana the Aryans of Northern India—those who had developed a wonderful civilisation in Oudh, Videha, Kosala and other places—are by far the most highly cultured, and constitute the ornamental top-storey of the structure of civilisation in those days. The lower storey of that structure is formed by the Rakshashas, with their slightly inferior civilisation, nurtured in the solitary recesses of an island in the Indian Ocean. At its base are the Vanaras, and their crude manners and customs present a striking contrast to the polished ways of life of the former two. I have already referred to some of these customs and observances, and I shall speak of them at greater length later on.

### IGNORANCE OF THE USE OF ARMS.

The Vanaras do not possess one of the most obvious characteristics of a civilised people, viz, knowledge of the use of arms. Nowhere in the Ramayanam have they been described as being acquainted with the use of arms. Our poet has consistently desisted from giving them any arms It is for this their lack of familiarity with arms that Shugriba and his followers are frightened at the sight of Rama and Lakshmana. These are thoroughly armed whereas those are absolutely devoid of all knowledge as to how to use arms. Rama and his brother are वरायुधधरौ *ie.* "armed with excellent weapons" they are शरचापासिधारिणौ *ie.*, "equipped with bows and arrows and swords."

The weapons of the Vanaras are the weapons which are within the command of all men and are supplied to them by nature herself. *viz.*, their hands and legs. These are their principal instruments of offence and defence: they attack their enemies with the hard blows of their fists and the 'thrusts' of their legs and these are also their means of parrying the

blows of their opponents. Besides these, they use against their enemies rocks and stones and branches of trees. These are all the weapons they are familiar with ; instruments beyond these they do not know or even require. It was with these that Vali slew of yore the terrific monster, Dunduvi.

अयुध्यत तदा वाली शक्रतुल्यपराक्रमः ।
मुष्टिभिर्जानुभिः पद्भिः शिलाभिः पादपैस्तथा ॥

Vali, the equal of Indra in prowess, then fought with fists, knees, legs, stones and trees.

It is with these again that Vali and Shugriba fight their duels.

तलैरशनिकल्पैश्च वज्रकल्पैश्च मुष्टिभिः ।
जघ्नतुः समरेऽन्योन्यं भ्रातरौ क्रोधमूर्छितौ ॥

The two brothers, overpowered with anger, struck each other with palms resembling the thunder-bolt and with fists like unto the lightning.

वृक्षैः सशाखैः शिखरैर्वज्रकोटिनिभैर्नखैः ।
मुष्टिभिर्जानुभि पद्भिर्बाहुभिश्च पुनः पुनः ॥
तयोर्युद्धमभूद्घोरं वृत्रवासवयोरिव ।

Again,

A terrific fight, like that between Vashaba and the demon Vritra, went on between the two, with trees unlopped of branches, with rocks (lit crowns of rocks), with nails resembling myriads of thunder-bolts, with fists, knees, legs and arms.

In the course of their wanderings in quest of Sita, Angada and his followers are met by a terrible demon ready to destroy them and Angada kills him with a slap of his hand.

समापतन्तं सहसा वालिपुत्रोऽङ्गदस्तदा ।
रावणोऽयमिति ज्ञात्वा तलेनाभिजघान ह ॥

"As he rushed forward suddenly Vali's son, Angada, thinking him to be Ravana, struck him with the palm of his hand"

In Lanka, too, we find the Vanaras using these rude implements of war in their fight against the Rakshasas. Rama and Lakshmana are throughout made to use various offensive and defensive weapons—bows arrows, swords, shields &c.; The Rakshasas too are thoroughly acquainted with diverse instruments of war which they use freely and with great skill, against their enemies, the Vanaras.

परिघान् पट्टिशाङ्कूलान् प्रासान् शक्तिपरश्वधान् ।
चापानि च सुचारूणि खड्गांश्च विपुलाञ्छुभान् ॥
प्रगृह्य परमक्रुद्धाः समुत्पत्य च राक्षसाः ।

&c., &c.

The Rakshasas, greatly incensed, sprang up seizing, bludgeons, *pattishas*, lances, darts, javelins, axes, bows, sharp arrows and large and beautiful swords,

पट्टिशान् परिघान् चक्रान् रिष्टीन्दण्डान्महायुधान् ।
चापजालानि शूलानि भास्वरान् कूटमुद्गरान् ॥
यष्टीश्च तोमरान् प्रासान् चक्राणि मुसलानि च ।
उद्यम्योद्यम्य रक्षोभिर्वानरेषु निपातिताः ॥

The Rakshasas repeatedly uplifted and let fall upon the Vanaras *pattishas*, bludgeons, discuses, swords, rods and mighty weapons, showers of arrows, darts and shining poisoned clubs, staves, crow-bars, darts and quoits and clubs

असिभिः पट्टिशैः शूलैर्गदाभिर्मुसलैर्हलैः ।
शक्तिभिः तीक्ष्णधाराभिर्महद्भिः कूटमुद्गरैः ॥
यष्टिभिर्विविधैश्चक्रैर्निशितैश्च परश्वधैः ।
भिन्दिपालैः शतघ्नीभिरन्यैश्चापि वरायुधैः ॥

(The Rakshasas came out) with swords, *pattishas*, darts, maces, clubs, *plough-shares*, sharp javelins, large poisoned clubs, staves, various discs sharpened *axes*, *vindipalas*, *sataghnis* and many other excellent weapons.

It would be easy to multiply quotations but those given above will be quite sufficient to prove beyond a doubt that the Rakshasas know the use of various weapons of war. The Vanaras, on the other hand, are absolutely ignorant of all these martial instruments and depend for their success entirely upon the prowess of their arms and upon the rocks and stones and uprooted trees which they alone know how to fling with tremendous force upon the enemy thereby causing immense destruction amongst their ranks. It is with these natural means of attack and defence that the Vanaras fight against the armed Rakshasas and create havoc amongst them. While marching against Ravana's capital, Lanka, the Vanaras, on their way, take up mountain-peaks and tall trees by hundreds.

शैलशृङ्गाणि शतशः प्रवृद्धांश्च महीरुहान् ।
जगृहुः कुञ्जरप्रख्या वानरा परवारणाः ॥

The Vanaras, resembling elephants and able to resist foes, took up by hundreds peaks of mountains and large trees.

## रहस्यम्।

### मित्रयोः स्वप्नवृत्तान्तः।

श्रीयुक्तसुरेन्द्रमोहन काव्य-व्याकरण-पुराण-सांख्य-तीर्थस्य।

एकदा बुद्धिधनो नाम कश्चन यवनः प्रातः शयनं परित्यज्य यावद् वहिर्भवनं समायातस्तावदेव तस्य परममित्रं प्रज्ञेश्वरं समायान्तं विलोक्य सानन्दमभ्यनन्दत् "नूनं शतवर्षं ते परमायुर्भूयाद् यतस्त्वमत्र मम स्मरण-मात्रेणैव समुपस्थितः"। प्रज्ञेश्वरः कथयति "ननु पृच्छामि किम्, प्रातरेवाद्य केन हेतुना दीनोऽयं भवतः स्मृतिपथमानीतः"? बुद्धिधनोऽभणत् "उच्यते हि श्रूयताम्। विगतायाः निशायाः शेषयामे स्वप्नः कश्चिद्दृष्टो मया, यद् आवां द्वौ बन्धू सङ्गत्य किमपि गहनं काननं प्रविष्टवन्तौ। कानने तस्मिन् द्वौ विशालौ गर्त्ताववर्त्तताम्। तयोरेक आसीत् शर्करारसपूर्णोऽपरश्च पुरीषोदरः। अनवधानतया आवयो दैव-वशादहं शर्करारसपूर्णे गर्ते न्यपतम्, किन्तु हा कष्टम् त्वया तु तस्मिन् गभीरे पुरीषपूर्णगह्वरे पतितम्। अत्रान्तरे च भग्नस्वप्नोऽहं यदा जागर्मि तावदेव वहिरागत्य त्वामेव परिचिन्तयन् त्वामायान्तं पश्यामि। अतएव मयोक्तं शतवर्षं ते परमायुर्भूयादिति"।

आकर्ण्य चैतद्विवरणः स प्रज्ञेश्वरस्तत्क्षणादेवावोचत "श्रूयतां सखे स्वप्नस्यास्य शेषभागः। सौभाग्याच्चावयो र्मयाऽपि स एव स्वप्नो विधातृवैचित्र्याद् विगत-रजन्यामवलोकितः। अतः कारणादहमद्य सूर्योदयात् प्रागेव तद्वृत्तान्त-कथनाय भवन्तं समुपस्थितः। श्रूयतामवशेषः। त्वं तु शर्करापूर्णे गह्वरे पतितः अहं तु मलगह्वरे। ततश्च द्वावेवावां ताभ्यां गर्त्ताभ्यां समुत्थाय अन्योन्यस्य शरीर-शोधनायाचेष्टावहि, मया खलु रसना-साहाय्येन तव शर्करालिप्तो देहः परिमार्ज्जितः त्वया तु मे समलं शरीरं तेनैव प्रकारेण रसना-साहाय्येन विशोधितम्। ततस्तन्मुहूर्तादेव व्यपगत-निद्रो विशोधित-सर्व्वशरीरोऽहं त्वया सह साक्षात्कर्त्तुं प्रातरेव समागतः। तथापि शरीरं शर्करालेश-शून्यं विशुद्धमिव पश्यामीत्यहो विस्मयः।"

## उष्णता दुग्धेषु ।

### श्रीयुक्तसुरेन्द्रमोहन काव्य व्याकरण-पुराण-सांख्य-तीर्थस्य ।

एकदा जनन्यां रुजा प्रपीडितायां तदीया काचिद् बालिका कन्यका कस्यचिद् गृहस्थस्य गेहे प्रात्यहिक दुग्धं प्रापयितुं समागता। दुग्ध-भाण्डं हस्ते गृहीत्वा गृहस्थो बालिकामपृच्छत् "कथं नु वत्से ! दुग्धमिदमीषदुष्णमिवानुभूयते" ? बालिका च सरला सकल-कलास्वनभिज्ञा निर्व्वोधमुत्तरयति-" नैतद् ध्रुवं जानामि भद्रमुख ! सम्भावयामि तावत् अद्य वा पयस्यस्मिन् उष्णोदकमेव मिश्रितं भवेत् !

---

## धर्म्माधिकरणिकस्य साक्षिणश्च ।

### श्रीयुक्तसुरेन्द्रमोहन काव्य-व्याकरण-पुराण-सांख्य-तीर्थस्य ।

धर्म्माधिकरणिकः—विवादिनं त्वं परिचिनोषि ननु ?

साक्षी—अथकिम् ?

धर्म्माधिकरणिकः—बहून्येव तेन विवाद-वर्त्मानि भणितानि तत्र तु कियन्ति विश्वास योग्यानि कियन्ति वा त्याज्यानि ?

साक्षी—ननु विचार बलेनैव भवता यद्यदेव सत्यमुक्तं तत्तद्विश्वासेन गृह्यताम्, अपरन्तु मृषा भाषितं सर्व्वमेव परित्यज्यतामित्यलं क्षमेण !

---

## घटकर्परकाव्यम् ।

### श्रीयुक्तशरच्चन्द्रचक्रवर्त्तिकाव्यतीर्थस्य

टीकया सहितम् ।

निचितं खमुपेत्य नीरदैः प्रियहीना हृदयावनीरदैः ।
सलिलै र्निहतं रजः क्षितौ रवि-चन्द्रावपि नोपलक्षितौ ॥ १ ॥

टीका—वितनोति शरच्चन्द्रः प्रणम्य सारदापदम् ।
घटकर्पर-काव्यस्य टीकां सरल-बोधिकाम् ॥

तत्रभवान् विक्रमादित्य-सभारत्न-महाकविः घटकर्परो यमकालङ्कारोत्कर्ष-मधुर-रसात्मकं काव्यं चिकीर्षुराह निचीतमिति। प्रियेण स्वामिना हीनानां या हृदयावनी हृदयरूपा पृथिवी तां रदन्ति विदारयन्ति ये तैः । रद विलेखने

कर्त्तरि अत्र, नीरदैः मेघैः उत्पत्य समागत्य खं आकाशं निचितं व्याप्तम् । तथा क्षितौ सलिलैः रजः धूलिः निहतम् । रविचन्द्रौ अपि न उपलक्षितौ दृष्टौ । वर्षाकाले प्रोषित-भर्त्तृका काचिद्रमणी एतदुक्तवती ॥ १ ॥

हंसा नदन्मेघ-भयाद् द्रवन्ति निशामुखान्यद्य न चन्द्रवन्ति ।
नवाम्बुमत्ताः शिखिनो नदन्ति मेघागमे कुन्द-समान-दन्ति ॥ २ ॥

हंसा इति—हे कुन्द-समान-दन्ति ! सखीसम्बोधनमेतत् । मेघागमे वर्षाकाले हंसाः नदन्मेघ-भयात् नदन्तः गर्ज्जन्तः ये मेघाः तेभ्यो यद्भयं तस्मात् । द्रवन्ति गच्छन्ति मानसं प्रतीतिशेषः । अद्य प्रावृषि निशामुखानि प्रदोषाः न चन्द्रवन्ति चन्द्र-युक्तानि न भवन्ति मेघावृतत्वात् । नवाम्बुमत्ताः नूतन-जलपातहृष्टाः शिखिनो मयूराः नदन्ति केकारवं कुर्व्वन्ति ॥ २ ॥

मेघावृतं निशि न भाति नभो वितारम्
निद्राभ्युपैति च हरिं सुख-सेवितारम् ।
सेन्द्रायुधश्च जलदोऽद्य रसन्निभानाम्
संरम्भमावहति भूधर-सन्निभानाम् ॥ ३ ॥

मेघावृतमिति—अद्य वर्षाकाले निशि रात्रौ वितारं नक्षत्र-हीनं नभः आकाशं न भाति । निद्रा सुख-सेवितारं हरिं विष्णुं अभ्युपैति प्राप्नोति । "शेते विष्णुः सदाषाढे" इति मत्स्यपुराणात् । सेन्द्रायुधः इन्द्रायुधयुक्तः जलदः रसन् गर्ज्जन् भूधर-सन्निभानां पर्व्वत-तुल्यानां इभानां गजानां संरम्भं वेगं आवहति गजेन्द्रसदृशं धावति ॥ ३ ॥

सतडिज्जलदार्पितनगेषु स्वनदम्भोधरभीत-पन्नगेषु ।
परिधीर-रवं जलं दरीषु प्रपतत्यद्भुतरूपसुन्दरीषु ॥ ४ ॥

सतडिदिति—स्वनद्भ्यः गर्ज्जद्भ्यः अम्भोधरेभ्यः मेघेभ्यः भीताः पन्नगाः सर्पाः येषु तेषु नगेषु पर्व्वतेषु, अद्भुत-रूपाः सुन्दर्य्यः किन्नरस्त्रियो यासु तासु दरीषु पर्व्वत-गुहासु तडिता सह वर्त्तमानेन जलदेन अर्पितं दत्तं तथा परिधीरः रवो यत्र जले तज्जलं प्रपतति ॥ ४ ॥

क्षिप्रं प्रसादयन्ति सम्प्रति कोऽपि तानि
कान्ता-मुखानि रति-विग्रह कोपितानि ।
उत्कण्ठयन्ति पथिकान् जलदाः स्वनन्तः
शोकोऽपि वर्द्धयति तद्वनितास्वनन्तः ॥ ५ ॥

क्षिप्रमिति—सम्प्रति वर्षाकाले कोऽपि पुरुषः तानि कान्तामुखानि क्षिप्रं सहसा प्रसादयति प्रसन्नानि कारयति। किम्भूतानि कान्तामुखानि रति-विभ्रम-कोपितानि शृङ्गारकलहेन रुष्टानि, स्वनन्तः गर्ज्जन्तः जलदाः पथिकान् प्रवासि-जनान् उत्कण्ठयन्ति गृह-गमनाय उन्मनीकुर्व्वन्ति। तद्वनितासु पथिकस्त्रीषु अपि अनन्तः प्रभूतः शोकः कर्त्ता वर्द्धयति। चुरादि-वृधधातुरकर्म्मकः ॥ ५ ॥

छादिते दिनकरस्य भावने खाज्जले पतति लोक-भावने।

मन्मथेन हृदि हन्तुमुद्यते प्रोषित-प्रमदयेदमुद्यते ॥ ६ ॥

छादिते इति—दिनकरस्य सूर्य्यस्य भानां दीप्तीनां वनं चयः तस्मिन् किरणचये छादिते सति, तथा लोकान् प्रवासि-जनान् भावयतीति लोकभावनं तस्मिन् जले खात् आकाशात् पतति सति, हृदि मन्मथेन हन्तुं उद्यते सति, प्रोषित-प्रमदया प्रवासिनः स्त्रिया इदं वक्ष्यमाणम् उद्यते उच्यते ॥ ६ ॥

सर्व्व-कालमवलम्ब्य तोयदा आगताः स्थ दयितो गतो यदा।

निर्घृणेन परदेश-सेविना मारयिष्यथ न तेन मां विना ॥ ७ ॥

सर्व्वेति—हे तोयदाः ! मेघाः सर्व्वकालमवलम्ब्य स्थित्वा यदा यस्मिन् वर्षाकाले दयितः स्वामी गतस्तदा यूयमागताः स्थ निर्घृणेन निर्द्दयेन तथा परदेशसेविना तेन स्वामिना विना मां न मारयिष्यथ। मां मा पीड़यत ॥ ७ ॥

ब्रूत तं पथिक-पांशुलं घनाः यूयमेव पथि शीघ्र लङ्घनाः।

अन्यदेशरतिरद्य मुच्यतां सा यथा तव वधूः किमुच्यताम् ॥ ८ ॥

ब्रूतेत्यादि—हे घनाः पथिक-पांशुलं पथिकाधमं तं मम स्वामिनं ब्रूत। यूयं यतः पथि शीघ्रलङ्घनाः शीघ्रगामिनः एव ततो युष्मान् ब्रवीमि। किं वक्तव्यं तदाह—अद्य वर्षाकाले अन्यदेशरतिः परदेश-प्रीतिः मुच्यतां त्यज्यताम्। स्वालयं व्रजेति शेषः। अथवा यदि न यास्यति तर्हि तव सा वधूः स्त्री किमुच्यतां। तव पत्नी किं करिष्यति तद् ब्रूहि ॥ ८ ॥

हंस पंक्तिरपि नाथ सम्प्रति

प्रस्थिता वियति मानसं प्रति।

चातकोऽपि तृषितोऽम्बु याचते

दुःखिता पथिक सा प्रिया च ते ॥ ९ ॥

हंसेति—हे नाथ ! सम्प्रति हंसपङ्क्तिरपि मानसं प्रति मानससरः प्रति वियति आकाशे प्रस्थिता। हे पथिक ! तृषितश्चातकोऽपि अम्बु जलं याचते मेघमिति।

सा प्रिया च दुःखिता सती तव पत्नी, ते त्वां, याचते। द्वितीयैक-वचनयोगे ते आदेशः।

नीलशष्पमतिभाति कोमलं
वारि विन्दति च चातकोऽमलम् ।
अम्बुदैः शिखिगणो विनाद्यते
का रतिर्दयितया विनाद्य ते ॥ १० ॥

नीलेति—कोमलं नीलशष्पं नीलवर्णनवतृणं अतिभाति। चातकश्च अमलं वारि विन्दति लभते। अम्बुदैर्मेघैः शिखिगणो विनाद्यते शब्दं कार्य्यते। अद्य वर्षाकाले दयितया प्रियया विना ते तव का रतिः ॥ १० ॥

मेघशब्दमुदिताः कलापिनः
प्रोषिता—हृदय-शोकलापिनः ।
तोयदागम-कृशा च साद्य ते
दुर्द्धरेण मदनेन साद्यते ॥ ११ ॥

मेघेति—कलापिनो मयूराः मेघशब्देन मुदिताः सन्तः प्रोषितानां हृदयशोकं लपितुं प्रकाशयितुं शीलं येषां ते तथोक्ता भवन्ति। अद्य प्रावृषि ते तव सा प्रिया तोयदागमेन कृशा सती पति-विरहात् दुर्द्धरेण मदनेन साद्यते पीड्यते ॥ ११ ॥

किं कृपापि तव नास्ति कान्तया
पाण्डुगण्ड-पतितालकान्तया ।
शोकसागर-जलेऽद्य पातितां
त्वद्गुण-स्मरणमेव पाति ताम् ॥ १२ ॥

किमिति—पाण्डुगण्डे पतितः अलकानां चूर्णकुन्तलानां अन्तः प्रान्तभागो यस्याः तया तव कान्तया स्त्रिया किं कृपापि नास्ति? अद्य शोक सागर-जले पातितां त्वयेति शेषः तां तव पत्नीं त्वद्गुण स्मरणमेव तव गुण-स्मृतिः एव पाति रक्षति ॥ १२ ॥

कुसुमितकुटजेषु काननेषु
प्रियारहितेषु समुत्सुकाननेषु ।
वहति मलिनतां जलं नदीनां
किमिति च मां समवेक्षसे न दीनाम् ॥ १३ ॥

कुसुमितेति—कुसुमिताः कुटजा येषु तथा समुत्सुकानि उत्कण्ठितानि आननानि स्त्री-मुखानि येषु तेषु प्रियया त्वया रहितेषु काननेषु प्रमोदोपवनेषु

दीनां कृपार्हां मां किमिति कथं वा न समवेक्षसे न पश्यसि। तथाच नदीनां जलं मलिनतां आविलत्वं वहति, इति च किं न समवेक्षसे। समागतो वर्षाकाल-स्त्वया कथं न लक्षितः इति भावः॥ १३॥

मार्गेषु मेघसलिलेन विनाशितेषु
कामो धनुः स्पृशति तेन विना शितेषु।
गम्भीर-मेघ रसित-व्यथिता कदाहं
जह्यां सखि! प्रिय-वियोगज-शोकदाहम्॥ १४॥

मार्गेष्विति—हे सखि! मेघसलिलेन वृष्टि-जलेन मार्गेषु पथिषु विनाशि-तेषु सत्सु रुद्धेषु इति पदमध्याहार्य्यम्। शितः शाणितः ईषुर्व्वाणो यत्र तत् धनुः कामः कन्दर्पः स्पृशति धारयति। तेन स्वामिना विना गम्भीर-मेघ-रसितेन गभीर-मेघ-गर्ज्जनेन व्यथिता अहं कदा केन प्रकारेण प्रिय-वियोगज-शोकदाहं स्वामिविच्छेद-दुःख-ज्वालां जह्यां त्यजेयम्॥ १४॥

मधुगन्धतया वने जितानां
स्वनदम्भोधर-वात-विजितानाम्।
मदनस्य कृते निकेतनानां
प्रतिभान्त्यद्य वनानि केतकानाम्॥ १५॥

मध्विति—मधुगन्धतया मिष्टगन्धातिशय्येन वने जितानां श्रेष्ठानां स्वनन्तः गर्ज्जन्तः ये अम्भोधराः मेघाः तेभ्यो जातो यो वातः वायुस्तेन विजितानां विक-म्पितानां तथा मदनस्य कृते निकेतनानां कामगेहानां केतकानां केतकपुष्पाणां वनानि प्रतिभान्ति दीप्यन्ते॥ कृते इति पदं निमित्तार्थकं अव्ययम्॥ १५॥

त्वां साधु मत्वा सुरभिं ससर्ज्ज
प्रजापतिः काम-निवास सर्ज्ज।
त्वं मञ्जरीभिः प्रवरो वनानां
नेत्रोत्सवश्चासि सयौवनानाम्॥ १६॥

त्वामिति—हे कामनिवास सर्ज्ज! शालतरो! प्रजापतिर्व्विधाता साधु यथा स्यात्तथा मत्वा सुरभिं त्वां ससर्ज्ज सृष्टवान्। मञ्जरीभिः वनानां प्रवरः श्रेष्ठस्त्वं सयौवनानां युवतीनां नेत्रो-त्सवश्च नयनानन्दकरश्च असि भवसि॥ १६॥

नवकदम्ब शिरोऽवनतास्मि ते
वर्षति यन्मदनः कुसुमस्मिते।

कुटज किं कुसुमैरुपहस्यते
निपतिता च सुदुष्प्रसहस्य ते ॥ १७ ॥

नवेति—हे नव-कदम्ब! यत् यस्मात् ते तव कुसुम-स्मिते पुष्पहासे मदनो वसति तस्मादहं शिरोऽवनतास्मि। त्वां शिरसा प्रणमामि। हे कुटज! सुदुष्प्रसहस्य दुःखातिशयेन-सोढुमशक्यस्य ते तव कुसुमैः किं कथं निपतिता दीना रमणी उपहस्यते उपहसिता क्रियते ॥ १७ ॥

तरुवर विनतास्मि ते सदाहं
हृदयं मे प्रकुरुष्व नो सदाहम्।
तव कुसुम-निरीक्षणापदेहं
विसृजेयं सहसैव नीप देहम् ॥ १८ ॥

तरुवरेति—हे तरुवर? हे नीप! कदम्ब वृक्ष! ते तुभ्यं सदा अहं विनतास्मि प्रणतास्मि। मे मम हृदयं सदाहं दाहेन सह वर्त्तमानं ज्वालायुक्तं नो प्रकुरुष्व मा कुरु। तव कुसुमनिरीक्षणेन अपदा स्थितिरहिता ईहा चेष्टा यस्मिन् तत् निश्चलं देहं मम शरीरं सहसैव अनायासेनैव विसृजेयं त्युक्तुं शक्याहम् ॥ १८ ॥

कुसुमैरुपशोभितां सितै
र्घनमुक्ताम्बुनव-प्रकाशितैः।
मधुनः समवेक्ष्य कालतां
भ्रमरश्चुम्बति यूथिका-लताम् ॥ १९ ॥

कुसुमैरिति—घनेभ्यो मुक्तं पतितं यत् अम्बु तेन नवप्रकाशितैः नूतन-प्रस्फुटितैः सितैः निर्म्मलैः कुसुमैरुपशोभितां मधुनः पुष्प-रसस्य कालतां समयत्वं चैत्रत्वं नभस्त्वं इतिवत्। वसन्तकालमिति शेषः। समवेक्ष्य दृष्ट्वा भ्रमरो यूथिकालतां चुम्बति ॥ १९ ॥

तासामृतुः सफल एव हि या दिनेषु
सेन्द्रायुधाम्बुधरगर्ज्जित-दुर्द्दिनेषु।
रत्युत्सवं प्रियतमैः सह मानयन्ति
मेघागमे प्रिय-सखीश्च समानयन्ति ॥ २० ॥

तासामिति—सेन्द्रायुधाः इन्द्रायुधयुक्ताः ये अम्बुधराः मेघाः तेषां गर्ज्जितैन दुर्द्दिनेषु दिनेषु वर्षाकाले इत्यर्थः। याः स्त्रियः प्रियतमैः सह रत्युत्सवं काम-

केलिं मानयन्ति सम्पादयन्ति प्रियसखीश्च मेघागमे समानयन्ति आद्रियन्ते तासां स्त्रीणां सम्बन्धे चतुर्व्वर्षाकालः सफल एव आनन्दप्रद एव हि निश्चितम् ॥ २० ॥

भावानुरक्तवनितासुरतैः शपेयं
आलभ्य वारि तृषितः करकोषपेयम् ।
जीयेय येन कविना यमकैः परेण
तस्मै वहेयमुदकं घटकर्परेण ॥ २१ ॥

## इतिघटकर्परकाव्यं समाप्तम् ।

भावानुरक्तेति—भावानुरक्त-वनितानां कामपीड़ित-स्त्रीणां सुरतैः रति-क्रीड़ाभिः तृषितोऽहं करकोष-पेयं हस्तपानपात्रमात्रपेयं अत्यल्पमित्यर्थः वारि आलभ्य प्राप्य च शपेयं आक्रोशेयम्। येन परेण श्रेष्ठेण घटकर्परेण घटकर्पराख्येन कविना यमकैः करणैः—शब्दालङ्कारविशेषैः अहं जीयेय तस्मै कवये निमित्ताय अहं उदकं जलं वहेयम् ॥ २१ ॥

---

## परमार्थोपदेशः ।

### श्रीयुक्तरामेन्द्रनाथस्मृतितीर्थस्य ।

### १म खण्डस्य ४८ पृष्ठतोऽनुवृत्तः ।

महान्धकारनिचयं यथा हरति भास्करः ।
तथा मोहान्धकारञ्च हरते वैष्णवो जनः ॥ १३ ॥
हरेर्नाम हरेर्नाम हरेर्नामैव केवलम् ।
कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा ॥ १४ ॥
विशेषतः कलौ युगे हरेर्नामैव केवलम् ।
वदन्ति मुनयः सर्व्वे गतिर्नास्ति हरिं विना ॥ १५ ॥
कलावन्यानि धर्म्माणि सन्ति चेद् विविधानि च ।
एकमेव हरेर्नाम सर्व्व—धर्म्माधिकं विदुः ॥ १६ ॥
हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे ।
हरे राम हरे राम राम राम हरे हरे ॥ १७ ॥
हरेर्नाम महामन्त्रमिति द्वात्रिंशदक्षरम् ।
स्मरणात् कीर्त्तनादस्य सर्व्वाभीष्टमवाप्नुयात् ॥ १८ ॥

आलस्ये वा तथैवैषां सुभावे वा कुभावके।
गदिते श्रीहरेर्नाम्नि सर्व्वेषां मङ्गलं भवेत् ॥ १९ ॥
मङ्गले श्रीहरेर्नाम्नि जगत्-पावन-पावने।
विश्वासो जायते यस्य सोऽपि धर्म्मभृताम्वरः ॥ २० ॥
नामचिन्तामणिः श्रीमान् सच्चिदानन्द-रूपकः।
श्रीनाम-नामिनोर्भेदः नास्तीति श्रुतिरब्रवीत् ॥ २१ ॥
नाम्नः प्रभावात् परमयोगी गुरुर्महामुनिः।
नारदो भगवान् व्यासो वाल्मीकिः सनकादिकः ॥ २२ ॥
प्रह्लादो परमो भक्तो ध्रुवश्चोद्धव एव च।
नाम्नः प्रभावात्ते सर्व्वे परमां गतिमाप्नुयुः ॥ २३ ॥
अजामिलो गजेन्द्रश्च मुनयः शौनकादयः।
नाम्नः प्रभावात्ते सर्व्वे देवादीनां वरा मताः ॥ २४ ॥
जाम्बवांश्च हनूमांश्च सुग्रीवश्च विभीषणः।
नलनीलाङ्गदाश्चैव रामदासवरा मताः ॥ २५ ॥ क्रमशः।

---

## श्रीहनुमत्सप्तकम्।

### श्रीयुक्तराधाकान्तशास्त्रिणां।

१

अज्ञान-गाढान्ध-विनाशनेन, विरोचनं वाऽपररोचमानम्।
अशेष-राद्धान्त-विदग्रगण्यं, वन्दे सदा वानर-सैन्य-राजम् ॥

२

ललना-ललामाञ्जनिगर्भजातं, गणनाऽसमाख्यानबलाभिव्याप्तम्।
अभिरामरामा रमणस्य दूतं, पवनात्मजं तं शरणं प्रपद्ये ॥

३

अगाधनीत्यर्णवमन्थनेन, दूरीकृतो दुर्जन सङ्गमश्च।
उरीकृतः सज्जनसङ्गसङ्गो, वन्दे सदा कुमुदवलाभिनाथम् ॥

४

प्रतप्तकार्तस्वरदेहशोभया, भयात् क्रिलाग्निर्भविता तनूनपात्।
दिवाकराच्चैव बिभेति यत्तमः, विराजितं तेन नमामि तेजसा ॥

५

सौवर्ण-कर्णाभरणच्छलेन, शङ्के शशाङ्कौ अवगाय प्राप्तौ ।
शिष्यद्वयेनेव सुशोभितं तं, कर्णद्वयेन प्रणमामि भूयः ।

६

अत्यायतैर्हेम-सुवर्ण-वर्णैः, मौञ्जे गुणे निर्मित-ब्रह्म-सूत्रम् ।
नाशाय संसारदुहां सतां च, सुखाय वन्दे सुकरात्तवज्रम् ।

७

तेजोऽग्निनानल्प-धराविनाशे, करेऽपसव्ये दधतं पताकाम् ।
सुकेशराख्येन हरस्य तुल्या, लोके लसन्तं प्रणमामि प्राप्तम् ॥

---

## वसुन्धराम् ।

### श्रीयुक्तराधाकान्तशास्त्रिणा ।

१

शक्तिः क्व भक्तिः क्व च सा सुमेधसां, योगः क्व भोगः क्व पुनर्जगद्गुरुः ।
वीणा कवीनामिव कुत्र हन्त! गीः, सन्त्यज्य याता सहसा वसुन्धराम् ।

२

देशान्तरेषु प्रचरन् चिकीर्षति, क्रीडां हि कालो धरया सहैव नु ।
आलस्यसौधान् विदधत्ततस्ततः, कुत्सावयस्यां कुरुते वसुन्धराम् ॥

३

मानेन योऽसौ बलवान् समेधते, स्पर्धाङ्गणे नृत्यति हन्त! लीलया ।
सोऽयं जनः सम्प्रति खिद्यते स्फुटं, कालोपयोगेन गतो वसुन्धराम् ॥

४

दन्ती यथोद्यान-वनं मनोरमं, क्रूरश्च राजीवसरांसि सैरिभः ।
व्योमद्युतिं सायमपास्य कालिमा, रुणद्धि कालोऽद्य तथा वसुन्धराम् ॥

५

जग्ध्वा पुरा क्रूरतया नु कोटिशः, धीरान् कृतार्थान् कृतिनः कवीन् प्रियान् ।
दंष्ट्रा विटङ्कस्फटैर्भयंकरः, कालोऽद्य भाव्यस्यधि हा! वसुन्धराम् ॥

६

जीवातवोऽहो कुटिलेन भक्षिताः, कालेन लोकस्य शुचाञ्च नो फलम् ।
तेषामधीरो विरहः करोति नु, नक्तं दिनं यत्तरलां वसुन्धराम् ॥

७

सत्सङ्गतः सज्जनता खले भवत्येतत्कथं विश्वसितु क्षितौ जनः ।
यस्माद्भवाब्धाङ्गिरसान् भजन्नपि क्लिश्नासि कालाग ! सदा वसुन्धराम् ॥

८

यदीय साम्राज्य पदानुकम्पया सम्प्राप्य भूषां सुषमां पुपोष ।
सा साञ्जलिः सम्प्रति याचतेऽनिशं मां पाहि भो भो परितो वसुन्धराम् ॥

९

अपि खले समये प्रबलं यथा पदमदायि न कदाप्यनन्तया ।
अहह ! तां सहसा विधुरे विधौ खलु खलाः प्रभवन्ति वसुन्धराम् ।

१०

शठ ! कथं धरणीजननीमनः कलुषितं विदधच्च न लज्जसे ।
सकल-सद्गुणनिर्मितिं सादरां विसृज रे ! ऽधम ! साधु वसुन्धराम् ॥

---

## एकवीरोपाख्यानम् ।

### प्रथमोऽंशः ।

### श्रीयुक्तचारुचन्द्ररायचतुर्धुरिणः ।

'अकारो भगवान् ब्रह्माप्युकारो विष्णुरुच्यते ।
मकारो भगवान् रुद्रोऽप्यर्द्धमात्रा महेश्वरी ॥
उत्तरोत्तर-भावेनाप्युत्तमत्वं स्मृतं बुधैः ।
अतः सर्व्वेषु शास्त्रेषु देवी सर्व्वोत्तमा स्मृता ॥"

ब्रह्मादिस्तम्बपर्य्यन्तं समस्तं जगत् योगमाया-वशे तिष्ठति । ब्रह्म-विष्णु-हरादयो देवास्तिर्य्यङ्नरादिप्राणिन इव सर्व्वे मायातन्त्रीनिबद्धा भ्रमन्ति । योगमायाप्रभावेण हरेरवताराः प्रभवन्ति ।

त्रिलोकोपरि सत्यलोकः सत्यादुपरि वैकुण्ठलोक आस्ते । वैकुण्ठो वैष्णवानां परमं धाम । एतत् शाश्वतमनन्तं स्थानं हिरण्मयं मोक्षपदं नानावृक्ष-समाकीर्ण-

वापीशत-विराजितं हंसमयूर-शुक-कोकिलादि-विहगानां कलकूजितैर्युतं उच्च-प्रासाद-संयुक्तं पताकाभिरलङ्कृतं नृत्यगीत-कलापूर्णं मन्दारकुसुमशोभितं नाना-जनपदाकीर्णमास्ते । तत्र द्वारपालैः सुरक्षिते सुरम्य-भवने अनन्तशय्योपरि लक्ष्मी-नारायणौ विराजेते । कस्मिंश्चित् समये सूर्य्यपुत्रो रेवन्त उच्चैःश्रवसं हयरत्नमारुह्य लक्ष्मीनारायण-दर्शनाय वैकुण्ठं जगाम । भगवान् हरिस्तमागच्छन्तं दृष्ट्वा लक्ष्मीमाह– 'प्रियतमे ! कोऽयमायाति पश्यसि?" एवं भगवता पृष्टा लक्ष्मीस्तु तदा मनोहरं हयरूपमवलोक्य महामायाप्रभावेन काममोहिता कियत्कालञ्च स्तम्भितनेत्राभवत् । तद्दृष्ट्वा भगवान् क्रोधमापन्नस्तमाह-"अयि चञ्चलाक्षि ! मया पृष्टाऽपि कथं न भाषसे कथं त्वं परप्रेम्णा चपलाक्षी ? यतस्त्वं सर्व्वत्र रमसे ततो 'रमा' इति चञ्चलत्वाच्च चला इति–ख्याता भविष्यसि । यतस्त्वं हयं दृष्ट्वा मोहिता भवसि ततो मच्छापात् मर्त्यलोके त्वं बड़वा भव ।" तच्छ्रुत्वा सा देवी अतिदुःखिता स्वपतिं प्रणम्य सविनयमुवाच–"भो दयानिधे ! कथं त्वया स्वल्पे दोषे ईदृशो निदारुणोऽभिशापो मह्यं दत्तः । मर्त्यलोके जन्म लब्ध्वा सर्व्वान् देहजान् गुणान् प्राप्य देहिनो महादुःखमाप्नुवन्ति, देहिनां देहभावा बहवः–क्षुधा, तृष्णा, निद्रा, भयं, तन्द्रा, व्यामोहः, शोकः, हर्षः, अभिमानः, संशयः, अज्ञानं, ग्लानिः, ईर्षा, असूया, मदः, श्रमः, जरा, मरणञ्च एते देहभवा भावाः सर्व्वेषु देहिषु प्रभवन्ति । प्राणिनस्तद्वशगा विविधानि दुःखानि भुञ्जते । प्रभो ! अहं कदापि तव ईदृशं कोपं नैव दृष्टवती । भो देवेश भो करुणानिधे ! मयि सुप्रसन्नो भव । यथाहं शापमुक्ता भविष्यामि तद् विधेहि ।" हरिरुवाच–"भो तन्वङ्गि ! यदा पृथिव्यां तव गर्भजातो मत्पुत्रो भविष्यति तदा त्वं शापमुक्ता पुनर्वैकुण्ठमागमिष्यसि ।

तदाकर्ण्य भयार्त्ता चातिदुःखिता सा रमा देवी जगत्पतिं दूरात् प्रणम्य वड़वारूपं धृत्वा मर्त्यलोकं जगाम । पुरा सूर्य्यपत्नी यत्र कठोरं तपस्तप्तवती, तस्मिन् कालिन्दी–तमसासङ्गे सा तस्थौ । तत्र पवित्रे सर्व्वकामप्रदे सुरम्यवन-शोभिते स्थाने सा वैराग्यं समुपाश्रिता ऐकान्तिकेन मनसा गौरीदेहार्द्धधारिणं चन्द्रशेखरं ध्यायमाना शङ्करस्य प्रीत्यर्थं दुश्चरं तपश्चकार । महादेवस्तस्यास्तपसा तुष्टो भूत्वा गौरीसहितस्तत्रागत्य अश्विनीरूपिणीं तां हरिप्रियामुवाच–"भो कल्याणि ! किं तपस्यसि ? स्वपतिं हरिं त्यक्त्वा कथमद्य त्वं मां स्तौषि ? पतिरेव नारीणां देवता, पतिशुश्रूषणमेव स्त्रीणां सनातनो धर्म्म इति वेद-वचनम् । नारायण एव सर्व्वैः सेव्यस्तं देवेशं त्यक्त्वा कथं त्वं मां ध्यायसि ?"

लक्ष्मीरुवाच—"भो महादेव ! अहं पतिशप्ता अश्विनीरूपिणी अत्रागता । भो देवेश ! अस्मात् शापात् मां समुद्धर । दयायुक्तेन हरिणाऽहमुक्ता—'यदा ते पुत्रो जनिष्यते तदा ते शापमोक्षणं भविष्यति ।' पतिसङ्गं विना मे पुत्रलाभो नैव सम्भवति । पतिर्मे वैकुण्ठे तिष्ठति अहमत्र तिष्ठामि । त्वं तस्य, स च तव प्राणः । उभयोरन्तरं नास्ति, ये वैष्णवा महेश्वरं द्विषन्ति ये च शैवा हरिं द्विषन्ति ते नूनं नरकं यान्ति । एवं तस्य च तव एकत्वमहं जानामि । यदि त्वं तुष्टो भवसि तदा मह्यं वरं देहि यथा मे पतिसङ्गमः स्यात् ।"

शिव उवाच—"भो हरिप्रिये तव तपसा तुष्टोऽस्मि, त्वं स्वस्था भव, तव-पतिना सह समागमो भविष्यति, तत्र न संशयः । भगवान् हरिः हयरूपेणात्रैवा-गमिष्यति । भूतले तव नारायणसमः पुत्रो भविष्यति, स एकवीर-हैहय-कार्त्तवीर्य्यार्ज्जुन-नामभिः विख्यातो भविष्यति, तस्माद्धैहयानाञ्च वंश उद्-भविष्यति ।"

इति तस्यै वरं दत्त्वा उमया सहितः शिवः अन्तर्दधौ । सा कमलामना ऐकान्तिकेन मनसा पत्युश्चरणाम्भोजं ध्यायन्ती प्रेमगद्गदया वाचा तं हरिं मुहुर्म्मुहुस्तुष्टाव ।

महादेवस्तु कैलासं गत्वा चित्ररूपनामानं गणं लक्ष्मीकार्य्यसिद्धये वैकुण्ठे प्रेषयामास ।

चित्ररूपो वैकुण्ठभवनं प्रविश्य विष्णुं दण्डवत् प्रणम्य कृताञ्जलिपुटः स्थितः । भगवान् हरिस्तं दृष्ट्वा सकुटुम्बस्य शम्भोः कुशलं पप्रच्छ उवाच च—"हरस्य देवता-नाम्वा किं कार्य्यं साधयितुं त्वमत्र प्रेषितस्तद्ब्रूहि ?"

चित्ररूप उवाच—"भो भगवन् ! भवान् सर्व्वान्तर्य्यामी त्रिकालज्ञः, भवत्-सकाशे किं ब्रवीमि ? महादेववाक्यमेव ब्रवीमि—'हयीरूपधरा महालक्ष्मीः परम पवित्रे कालिन्दीतमसासङ्गे तपस्तपति । कोऽपि जनः स्त्रियं विना सुखं नाप्नोति । दुर्व्वलोऽपि निर्धनोऽपि नरः स्त्रियं पाति । अपराधं विना कथं सा त्वया त्यक्ता, यस्य भार्य्या संसारे दुःखं प्राप्नोति तस्य जीवितं धिक् । स लोकैर्नि-न्दितो भवति । सर्व्वे रिपवः लक्ष्मीहीनं त्वां दृष्ट्वा हसिष्यन्ति । अहं मम स्त्रीवि-रहजदुःखं सम्यक् स्मरामि । यदा मम भार्य्या सती देवी दक्षयज्ञे मृता तदाहं दुःखं भुक्तवान्, अस्मिन् संसारे कोऽपि मत्सदृशो दुःखभागी माभूत् । अहं तदा पत्नी-

विरहितो मनसा शोकं चकार । कालेन मया गिरिसुता पुनः प्राप्ता । भो भगवन् ! कामिनीं त्यक्त्वा किं सुखमाप्नोसि ? त्वमश्वरूपं धृत्वा यत्र सा रमा तपस्तपति तत्र गच्छ । तत्र पुत्रमुत्पाद्य लक्ष्मीदेवीं शापमुक्तां कृत्वा पुनस्तां वैकुण्ठमानय" इति ।

हरिश्चित्ररूपस्य वचनमाकर्ण्य तथेत्युक्त्वा तं शङ्करसकाशं प्रेषयामास । ततो विष्णुर्व्वाजिरूपं धृत्वा परमपावने कालिन्दी-तमसा-सङ्गे हयीलक्ष्मीसकाशं जगाम । तत्र तयोः सङ्गम आसीत् हरिप्रिया च गर्भवती जाता, सुन्दरञ्च बालं सुषुवे । ततो लक्ष्मीनारायणावुभौ दिव्यदेहौ जातौ, सद्योजातमनाथं हरिसमं सुतं विजने वने त्यक्त्वा तौ विमानवरमारुह्य वैकुण्ठं प्रययतुः । क्रमशः

---

## जीवतत्त्वनिरूपणम् ।

### श्रीयुक्तरामकिंकरतर्करत्नस्य ।

जीवोऽविनाशो सुखराशिरेव
ब्रह्मांश एवामलचेतनश्च ।
वशीकृतोऽसौ खलु माययैव,
कीटो यथा कोष-निबद्ध आस्ते ।

जीवस्य अविनाशित्वे चैतन्यवत्त्वे च प्रमाणं यथा, 'अरे अयमात्मा अनुच्छित्ति-धर्म्मा चेतसा वेदितव्य' इति श्रुतिः । देहादिविलक्षणोऽस्मदर्थश्च सः । षड्-भाव-विकार-रहितश्च, तथा च नात्मा वपुः पार्थिवमिन्द्रियाणि, देवाह्यसु र्व्वायु-र्जलं हुताशः । मनोऽणुमात्रं धिषणा च सर्व्वमहीकृतिः खं क्षितिरर्थसाम्यमिति नात्मा जजान न मरिष्यति नैधतेऽसौ न क्षीयते सवनविद्व्यभिचारिणांहि सर्व्वत्र शश्वदनपाय्युपलब्धिमात्रं प्राणो यथेन्द्रियबलेन विकल्पितं स्यादिति चैकादश स्कन्धीयदेदीप्यमान-प्रमाणाच्च । 'नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः । न चैनं क्लेदयन्त्यापो न शोषयति मारुतः' इत्यादि भगवदुक्तेः 'नित्यो नित्यानां चेतनश्चेतना-नामेको बहूनां यो विदधाति कामान् । तं पीठस्थं ये तु यजन्ति विप्रा तेषां शान्तिः शाश्वती नेतरेषा 'मित्यादिश्रवणाच्च', ब्रह्मांशश्च सः 'ममैवांशो जीवलोके जीवभूतः सनातन' इत्यादि भगवद्वाक्यात्, यथा अग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति एवमेवा-स्मादात्मनः सर्व्वे प्राणाः सर्व्वे लोकाः सर्व्वे देवाः सर्व्वाणि भूतानि सर्व्व एवात्मा-नोव्युच्चरन्ति इति बृहदारण्यकोपनिषदि श्रवणाच्च । स च अणुः केशाग्रशत-

भागस्य शतधा कल्पितस्य च भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते। चार्व्वाकास्तु शरीरमेवात्मेति यदाहुः तदतीवासङ्गतम्, आत्मनश्चैतन्यवत्त्वं शरीरस्य तु तदभावात्, न च शरीरस्य चैतन्यवत्त्वं, अहं तिष्ठामि स्थूलोऽहं कृशोऽहमित्यादिविमर्शात् इति वाच्यं, तथात्वे मृतशव-शरीरस्यापि चैतन्यवत्त्वं प्रसजेत् । न च शरीरस्य इन्द्रियाणामेव चैतन्यवत्त्वेन आत्मत्वं सिद्धमिति वाच्यं, इन्द्रियाणां विनाशे स्मरणानुपपत्तेः, न च अन्तःकरणस्य मनस एव आत्मत्वमस्तु इति वाच्यं, तथात्वे ज्ञान-विषयकं ज्ञानं न जायते मयैतज् ज्ञायते एतन्मे मनसि वर्त्तते इदं न स्मर्य्यते इत्याद्यनुपलब्धेः एतावता मनसोऽन्यो जीवात्मा सिद्ध एव । स तु कर्त्ता भोक्ता च भवति विज्ञानं यज्ञम् तनुते कर्म्माणि तनुतेऽपिचेति श्रवणात् ।

केचित्तु प्रकृतिः कर्त्री भोक्ता तु जीव इति यदाहुः तदप्यतीवासङ्गतं । कर्त्तृत्व-भोक्तृत्वयोरेकनिष्ठत्वात् । यदाहुः वनपर्व्वणि—नान्यः कर्त्तुःफलम् राजन्नुपभुङ्क्ते कदाचनेत्यादि । न च निर्व्विकारत्वश्रुत्या जीवस्य कर्त्तृत्वं बाध्यते इति वाच्यम्, द्रव्यान्तररूपस्य विकारस्य तत्रासत्त्वात् । यथा संयोगाश्रयेऽपि आकाशे न कोऽपि विकारः तथा स्थूलक्रियासत्त्वेऽपि स नात्मनि इति ।

सुषुप्तावपि सुखज्ञानानुभवकर्तृत्वेन पारमार्थिकं कर्त्तृत्वमस्ति जीवस्य तच्चेश्वरायत्तं ज्ञेयं, एष एव साधु कर्म्म कारयतीति श्रुतेः । परात् तच्छ्रुतेरिति सूत्राच्च, अस्ति भाति विदधातीत्याद्यर्थानामात्मनि सत्त्वेन जीवस्य सक्रियत्व सिद्ध्यतीति धात्वर्थो हि क्रियेति स्मरणात् ।

स च अविद्याविकृत एव दुःखमनुभवति अन्यथा सुखराशिरेव यथा अविद्यायामन्तरे वर्त्तमानाः स्वयं धीराः पण्डितम्मन्यमाना इति श्रवणात् । अविद्यावच्छिन्न एव जीवो दुःखभागी अविद्यारहितस्तु सुखभागी, एतावता सुखराशित्वमेव जीवस्य सारूप्यं प्रकाशयति । यत्तु अविद्योपहितं ब्रह्मैव जीवः, आकाशमेकं हि यथा घटादिषु पृथग् भवेत् तथा ह्येको ह्यनेकस्थो जलाधारेष्विवांशुमान् । ब्रह्मज्ञानेन अविद्याविनाशे तदद्वैतं सिद्धं घटाद्युपाधिनाशे सत्याकाशाद्वैतवदिति वदन्ति, तत्तु न सुष्ठुतरं प्रतिभाति, प्रत्युत अनुभवविरोध एव जायते, जडया अविद्यया चैतन्यराशेरवच्छेदायोगात् । नीरूपस्य विभोः प्रतिविम्बायोगाच्च । द्वा सुपर्णा सयुजा सखाया समानवृक्षं परिषस्वजाते तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति इति मुण्डकोपनिषदि, अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजा जनयन्तीं स्वरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य

इति श्वेताश्वतरोपनिषदि सम्यगुक्तत्वात् जीवब्रह्मणोः पारमार्थिकपार्थक्यमेव समुल्लसति । तस्मात् ईश्वरपरतन्त्रः अदृष्टवशात् सुखदुःखभोगी जन्येच्छा-प्रयत्नज्ञानाश्रयोऽसंख्यः संसारी नित्यो जीवः प्रतिपन्नः । अलमतिप्रसङ्गेन ।

समस्या—

१—अन्धः पश्यति चार्द्धरात्रसमये पूर्णं रवेर्मण्डलम् ।

२—प्रविशति जलमध्ये शीतभीता मृगाक्षी ।

३—हेमसारं सलीला ।

## भक्तिसारः ।

### श्रीयुक्तरामकिङ्करतर्करत्नस्य ।

विघ्नेश-गणेश-गिरीश-गौरी-श्रीशादि-रूपेण विराजते यः ।
संनम्यते विघ्नविघातनाय रामः परात्मा परमेश्वरोऽसौ ॥
संसारभाजां गुरुदुःख-शान्त्यै निर्णीतमेवं पुरुषार्थरूपम् ।
ज्ञानं तथा भक्तिरितिद्वयं यत् निगद्यते कौशलतो यथावत् ॥
प्रणम्य परमात्मानं भक्ताभीष्टफलप्रदम् ।
क्रियते भक्तिसारः श्रीरामकिङ्कर-शर्म्मणा ॥
आत्मप्रधान-पुरुषस्य महेश्वरस्य
मायापतेर्म्मन इति प्रथितः सुतोऽभूत् ।
तस्य स्त्रियौ खलु प्रवृत्तिनिवृत्ति-नाम्न्यौ
तस्मात्तयोः प्रभवतः स्म विवेक-मोहौ ॥
पैत्र्यं पदं प्राप्य प्रवृत्ति-वश्यो ज्येष्ठस्य लभ्यं खलु यौवराज्यम् ।
निवृत्तिजं ज्येष्ठसुतं विहाय मनः कनिष्ठाय सुताय प्रादात् ॥
ज्ञात्वा विवेकोऽपि पितुः कनिष्ठे पुत्रेऽतिप्रीतिं परिनंष्टुकामः ।
मोहं ततः सोऽपि तमित्यमेव युद्धं तयोः पितृपदार्थमापत् ॥
शौचाचार-तपः-क्षमाशमदमैर्निर्लोभनैर्मत्सरा-
ऽहिंसा-सत्य-सुशीलता सरलता-सन्तोषिताद्यैस्तथा ।
प्राणायाम-यमादिभिर्बहुबलैः सुब्रह्मचर्य्यादिभि
र्युक्तो योद्धुमुपागतः सुमतिको ज्येष्ठो विवेकोऽप्यतः ॥ १ ॥

हिंसा-गर्व्व-मृषा-खलत्व-कुटिलत्वानार्य्यताधूर्त्तता
दम्भद्वेष-मदान्धतापरहित-द्वेषित्व तृष्णादिभिः ।
काम—क्रोधन लोभकैरतिबलैः सेनाधिनाथैः समं ।
मोहश्चावरजः सुतोऽभ्युपगतो योद्धुं विवेकेन ह ॥ २ ॥

आसीत् सुतुमुलं युद्धं तयोः ससैन्ययोस्तदा ।
महाकोलाहलं भीमं सम-विक्रम-वीर्य्ययोः ॥ ३ ॥

आदौ वस्तु विचारेण हतः कामो महाबलः ॥
सन्तोषेण विनिहतः क्रोधो दुर्द्धर्ष एव हि ॥ ४ ॥

एवं मत्यादिमुख्यैस्तै र्व्विवेक-पतिनायकैः ।
लोभादयो हि निहता महामोह-महाभटाः ॥ ५ ॥

ततो विवेकपुत्रेणोपनिषन्मातृकेण हि ।
महाबलो महामोहः प्रबोधेन हतोऽचिरात् ॥ ६ ॥

ततो महामोह-प्रसूः प्रवृत्तिः पुत्रस्य शोकेन तदा मृताऽभूत् ।
पुत्रस्य पश्चाश्च शुचा मदान्धो मनोनृपो विह्वलतामवाप ॥ ७ ॥

तदा तु तच्छोकमपेतुकामा, सरस्वती मूर्त्तिमती पुरस्तात् ।
रेजे विशुद्धा विशद-प्रभा च, प्रसन्नवाङ्निर्म्मलबोध-दात्री ॥ ८ ॥

मनोनृप स्तां प्रसमीक्ष्य दूरात् नम्रः स बाष्पाकुललोचनोऽभूत् ।
सरस्वतीं प्राह प्रवृद्ध-शोकः शोकः कथं मे हृदयात् प्रगन्ता ॥ ९ ॥

तदाऽप्रदत्तं कृपया विनीतं देवी प्रपच्चेति निबोध वत्स ।
अकाण्डपातोद्भव-शोक-रोग-युतो ह्यचिन्तैव महौषधं स्यात् ॥ १० ॥

मन्ये ह्यचिन्तैव शुचो निवृत्ते महौषधं किन्तु नितान्तचिन्ता ।
अनुक्षणं मां विकलीकरोति यथा शरच्चन्द्रकमम्बखण्डः ॥ ११ ॥

एतावदुक्त्वाऽथ सरस्वती सा मनोनृपं प्राह शृणुष्व वत्स ।
नूनं भवत्येव मनोविकार स्तच्छान्तये शान्तिरसं भजस्व ॥ १२ ॥

ज्ञानाध्वना भक्तिरथेन वा परं पदं परिप्राप्नुवतिप्रशान्तः ।
नित्यं परब्रह्म-निविष्ट-चित्तः सदा परब्रह्म हरिं समाश्रय ॥ १३ ॥

श्रुत्वेति सम्यक् स सरस्वतीमुखात् मनोनृपस्तामवदद् विनीतः ।
ज्ञानेन भक्त्या किमु वास्ति भेदो प्रकाश्यतां मे कृपया यथावत् ॥ १४ ॥

सा तं तदानीमवदत् वत्सात्रावहितः शृणु ।
काकभुशुण्डि-गरुड-संवादं शृणु साम्प्रतम् ॥ १५ ॥

इतिमुखबन्धः ॥

## कान्यकुब्जपञ्चब्राह्मण-कथा ।

( 'एडुकेशनगेजेट'नामकपत्रिकातः । )

### श्रीयुक्तगोपेश्वरव्याकरणतीर्थेनानूदिता

( १ )

यन्नाम-स्मरणेन गौड़वङ्गाभिजाता आत्मानं परम-गौरवान्वितं मन्यन्ते, सुदूरातीतगौरवस्मृतिर्यन्नाम्ना विजड़िता तस्य कान्यकुब्जस्य संक्षिप्तवार्त्ता निर्णीयतेऽस्मिन् प्रबन्धे । कान्यकुब्ज नगरी त्रेतायां प्रतिष्ठितापि गुप्तसाम्राज्यकालादेवास्या धारावाहिकेतिहासः कियन्मात्रं लभ्यते । ततः प्रागपि भारतस्य सर्व्वेषु प्रधानजनपदेषु वैदिकमतविरुद्धपक्षे प्रबले सत्यपि कान्यकुब्जः सनातनवैदिककेन्द्रः परं तदाश्रयस्थानत्वेन परिचित आसीत् । खृष्टीयपञ्चमशताब्द्यां चीनपरिव्राजकः कश्चिदत्र ब्राह्मणप्राधान्यं परिलक्षितवान् । तत्राद्य द्वावेव बौद्धधर्म्मिणौ आस्ताम् । सर्व्वत्र हिन्दुप्राधान्य निदर्शनं प्रभूतदेवदेवीसुमन्दिरं ब्राह्मणपण्डितसमाजश्च व्यराजत । वर्द्धनराजानां राज्यकालादेवास्य श्रीवृद्धिः परिलक्षिता । बौद्धहितैषिसम्राड्हर्षवर्द्धनस्य राज्यकाले कान्यकुब्जो हि आर्य्यावर्त्तसाम्राज्यस्य राजधानीत्वेन महासमृद्धः सञ्जातः । तदाप्यत्र बौद्धप्रभाववृद्ध्या सह प्रायशः शतसंख्यक-बौद्धसङ्घारामेषु विद्यमानेष्वपि चीनपरिव्राजकोऽसौ अत्रागत्य द्विशताधिकसंख्यकानि देवमन्दिराणि ददर्श । विरुद्धधर्म्माणां दशसहस्रबौद्धानां आवासभूमिरपि तत्र देवद्विजभक्तजनानां संख्या ततोऽप्यधिका जाता । ततोऽप्येवं वक्तव्यम् । बौद्धप्रियसम्राजो हर्षवर्द्धनस्य राज्यकाले अत्र देवद्विजभक्तानां संख्या नातिन्यूना । षट्शताष्टचत्वारिंशत्तमखृष्टाब्दे हर्षवर्द्धनस्य मरणात् परं कान्यकुब्जे अराजकता समुपस्थिता । हर्षवर्द्धन-सेनापतिर्वक्नाश्वः कान्यकुब्ज-सिंहासनमधिचकार । तदार्य्यावर्त्तस्य चतुर्द्दिशमधिष्ठिताः सम्राजः मित्रसामन्तादयः सैनापत्यप्राधान्यमस्वीकुर्व्वन्तः सर्व्वे अस्त्रपाणयो योद्धुमुद्यताः । इदानीमार्य्यावर्त्तराज्यं बहुक्षुद्रस्वाधीनराज्ये विभक्तं । सेनापतेः शासननिग्रहेण जनाः कान्यकुब्जं परित्यज्य स्थानान्तरं गन्तुमुत्सुका बभूवुः । सेनापतेर्विपक्ष-राजन्यानामाह्वानेन भोटदेशात् सैनिका आगत्य बक्नाश्वं पराजितवन्तः । ततः कियद्दिनं यावत् कान्यकुब्जे महाविग्रहः समजनि । अतःपरं महावीर-यशोवर्म्मणो महानभ्युदयो जातः । अस्मत्कुलग्रन्थे एष एव वीरसिंहश्चन्द्रवंशीयश्चन्द्रकेतु नाम्ना विख्यातः । महाकविवाक्पतेर्गौडवध-काव्ये अयमेव भगवदवतार-स्व-

रूप: कमलाकरो नाम्ना ख्यात:। अस्याधिपत्येन भारते सर्व्वत्र बौद्धप्रभावेऽप्रतिहतेऽपि कान्यकुब्जे वैदिक-समृद्धेरुज्ज्वलदृष्टान्त: परिलक्षित:। तस्योद्यमेन कान्यकुब्जे यादृशं ब्राह्मण्य-प्रतिष्ठया सह वैदिकाचार-प्रवर्त्तनं जातं, गौड़-वङ्गाधिष्ठिता वर्णगुरवो ब्राह्मणा अद्यापि तादृशस्यानुकरण-निरता:। अतस्तस्य वीरसिंहस्य यशोवर्म्मणोऽभ्युदयवर्णनं तत्प्रवर्त्तितवैदिकसमाजचित्रप्रकाशश्चात्र नाप्रासङ्गिक:। राजकविवाक्पतेरमृतमय्यां लेखन्यां तस्य महावीरस्य गुणगानं स्वर्णाक्षरै: प्रकाशितम्। तस्य दया-दाक्षिण्य-प्रजावात्सल्यादयो गुणा: कदाचित् अमरहिन्दुसमाजशीर्षस्थानमधिष्ठिता:। वाक्पतिवर्णितां यशोवर्म्मणो गौड़विजय-यात्रां पठित्वा महाकवि-कालिदास-वर्णितम् अज-राजस्य दिग्विजयं मन्यन्ते कवय:। राजा अश्व-गज-रथ-वाहनेन सह इन्द्रं पराजित्याभीष्टपथेन गच्छन् शारदीयशोभा-शोभित-प्रान्तरे अपूर्व्वं सौन्दर्य्यं पश्यन् शोणनदस्योपत्यकायां समुपस्थित:। ततश्चासौ ससैन्यो विन्ध्यपर्व्वतमागत्य विन्ध्यवासिनीमुपतस्थे। एवमसौ नानादेशं भ्रमन् हेमन्तशिशिरवसन्तानतिवाहितवान्। ततो ग्रैष्मिक-प्रखर-किरणजालैर्दावदग्ध-वनराजिवद्दशेष-ताप क्लिष्टा: सैनिका नानादु:खं सहमाना: वर्षाशीतलवारिधारा-सुशीतला: सन्तो गौड़राज्यमागता:। तेषामागमनेन भीता गौड़सेनान्य: पलायिता:। कापुरुषवत्पृष्ठप्रदर्शनं नितान्तानुचितं विचार्य्य ते पुन: कान्यकुब्जाधिपतिना सह युद्धे प्रवृत्ता:। गौड़ीय सैन्य शोणितेन युद्धक्षेत्रं प्लावितम्। पलायनपरो गौड़राजो मगधराजविजेत्रा यशोवर्म्मणा धृतो निहतश्च। अत: कान्यकुब्जराज: समुद्रोपकूलस्य वनशोभां पश्यन् वङ्गेश्वरं पराजित्य मलयाचलसान्निध्यं दाक्षिणात्यं पराजिग्ये। इत: समुद्रतीरं यावत् गत्वा पार्श्विकान् पराजित्य पश्चिमपर्व्वत-वासिभ्य: सर्व्वेभ्य एव करं जग्राह। इति कान्यकुब्जपञ्चब्राह्मणकथा-संक्षेप:।

ब्राह्मणकुलाचार्य्यो महात्मा वाचस्पतिमिश्रस्तु निजकुलग्रन्थे चादिशूरस्य एवमेव परिचयं दत्तवान्।

( २ )

महाकुलसम्भूतो दाता वदान्यो नरवरो गौड़ेश्वर आदिशूर: माधवशूरस्य पुत्र:। असौ स्वभुजबलेनैव सर्व्वं वैरिकुलं विजिग्ये। नानादेशवासिन: सर्व्वराजन्यास्तत्पदे प्रणता:। 'जाहृव'जनपदानां नृपतयोऽपि तस्मात् पराजयमापु:। काशीराजं इन्द्रप्रस्थेश्वरं च विना सर्व्वे राजन्यास्तस्य सैनिक-सामन्तपदे नियुक्ता:। स चैकदा वार्त्तावाहकमाहूय अवदत् दूत! सत्वरं त्वं

मदीयवार्त्तावाहकत्वेन काशीराजसमीपं गत्वा कथय, 'सत्वरं मम राजानं भजस्व, नोचेत् युद्धाय संनह्यताम्'। राजादेशमाकर्ण्यासौ सत्वरं काशीं गत्वा काशीराजस्य द्वारि राजानमिदं व्यजिज्ञपत्। राज्ञा राजसभामागत्य दूतेन सह साक्षात्कृतम्। दूतस्तु कृताञ्जलिपुटः यथाविधि नमस्क्रियादिकं सम्पाद्य राजप्रभावकीर्त्यादिकं कीर्त्तितवान्। राजा दूतमपृच्छत्—कुतः कथं वा त्वया इह आगम्यते? तदा दूतस्तमाह—अहं राजकुलतिलकस्यादिशूरस्य वार्त्तावहः। तदादेशेनैव भवत्सभामागतः। पुनर्महताऽदिशूरेणोक्तं यत् "भवान् मह्यं करं प्रददातु नोचेत् युद्धसज्जां विधेहि।" दूतेरितेनानेन वाक्येन राजा वीरसिंहोऽत्यर्थं क्रुद्धः सञ्जातः। सर्व्वे सभ्याः दूतं श्लेषोक्तिं व्याजह्रुः"। वीरसिंहस्य दूत आदिशूरस्य दूतं सम्बोध्याह—महाराजस्य वीरसिंहस्य समीपे आदिशूरः किं कर्त्तुं शक्नोति। मत्ततया आत्मानं वीरवन्मन्यमानस्य तस्य एवमेव गर्ज्जनं वृथैव प्रतिभाति'। अथ राज्ञा वीरसिंहेन आदिशूरं निकषा पत्रिका प्रेरिता। स्वस्त्यस्तु महाराजस्यादिशूरस्य, श्रीमन् वीर महीपते! भवदन्तःकरणे चेत् युद्धवासना प्रबला तदा सत्वरं सैन्य-सामन्तैः सह स्वयमागम्यताम्। द्विज-वेद-यज्ञ-विरहितं भवद्राज्यं मादृशैः कदापि न गन्तव्यम्। तदा विचक्षणोऽसौ दूतस्तं प्रणम्य तत्पत्रमादाय आदिशूरं नमस्कृत्य पत्रिका-विषयं विज्ञापितवान्। प्रभूतनृपसभामधितिष्ठन् महाराज आदिशूरस्तत्पत्रवृत्तान्तमाकर्ण्य परमक्रुद्धः स्वयं युद्धाय समुपस्थितः। राज्ञो युद्धसज्जां निरीक्षमाणस्तस्य विश्वविजयी मन्त्री आह-प्रभो किमिदानीं युद्धकार्य्येण। परं द्विजानात्मीयान् विधाय वयमेव योत्स्यामहे। दूतस्तदा राजानं प्राह—इयमेव मदीया युक्तिर्यत्कतिब्राह्मणानात्मीयानानीय वृषारोहणेन युद्धार्थं प्रेषयतु। गो-ब्राह्मणान् विलोक्यासौ पुनर्योद्धुं न शक्ष्यति। सुतरामेवाऽस्माकं जयोऽवश्यम्भावी। तदा राजा आदिशूरः स्वराज्य-वासिनो निरग्निकब्राह्मणानानीयाज्ञापयत्—'भवन्तोऽस्त्रशस्त्राण्यादाय गवारोहणेन वीरसिंहपुरं गत्वा साग्निकान् ब्राह्मणानानयन्तु' इति। चेत् स्वेच्छयासौ ब्राह्मणान् नार्पयति तदा तस्य राज्यनाशः कर्त्तव्यः' इति। ब्राह्मणा ऊचुः वाक्यमेतत् भवतो न समीचीनम्, गवारोहणमस्माकं निषिद्धमेव, अतो वयमेतस्मिन् न सम्मताः। आदिशूरेणोक्तं—भवन्तश्चेत् ब्राह्मणानयनशक्तास्तदा भवतां समीपेऽङ्गीक्रियते मया यत् सत्कार्य्येण भवतां वृषारोहण-दोषो नूनं नाशयितव्य इति। महाराजस्याश्वासवाक्येन सप्तशतीब्राह्मणा गवारोहणेन युद्धार्थमागताः। एवं वृषारूढा धनुर्बाणधरा

बहवो द्विजा वीरसिंहपुरं प्रविष्टास्तद्राज्यनाशाय च प्रवृत्ताः। अधुना ब्राह्मणान् हत्वा भवद्राजलक्ष्मीं रक्षतु इति तैरुक्ते राजा तदद्भुतमाकर्ण्य साग्निकान् ब्राह्मणानवदत्—सपरिजना भवन्त गौड़ं गच्छन्तु इति, तदनुमत्या पञ्च साग्निका ब्राह्मणा धनुः-शरमादाय घोटकमारुह्य ज्वलदग्निवत् कोलाञ्चल-देशात् गौड़े आदिशूरपुरं गताः।

---

## महामहोपाध्यायश्रीयुक्तसीतारामन्यायाचार्य-शिरोमणि-महोदयस्य संक्षिप्तजीवनवृत्तम्।

२६६ पृष्ठतोऽनुवृत्तम्।

अथास्य श्रुतिधरतापरिचयः—

२२। एकदा तेन कौमारे श्लोक एकः पितुः श्रुतः।
याक्यो लिखस्वेत्युक्तेनाभ्यस्तवत् पठितो मुदा॥

श्लोकश्चैषः—

हस्तन्यस्त-कुशोदके त्वयि न भूः सर्व्वंसहा कम्पते—
देवागारतयैव काञ्चन-गिरिर्धत्ते न चित्ते भयम्।
अज्ञातद्विपभव्यभित्तुभवन-प्रस्थान-संत्रासतो
वेपन्ते मद-दन्तिनः परममी भूमिपते तावकाः॥ इति—

अथास्य अध्यापनापरिचयः।

२३। षड्विंशत्यब्दवयसि प्रारभ्य पाठनाव्रतम्।
अद्यापि तद्व्रतं विप्रो यथावदनुतिष्ठति॥
पितुर्मठे प्रथमतो वाराणस्यां ततः परम्।
ततस्तु मुर्शिदाबादात् श्रीनवद्वीपधामनि॥

२४। एतत्स्थानचतुष्टये विधिवशादध्याप्य शिष्यान् बहून्
सर्व्वत्रैव सुलब्ध-पूतसुयशा विख्याप्य नामात्मनः।
वृद्धः सम्प्रति पाठनाविरत-धीरेको वसन् निर्जने
ये ग्रन्था रचिताः पुरा स कृतवांस्तेषां प्रकाशे मतिम्॥

अथास्य मित्रामित्रपरिचयः।

२५। असौ प्रायेण सर्व्वत्र सर्व्वैः सद्भिःप्रपीड़ितः।
कियत् कालात् परं किन्तु सर्व्वतो ख्यातिं गतः॥

अथास्य सम्पत्परिचयः ।

२६ । भू-सम्पदीदृशी तस्य पैतृकी समवस्थिता ।
संसार-यात्रानिर्व्वाहः कथञ्चन यया भवेत् ॥

अथास्य राजभक्ति-परिचयः ।

२७ । जयलाभाय सम्राजः शुभाशीर्व्वादतत्परः ।
सर्व्वावस्थासु रचितं पुस्तकञ्चैकमेककम् ॥

अथास्य परोपकारितापरिचयः ।

२८ । साधारण-हितार्थाय पञ्चाशत् पुस्तिकाः कृताः ।
अध्यापिताश्च सच्छात्रा यत्नतो विषयान् बहून् ॥

२९ । दातृत्वशक्तौ श्रेयस्यां सत्यामपि मनीषिणा ।
अर्थाभाववशात् तेन मानसाशा न पूरिता ॥

अथास्य स्वभावपरिचयः ।

३० । प्रियंवदेषु प्रियवाक्, सज्जनेषु च सज्जनः ।
सुहृत्सु सत्पोऽतीव, दुर्हृत्सु निर्भयान्तरः ॥

३१ । मिथ्याभाषिष्वसन्तुष्टः सन्तुष्टः सत्यभाषिषु ।
सघृणः क्रूरकार्य्येषु, सदयः सर्व्वजन्तुषु ॥

३२ । प्राणात्ययेऽपि न कृतं तत्कार्य्यं मुनिवृत्तिना ।
अनुष्ठेनापि सता येन स्यात् स्वस्य लाघवम् ॥

अथास्य अतीतदशापरिचयः ।

३३ । अष्टादशाब्दवयसं प्रवरं कवीना
मेकादशी, सुहृदया, सुगुणाऽतिसुश्रीः ।
सद्वंशजा, प्रणयिनी, पतिदैवता च
रामप्रिया प्रियतयैतमिता लतेव ॥

३४ । वर्षाणि विंशतिमतः प्रणयातिवद्धा
षड्रत्नसूः प्रियतमा प्रियतुल्यभागा ।
अर्द्धं समर्प्य पतये परिगृह्य चार्द्धम्
सुप्ता सुखं चिरदिनाय सती प्रियाङ्के ॥

३५ । भवन् स मातापितरौ सुतयोः परिरक्षणे ।
कालातिपातमकरोत् सकष्टं वत्सरत्रयम् ॥

३६ । अथानुरुद्धोऽपि सुहृद्भिरेषको जामातृभावेन वृतोऽपि केनचित् ।
दशाविशेषस्य निजस्य चिन्तया पुनर्व्विवाहाय मतिं स नाकरोत् ॥

३७ । जामातृहस्ते तनयां समर्प्य स ज्येष्ठां कनिष्ठाञ्च तथानुजाकरे ।
सतोऽनपत्यस्य कनीयसः शये सुतञ्च संन्यस्य स चैकलः स्थितः ॥

३८ । ततः कियत्कालपरं कनीयसी सुताप्यदूर्णैव हि तादृशाहूया ।
सुनिष्ठुरान्तःकरणे पितर्य्यसौ कृताभिमानेव गता स्वमातरम् ॥

अथास्य वर्त्तमानदशापरिचयः ।

३९ । अथैव सांसारिक-घोरमायया विदूरितो दुर्ज्जरया स्थिरान्तरः ।
स्थितो गृहस्थोऽप्यगृहीव सज्जनै स्ततो "बुनोराम"इति प्रमोदितः ॥

४० । स साम्प्रतं निवसति तुष्टमानसः सतां पुरे, सुरसरिता प्रवेष्टिते ।
समन्वितो निरवधिशास्त्रचिन्तया तपस्विवद्विजन वनान्तरे सुखम् ॥

४१ । श्री ( ६ ) युतभारतसम्राट्, पञ्चमजर्ज्जतोऽलभत स वर्षेऽस्मिन् ।
पौषे षोड़शदिवसे "महामहोपाध्याये"त्यतुलाख्यामिति ॥

अथ लेखक–परिचयः ।

४२ । इमं महात्मानमसीमविक्रमं संक्षेपतो वर्णितवान् यथार्थवित् ।
तदीयमैत्री-प्रगृहीतहृन्मुदा कश्चिज्जनो नाम सरोजरञ्जनः ॥

इति शिवम् ॥

---

## उदयनकथा ।

### लेखकः–श्रीयुक्तभि० वेंकटरामशर्मा ।

आसीत् कुञ्जरज्ञानदृप्तो गान्धर्वनिपुणः कौशाम्बीशो वत्सराज उदयनो नाम । यमेनमुत्सेकयति स्म प्रकाशराजर्षिनामधेयो वेदाक्षरसमवायप्रविष्टो भारतो वंशः, अदर्पयत् दायाद्यागतो गान्धर्वो वेदः, अविभ्रमयत् वयःसहजं रूपं, अविस्रम्भयच्च कथमप्युत्पन्नोऽस्य पौरानुराग इति ।

अहन्यहनि गोत्रानुकूलेभ्यो राजकुलेभ्यः कन्याप्रदानं प्रति दूतसम्प्रेषणा वर्तते। भर्तृपरिचरणसमर्थे वयसि वर्त्तमानायाः स्वकन्यायाः वासवदत्तायाः, अति-लोभात् वरगुणानां अतिस्नेहाच्च वासवदत्तायां स्वकन्यायां प्रद्योतोऽवन्तीश्वरः न निश्चयं गतः, न च कश्चिदपि प्रत्याचष्टे । यतः 'पितुः प्रथमः कन्याया वरस-

म्यत्तिः' इति ! अतएव कुलरूपवयोविद्यादिसकलगुणावज्ञातसकलराजकं ताव-न्मात्रं वत्सराजं ग्रहीतुकामः स्वपुरमानेतुकामः स्वपुत्र्याः पतिं कर्त्तुकामश्च प्रद्योतस्तमृजुनोपायेन स्वाभिप्रायानन्तरितं कर्त्तुमक्षमः स्वामात्येन सालङ्कायनेन तत्प्राप्त्यनुगुणमुपायं निध्यायति स्म।

अथैकदा आखेटकप्रसङ्गात् सावशेषप्रत्यूषायां रजन्यां वाहनसुखायां वेलायां नागवनं प्रयातः छत्रमात्रपरिच्छदो वत्सराजः। तत्र च सालङ्कायनेन कल्पितो नखदन्तवर्जमिन्द्रनीलः कपटहस्ती। 'गजं तमहं वीणाद्वितीयो वशीकरिष्यामीति' कृतप्रतिज्ञो भगवानुदयनः। तदा रहोनिलीनाः सुसन्नद्धाः परयोधाः पराभवितुमेनं प्रायतन्त। अतिबहुलतया परबलस्य जानन्नपि 'प्रद्योतप्रयोग एव' इति अतिप्रयुज्यमान-व्यायामो विषण्णनष्टसर्वपरिजनः ताम्यत्सूर्यदारुणायां वेलायां मोहं गतोऽभवदुदयनः।

अथ तं देशमुपस्थितेन प्रद्योतामात्येन सालङ्कायनेन शरीरयन्त्रणात् मोचित उदयनः गाढबहुप्रहारतया असमर्थो वाहनासन इति बन्धशयनमारोप्य उज्जयिनीं नीतः। दुःखकरं चेमं वृत्तान्तं भर्तृव्यापद्रूपं निशम्य हंसकमुखादुदयनमन्त्री यौगन्धरायणः व्याक्षिप्तहृदयोऽनुत्पन्नकार्यपण्डितः भर्तृमात्रा च पुत्रदर्शनकामया 'यः खल्विदानीं सङ्कटेषु वा न विषीदति विषमगतो वा न पर्यवतिष्ठते वञ्चितो वा न निर्वेदं गच्छति प्रतिघातेषु वा प्राणान् न समुज्झति स खलु बुद्धिमान् पृच्छ्यते प्रथममेव मे वत्सस्यामात्यो वयस्यः आनयतु मे पुत्रकं पुत्रक' इति त्वरितं त्वरिततरं च शपथेन प्रेर्यमाणः कर्तव्यताविमूढोऽन्ते प्रतिज्ञामकृत—'मोचयामि न राजानं नास्मि यौगन्धरायणः' इति।

अथ च प्रद्योतो महासेनः स्वमहिष्याङ्गारवत्या सह वैवाह्यं कन्यायाः कार्यं विचिन्तयन् यदा तदा 'व्यावर्तनं करतलैरिव मन्दरस्ये'दमुदयनग्रहणं प्रत्यतिसन्तुष्टस्तस्यैव वासवदत्तां मनसि निश्चिकाय। अवरुद्धश्च वत्सराजः भरतकुलोपभुक्तं श्रुतिसुखमधुरं स्वभावरक्तं स्वकीयं घोषवतीनाम वीणारत्नं महासेनाय ददौ। सोऽपि वीणां शिक्षितुं नारदीयामुपक्रान्तायाः वासवदत्तायाः प्रादात्।

तत एकस्मिन्कालाष्टमीदिने तत्रभवतीं राजदारिकां वासवदत्तां धात्रीद्वितीयां यत्तदुदयनबन्धनद्वारस्याग्रतो यक्षिण्याः स्थानं, तस्मिन् देवकार्यं कर्तुं गतां प्रकामं दृष्ट्वा उदयनः बन्धनं प्रमदवनं सम्भाव्य प्रवृत्तो रागलीलां कर्तुम्।

ततः अन्योऽन्योपोढरागौ वासवदत्तावत्सराजौ गान्धर्वं दाम्पत्यं प्रतिपद्य प्रच्छन्नं कन्यान्तःपुरे सुखमनुभवन्तौ स्थितौ । यौगन्धरायणश्च गात्रसेवकादिचारप्रकृतिमुखाद्विदितापरक्तजनसकलवृत्तान्तः, विशिष्य प्रद्योतकृतमुदयनावरोधरूपां व्यापदं निरीक्ष्य विषण्णः, तत्रापि शत्रुपुरीसम्भोगप्राप्तिश्रवणेन स्वामिनः कामप्रधानत्वं राजनीतिप्रत्यनुकूलं विचार्य विषण्णतरः, ततश्च भर्तृमातुः पुत्रदर्शनोत्सुकायाः खिन्नायाः निर्बन्धशतरूपावमानस्याविजित्युपायाप्राप्त्या विषण्णतमश्च स्वकृतां प्रतिज्ञां कथमपि निर्वोढुं चिन्तां प्राप । अथाऽऽसाद्य कमप्युपायं स्वयं चोन्मत्तवेष उज्जयिन्यां परिभ्रमन् चारान् सर्वानपि युद्धाय प्रसाध्य प्रद्योतान्तःपुरं नगरीं च परिवारयन् यौगन्धरायणः कर्मक्षमाणां च कूटप्रकृतीनां साह्येन बन्धनाद्राजानमन्तःपुराद्राजदारिकां च निर्यातीकृत्य तया चायत-लोचनया सहोदयनं भद्रवतीं गजवशामधिरोह्य उज्जयिनीमनयत् । ततः समेऽपि विदितकार्या प्रद्योतपरिजना अभिज्ञनाश्च छलितमिदमन्तःपुरबन्धनस्थितयोर्वासवदत्तावत्सराजयोरुज्जयिनीप्रापणरूपं चौर्यकौर्यवञ्चनारूपं च यौगन्धरायणस्यासहमानाः निरोधमुक्ता कृष्णसर्पा इव तत्र इतो निर्धावन्तो, विशिष्याग्निसाक्षिकं महासेनदुहितरं प्रतिगृह्याऽदत्तापनयनविभ्रमतया किमपि किमपि विरुवन्तः कथमपि यौगन्धरायणस्य शिक्षानुकूलं बन्धनकारणमेव साम्प्रतं मन्वानास्तदर्थं युध्यमाना एव परिवार्य यौगन्धरायणमगृह्णन् । 'नरकं स गच्छेद्यो भर्तृपिण्डस्य कृते न युध्येत्' इत्येवमर्थशास्त्रगुणग्राही यौगन्धरायणः दुस्तरां प्रतिज्ञा-सरितं तीर्त्वा परमसन्तुष्ट उदास्त । कुतः—

वैरं भयं परिभवं च समं विहाय
कृत्वा नयैश्च विनयैश्च शरैश्च कर्म ।
शत्रोर्जयं च सुहृदामयशश्च हित्वा
प्राप्तो जयश्च नृपतिश्च महांश्च शब्दः ॥

स्वकीयं बन्धनमपि तैः कृतं बन्धनतया नामंस्त; कुतः ? सुखं खलु निष्कलत्राणां कान्तारप्रवेशः, रमणीयतरः खलु प्राप्तमनोरथानां विनिपातः, अपश्चात्तापकरः खलु सञ्चितधर्माणां मृत्युरिति । प्रद्योतश्च महाराजः यौगन्धरायणग्रहणं विदित्वा आदिश्य च तस्य बन्धनादवनयनं दण्डधारिणस्तस्य राजनीतिप्रयोगमभिनन्दन्, स्वपुत्र्या उद्दिष्टवराप्त्या च भृशं मुदितस्तं महता गौरवेण कौशाम्बीमनयत् ।

अथ तया प्रद्योतान्तःपुरादपहृत्याऽऽनीतया मधुरसुकुमारप्रकृत्याऽधिकरमणीयविभ्रमया मूर्तिमत्या नगरदेवतयेव भद्रवत्या वासवदत्तया सह स्वराजधानीमागत्य परमसौख्यान्यनुभवतो वत्सराजस्य राज्यं भूयिष्ठं आरुणिनामा शत्रुरधिचक्रार। दारुणकर्माणं च शत्रुं तमभिघातयितुं अपर्याप्तसैनिकभार उदयनः बलिष्ठहस्त्यश्वरथपदातिबलं मगधदेशाधिपतिं दर्शकं साहाय्यार्थमयाचत। अथ च तत्साहाय्यसिद्ध्यर्थं तत्स्वसुः पद्मावतीनामिकायाः धर्माभिरामप्रियायाः सर्वजनमनोभिरामायाः स्निग्धायाः निपुणाया दर्शनीयायाः मधुरवाक्सलक्षण्यास्तत्र भवत्याः परिणय उदयनस्यावश्यमङ्गीकरणीय आसीत्। विदिताभिप्रायौ यौगन्धरायणो रुमण्वांश्च मन्त्रिप्रवरौ वासवदत्तायां प्राणवल्लभायां स्थितायां न परिणेष्यति पद्मावतीमुदयनः, न च पद्मावती प्रियदारानपेते तस्मिन् विस्रम्भं करिष्यती'ति च शत्रुहस्ताद्राज्यं कथमपि मोचयितुकामौ दर्शकसाह्येन, पुष्पकभद्राद्यादेशिकवचनाच्च 'पद्मावती नरपतेर्महिषी भविष्यती'ति जनितविश्वासौ तत्राप्यनुगुणमुपायं निध्यायन्तौ स्थितौ।

अस्ति वत्सभूमौ लावाणकं नाम ग्रामः। तस्माच्च प्रदेशात् मृगयाप्रसङ्गाद्विनिर्गते सानुचरे राजनि तत्र खल्वतिदारुणं व्यसनं संवृत्तं, तत्र ग्रामदाहोऽभूदिति। तत्र च दाहे उदयनस्य दृढाभिप्रेतौ वासवदत्तायौगन्धरायणौ दग्धावित्यलीकमरणप्रवादः यौगन्धरायणरुमण्वदादिभिरुपायानुष्ठानपरैः कार्यसिद्धिसम्पादनधूर्वहैः प्रख्यापितो बहुलीभूतश्च सर्वत्र। ततः प्रतिनिवृत्तो राजा उदयनः वृत्तान्तमिमं श्रुत्वा तयोर्वियोगजनितातिसन्तापः अनाहारः प्रततरुदितक्षामवदनः दुःखं परिवहन् तस्मिन्नेवाग्नौ प्राणान् परित्यक्तुकामः अमात्यैर्महता यत्नेन वारितोऽपि तस्याः शरीरोपभुक्तान्याभरणानि परिष्वजमानः, ततो महीतलपरिसर्पणपांशुपाटलशरीरः 'हा वासवदत्ते हा अवन्तिराजपुत्रि हा प्रिये हा प्रियशिष्ये' इत्यादि बहु प्रलपंश्चानवरतं यदा तदातियत्नेन पुनरप्यमात्येन पर्यवस्थापितः।

स्वालीकमरणख्यापनेनात्मानं गोपयन्तौ प्रच्छन्नं सञ्चरन्तौ च गृहीतपरिव्राजकवेषो यौगन्धरायणः आवन्तिकावेषधारिणी वासवदत्ता च देशाद्देशान्तरमाहिण्डमानौ किञ्चिन्मगधदेशसविप्रकृष्टं तपोवनं प्राप्य स्थितौ यदा तदा मगधराजभगिनिका आश्रमेऽस्मिन् अभिप्रेतवासा 'कः किमत्रेच्छती'त्यभिप्रेतप्रदानेन तपस्विजनोपनिमन्त्रणरूपमात्मानुग्रहं कर्तुमागता। तदागमनप्रतीक्षकाश्च भृत्याः नान्यपुरुषैः कैश्चिदपि तपोवनप्रदेशे स्थातव्यमिति स्वाधिकारं प्रादर्शयन्। ईदृशं

परुषाक्षरप्रयोगजायमानमपवादं नृपतेः परिहर्तुमिच्छन् पद्मावतीकाञ्चुकीयः इंङ्गुदोत्सारणेनार्थेन धर्ममुपनिमन्त्रयितुमागतायाः धर्मादात्मोत्सारणशङ्कां मत्वेव गदति। न परुषमाश्रमवासिषु प्रयोज्यम्। नगर-परिभवान् विमोक्तुमेते वनमभिगम्य मनस्विनो वसन्ति'।

तीर्थोदकानि समिधः कुसुमानि दर्भान्
स्वैरं वनादुपनयन्तु तपोधनानि।
धर्मप्रिया नृपसुता नहि धर्मपीडा-
मिच्छेत्तपस्विषु कुलव्रतमेतदस्याः॥ इति।

ततः पद्मावत्यनुज्ञातेन काञ्चुकीयेनाभिप्रेत-वस्तुप्रदानार्थमाहूतास्तत्र-भवन्तो आश्रमस्यास्तपस्विजनाः। यौगन्धरायणश्चार्थी गत उपकण्ठम्।

कार्यं नैवार्थैर्नापि भोगैर्न वस्त्रै-
र्नाहं काषाय वृत्तिहेतोः प्रपन्नः।
धीरा कन्येयं दृष्टधर्मप्रचारा
शक्ता चारित्रं रक्षितुं मे भगिन्याः॥

इति स्वालोकभगिन्या वासवदत्तायास्तत्र न्यासीकरणमपेक्षिष्ट। यौगन्धरायणश्च स्वोपायप्रतानिन्याः बीजावापः स्वनिश्चितद्वारेणैव समभूदिति परम-सन्तुष्टो यदा तदा प्रतिज्ञातन्यासरक्षणा पद्मावती। अथ यादृच्छिकस्य तपोवनं प्रविष्टस्य वर्णिलिङ्गिनो मुखात् वासवदत्तायौगन्धरायणोपरतवचनश्रवणेन तौ प्रति वत्सराजस्य सानुक्रोशत्वं निशम्य पद्मावती 'धन्या सा स्त्री यां तथा वेत्ति भर्ता भर्तृस्नेहात् सा हि दग्धाप्यदग्धा' इत्यादि वदन्ती सर्वातिशायिगुणगण-शालिनि राजनि तस्मिन् महतीं प्रीतिं चकार।

स्वमरणख्यापनेनातिपरिभूतहृदयमुदयनं स्वभर्तारं श्रुत्वा च वासवदत्ता तस्य सानुक्रोशतयैव भृशमनुगृहीतेव न्यासीकृता पद्मावतीहस्ते तयैव सह काल-मयापयत्। ततस्तस्मात्प्रदेशात्प्रतिनिवृत्तेन च यौगन्धरायणेनोदयनः कथमपि राजगृहं मगधदेशे प्रापितः। अन्ते फलीभविष्यतः आरुणिहस्ताद्राज्यमोचनरूप-कार्यस्य प्रधानसन्धिपरिपणनरूपा चेयमिव पद्मावती तस्य प्रतीष्टा च। विदिते-तत्सकलवृत्तान्ता वासवदत्ता जीवन्त्यामेव स्वस्यां भर्तुरन्यविवाह-परिग्रहं स्वस-विधान एव निश्चिन्वाना स्त्रीस्वभावकातरतया तदसहमानान्धीकृतहृदया अन्तः-

पुर-चतुःशाले विवाहामोदसङ्कुले पद्मावत्यन्वासनमुपेत्य भागधेयनिर्वृत्तं विनोदयितुं दुःखं स्त्रीवासोचितमुद्यानं प्रमदवनमेकाकिन्यागमत् । चिन्ताशून्यहृदयां नीहार-प्रतिहतचन्द्रलेखेवामण्डितभद्रकं वेषं धारयन्तीं प्रियङ्गुशिलापट्टके उपविष्टां चेमा-मावन्तिकामन्विष्य भट्टिनीचेटी भट्टिन्यनुज्ञातेव पद्मावतीविवाहार्थं कौतुकमा-लिकागुम्फनार्थं तां न्ययोजयत् । अविधवाकरणसपत्नीमर्दनरूपशक्तिदुर्यविशिल्पाया-श्चास्या मालिकायाः स्वकरतलेनैव निर्माणं दृष्ट्वा अतिसञ्जाततापा 'अहो अत्याहितं, आर्यपुत्रोऽपि नाम परकीयः संवृत्तः । अविद्दा शय्यायां मम दुःखं विनोदयामि यदि निद्रां लभे' इत्यादि सुबहु विप्रलपन्ती शयनगृहं ययौ ।

स्थण्डिलवासशरीरासंस्काराननाहाराद्यनर्थसलिलावर्ते प्रक्षिप्तोऽपि पुनरुन्म-ग्नस्तस्मादुदयनवयस्य आर्यवसन्तको विदूषकः वत्सराजस्याभिप्रेतविवाहमङ्गल-सम्भवेन भृशं सन्तुष्टोऽभवत् । यतस्तेनेदानीं प्रासादेषूष्यते, अन्तःपुर दीर्घिकासु स्नायते, प्रकृतिमधुरसुकुमाराणि मोदकखाद्यानि खाद्यन्ते इत्यनप्सरस्संवास उत्तर-कुरुवासोऽनुभूयते । अथ निर्वृत्तविवाहमङ्गला पद्मावती सावन्तिका सपरिवारा-ऽनुरागातिशयव्यञ्जनार्थमिव, प्रचितपतितबन्धुजीवकुसुमविरलपातरमणीयं प्रमद-वनमभिगता, कुसुमानां विचित्रतां पश्यन्ती, भर्तृविरहेण तद्गतप्रीतिं वर्धयन्तीव स्थिता । शरचापहीनः कामदेव इवोदयनश्चोद्यानं प्रविष्टस्तथास्थितायाः प्रियायाः सौन्दर्यातिशयमवलोक्य विस्मितः, तदालापश्रवणकातरहृदयो माधवी-लतामण्डपमविशत् । तत्र च वर्धितानुरागोऽप्युदयनः तदा तदा प्रसङ्गेषु वासव-दत्ताविषयकस्मृतिसन्तानेन तस्यां भृशं सानुक्रोशः सन् महतीं चिन्तामवाप ।

ततः पश्चाद्दिन एकस्मिन् समुत्पन्नशीर्षवेदनादुःखितां पद्मावतीं मधुराभिः कथाभिर्विनोदयितुमावन्तिकां प्रेरयितुं तयोः समुद्रगृहके आस्तीर्णशय्याः मधुक-रिकापद्मिनिकादयश्चेट्यः त्वरितं गतागतं कुर्वत्यः स्थिताः । पद्मावतीवियोगात्त्वा-तीव विधुरहृदयस्य तत्रभवतो वत्सराजस्य पद्मावतीपाणिग्रहणसमीरितस्यात्य-न्तसुखावहे मङ्गलोत्सवे मदनाग्निदाहोऽधिकतरं वर्द्धत इति चार्यवसन्तकः सदा वासवदत्तास्मरणेन विषीदन्तमुदयनं पद्मावतीं शीर्षवेदनया दुःखितां विज्ञाप्य-समुद्रगृहकमनयत् । तत्र च सुप्रच्छादनायां शय्यायां मुहूर्तकमुपविश्य तत्रभवतीं प्रतिपालयन् स्थित उदयनः निद्राबाधया वसन्तकं कथाख्यानाय प्रेर्य्य कथा-श्रवणेन सहैव सुप्तोऽपि जनितवासवदत्ताविषयकविस्रम्भः स्वप्नायमानो 'हा वास-वदत्ते'त्यादि विप्रलपितुमारब्धवान् यदा तदा वासवदत्ता पद्मावतीविनोदनाय

चेट्यानुनीयमाना समुद्गगृहकम्। प्रविश्य वासवदत्तां चेटी, अतिशीतलत्वाद्वेलायाः प्रावारकं गृहीतुं विदूषकश्च, निर्गतौ। वासवदत्ता चास्थाने स्वभर्तृपरिदेवित-श्रवणेन जनितप्रत्याशा कस्यचिदपि जनस्याभावात् हृदयं दृष्टिं च तोषयितुं भर्तृसमीपं प्राप्य तत्कृतहस्तप्रसारणायाः साफल्यं चकार। चिरस्थिता च सा कोऽपि पश्येदित्याशङ्कमाना शय्याप्रलम्बितं भर्तृहस्तं शयनीय आरोप्यागमत्। सहसोत्थितश्च वत्सराजः वासवदत्तामन्तरेणातीव सन्दिहानस्तस्थौ। तदैव स्वभगिनिका-विवाहतुष्टो दर्शकोऽपि हस्त्यश्वरथपदातीन् स्वकीयविजयाङ्गानि सवद्धीकुर्वन् वत्सराजं युद्धोत्थानाय प्रेरयामास यदा तदा रुमण्वांश्च महता बलसमुदयेनाप्यातः। युद्धे चारुणिः शत्रुरभिहतो बभूव। ततो वत्सराज्यला-भप्रवृद्धोदयं चोदयनं कुशलं प्रष्टुं महासेनप्रेषितः काञ्चुकीयः अङ्गारवतीप्रेषिता धात्री च चित्रफलकालिखितं वासवदत्तावत्सराजयोः प्रतिकृतिं गृहीत्वागतौ। दृष्ट्वा च वासवदत्तागतां प्रीतिं वर्धयन् उदयनस्तया सहानुभूतां सकलामप्यवस्थां स्मरति स्म। पद्मावत्यादयश्च चित्रं दृष्ट्वा तत्संवादिरूपां वासवदत्तां सन्दिहानाः केनापि ब्राह्मणेन भगिनिकारूपेण न्यासीकृतामावन्तिकां तां न्यवेदयन्। अथ च ब्राह्मणोऽपि यदा स्वभगिनिकामयाचत तदैव पद्मावती राजसविधे स्वनिक्षिप्त-वासवदत्ताविनिमयमकरोत्।

अथ चापनीतवेषो यौगन्धरायणः, स्वकृतनीतिप्रयोगस्य पूर्णफलप्राप्ति-सन्तुष्टचित्तः प्रविज्ञापितराजपुत्रीप्रच्छादनादिरूपसकलचरित्रः, वत्सराजेन च–

मिथ्योन्मादैश्च युद्धैश्च शास्त्रदृष्टैश्च मन्त्रितैः।
भवद्यत्नैः खलु वयं मज्जमानाः समुद्धृताः॥

इति नीतिप्रयोगनैपुण्यं प्रति भृशमभिश्लाघितः। अथ च निवृत्तसकल-क्लेशराशिः वत्सराजः साभिजनः सपरिवारः सुखं स्वपुरीमध्यवात्सीत्॥

---

## गुरुशिष्यसंवादशतकम्।

### श्रीयुक्तहेरम्बनाथकाव्यसांख्यतीर्थस्य।

१म खण्डस्य २६ पृष्ठतोऽनुवृत्तम्।

शिष्यः, कश्च मूर्खः? (११)

गुरुः– "विद्यया वर्जितो लोकः प्रज्ञया रहितस्तथा।
हिताहितं न वेत्ति यो मूर्खोऽभिधीयते नरैः॥

तत्त्वदर्शिजनैः किन्तु स एव मूर्ख उच्यते ।
शरीरे नश्वरे यस्य चाहंबुद्धिः प्रवर्त्तते ॥"

शिष्यः, कः पन्थाः ? (१२)

गुरुः—"पन्थानो बहवः सन्ति तत्त्वान्वेषणकारिणाम् ।
स एव परमः पन्था येन ब्रह्म निरूप्यते ॥"

शिष्यः, कश्च मोदते ? (१३)

गुरुः—"स एव मोदते नित्यं यस्य नास्ति प्रयोजनम् ।
पीत्वा सन्तोषपीयूषं यः कालञ्चातिवाहयेत् ॥"

शिष्यः, को लघुः स्यात्तृणादपि ? (१४)

गुरुः—"भूतिहीनो जनो लोकैस्तृणादप्युच्यते लघुः ।
धार्मिकप्रवरैस्त्वात्मा ततोऽपि लघुरुच्यते ॥"

शिष्यः, को दरिद्रः ? (१५)

गुरुः—"अर्थहीनो जनो लोके दरिद्र इति कथ्यते ।
न तूच्यते दरिद्रः स सारविद्भिर्जनैः क्वचित् ॥
वदन्ति तं दरिद्रं ते विभवे सति विस्तरे ।
भूत्वा यो नित्यमुद्विग्नो धनचिन्तां समाचरेत् ॥
अपि स दुर्गतो ज्ञेयः सर्वदेशनिवासिना ।
विद्यया ज्ञान-धर्माभ्यां वर्जितो यो नरो भुवि ॥

शिष्यः, को धनवान् ? (१६)

गुरुः—"विपुलैश्वर्य्य-सम्पन्नो यक्षराजोपमो नरः ।
कथ्यते धनवान् लोकैः सर्वदेशेषु सर्व्वदा ॥
धनवान् स न विज्ञेयः सारविद्भि र्जनैरिह ।
यतो विनश्वरं सर्वं धनं सौदामिनीचलम् ॥
विद्यया ज्ञानधर्म्माभ्यां मनुजो यो विभूषितः ।
स एव पण्डितै र्लोके धनवानिति कथ्यते ॥"

शिष्यः, वीतस्पृहः कः ? (१७)

गुरुः—"उपायनानि द्रव्याणि द्रविणान्यतुलानि च ।
मणिमाणिक्यरत्नानि भूरीणि विविधानि च ॥

प्राप्य नाद्रियते तानि मत्वाऽकिञ्चित्कराणि यः।
वीतस्पृहः स लोकेऽस्मिन् सततं कथ्यते बुधैः॥

शिष्यः, श्वसन्नपि मृतो हि कः? (१८)

गुरुः—"विद्या-विनय-बुद्धीनां यस्यैकोऽपि न विद्यते।
किमसूनां धृतिस्तस्य श्वसन्नपि मृतो हि सः॥
प्राप्येदं मानुषं जन्म दुर्लभादपि दुर्लभम्
यो न समाचरेद् विष्णोः पूजां भक्त्या दिनन्दिनम्॥
वृथैव जीवनन्तस्य क्षयं याति निरन्तरम्।
कर्म्मकारस्य भस्त्रेव श्वसन्नपि मृतो हि सः॥"

शिष्यः,—महद्भ्यश्च महान् वा कः? (१९)

गुरुः—"पुण्यकार्यरता लोकाः परेषामुपकारकाः।
परार्थे जीवनं येषां कर्म्मणः फलकाङ्क्षया॥
ते मनुष्या महान्तश्च कथ्यन्ते सुजनैः सदा।
फलं कामयते यो न सुकृतानां निजस्य च॥
स एव हि नरश्रेष्ठ स्तेभ्योऽपि सुमहान् स्मृतः।"

शिष्यः, क्षुद्रात् क्षुद्रतरः को वा? (२०)

गुरुः—"अशनेन विहीनो यो नरो गृहविवर्जितः।
क्षुद्रात् क्षुद्रतरो ज्ञेयः स्थूलदर्शिजनैरिह॥
सूक्ष्मदर्शिजना ये वा तत्वज्ञान-समन्विताः।
क्षुद्रं वदन्ति क्षुद्राच्च नरं धर्म्मविवर्ज्जितम्॥"

क्रमशः।

## सभापतेरभिभाषणम्।

८६ पृष्ठतोऽनुवृत्तम्।

### माननीयद्वारवंगाधीश्वरमहोदयस्य।

(१)

सद्ब्रह्मचर्य्याश्रम एकचित्तैर्विधीयतां सर्व्वहिताय शीघ्रम्।
तमन्तरा नैव भवेत् कथञ्चित् योग्या सतां सन्ततिरित्यवेत॥ १॥
देशस्य वित्तस्य तथा बलस्य समुन्नतेर्मूलमिहामनन्ति।
यद्ब्रह्मचर्य्यप्रतिपालनं वै सन्तः सतां तत्त्वविदो महान्तः॥ २॥
तत्र स्थितेभ्यः पठनोत्सुकेभ्यः साहाय्यकं संवितरन्तु सभ्याः।
वस्त्रादिदानैः पटुनाविधार्थो सत्पाठरीतिञ्च विचारयन्तु॥ ३॥

येऽप्यन्य-पाठालयगाः पठन्ति पाश्चात्यविद्यां वटवः शुभार्थम् ।
तानप्यमोघैरुपदेशवाक्यै र्महाशया वेश्मनि शीलयन्तु ॥ ४ ॥
तथा यथैते न कुसङ्गदोषै राक्रान्तचित्ताश्च विजह्युरेतम् ।
धर्म्मानुकूलं व्यवहारजातमाचारसौचित्यपरं विचारम् ॥ ५ ॥

( २ )

किञ्चात्र विद्वत्प्रवराः स्वपुत्राँल्लोभात् स्वविद्याविमुखान् न कुर्य्युः ।
परं यथैते निजशास्त्रनिष्ठा भवेयुरेवं परिबोधयन्तु ॥ १ ॥
महाशयास्तानभितः स्वकीयै रुत्साहवाक्यैः परिवर्द्धयेयुः ।
यथा न ते स्वोन्नतिपद्धतिं कदाप्यवज्ञया दृष्टुमलं भवेयुः ॥ २ ॥
एवं स्वविद्याविषयानुरागभृतां सदा जीवनयोग्यभारम् ।
विभज्य रीत्या जनता सहर्षं गृह्णातु धर्म्मोन्नतितत्परा चेत् ॥ ३ ॥

( ३ )

किञ्च स्त्रियामप्यतियोग्यशिक्षां ददात्वदोषं परिचिन्त्य रीतिम् ।
यथा भवेयुर्गुणवञ्चिता न ता दुष्टभावा इति चिन्तयन्तः ॥ ४ ॥
संश्रावयन्तोऽनुदिनं पवित्रं चरित्रजातं कुलकामिनीनाम् ।
विपद्गतानामपि धर्म्मभाजां सीतानसूयादि-पतिव्रतानाम् ॥ २ ॥

( ४ )

किञ्चैवमेवाभ्युदयाय शश्वत् संस्थापिता भान्तु सभाः समन्तात् ।
ग्रामे च मुख्ये नगरेऽपि देशे यास्वेत्य धर्म्मादि-विचारणा स्यात् ॥ १ ॥
मुख्याश्च तासां नियमा भवन्तु प्रकृष्टविद्वद्वरसञ्चिताः शुभाः ।
जना यतः स्वोन्नतिमीहमाना मिथो विरोधादिकमुत्सृजेयुः ॥ २ ॥

( ५ )

"मैत्रो हि वै ब्राह्मण उच्यते" श्रुते र्वाक्येन चैतेन तु तद्विरोधितम् ।
यथा शुनो मित्रवदाचरेद् द्विजः किमाम शूद्रादिषु चैव हार्द्दकम् ॥ १ ॥
सद्ब्राह्मणैः क्षत्रियवैश्यशूद्रैरन्यैरपीत्थं ननमित्रभावैः ।
किमस्ति कृत्यं दुरवापमत्र मनाङ्महान्तः परिचिन्तयन्तु ॥ २ ॥

( ६ )

किञ्च—

अध्यापनञ्चाध्ययनादिकानि विप्रस्य कर्म्माणि मतानि शास्त्रे ।
न तैरिदानीं भविता कथञ्चित् निर्व्वाह आपद्गतधर्म्मभाजाम् ॥ १ ॥

अतश्चरन्तोऽपि यथावकाशं वाणिज्य-सत्कर्षणसेवनानि ।
न विस्मरेयुर्निजमुख्यकार्य्यं नित्याह्निकं ब्राह्मणतैकमूलम् ॥ २ ॥
कुलानुरागं स्वजनेषु भक्तिं धर्म्मानुकूलाचरणं विवेकम् ।
पूर्व्वेषु संश्रयमन्यकार्य्यसक्ता अपीमानि न सन्त्यजेयुः ॥ ३ ॥

( ७ )

किञ्चाति-हृद्यामनुसृत्य विद्यां चिरन्तनीं तामपि रीतिमद्य ।
न पारयामोऽर्थसुसाधने तथा यथा नवीनामनुसृत्य सद्यः ॥ १ ॥
परन्तु शिष्टाः परिचिन्तयन्तु नवीनविद्यैकधना विचक्षणाः ।
किमीदृशाः सन्ति यथा चिरन्तना जनाश्च लोकद्वयसाधिनोऽभवन् ॥ २ ॥
अतः समेत्यादरमादधाना भवन्त इत्थं प्रविचारयन्तः ।
प्राचीनमर्व्वाक्तन-सूक्तिजातं शास्त्रोक्तिवर्गं तुलयन्तु सारात् ॥ ३ ॥
कार्य्येषु तद्रीतिजुषं विशुद्धां सभ्याः सलीलां सरणीञ्च नव्याम् ।
विधाय सर्व्वं च तथैव कृत्यं कुर्व्वन्तु पन्थाः शुभदोऽधुनाऽयम् ॥ ४ ॥

( ८ )

किञ्च—

मुख्ये निजे पर्व्वणि वा यथेष्टकाले भवन्तः प्रतितीर्थमेतत् ।
किंवा प्रविष्टे निजदेवगेहे कुर्व्वन्तु इष्टं हरिकीर्त्तनं तत् ॥ १ ॥
शिवस्य वा कीर्त्तनमेकचित्तात्मतया भवानीगुणकीर्त्तनं वा ।
समाहरन्तः खलु भक्तिभावैः स्वान्तं शुभं दर्शकपुङ्गवानाम् ॥ २ ॥
तथा यतन्तामुपदेशवाक्यैर्धर्म्मोन्नते गौरवमादधानाः ।
यथा विकाशं समुपैति रम्या निजस्य धर्म्मस्य शुभा पताका ॥ ३ ॥
किञ्चातिहृद्यं परमानुकूलमिमञ्च मत्वा कृतिनो भवन्तः ।
कृतार्थयिष्यन्ति मदीयचित्तं स्वाध्यात्म-संचिन्तनयाऽचिरेण ॥ ४ ॥
दिवाऽथवा रात्रिगतं स्वकालं कार्य्येभ्य आदाय मुहूर्त्ततोऽपि ।
सूक्ष्मं रहोभावगतं च नित्यं निजेष्टदेवं परिचिन्तयन्तः ॥ ५ ॥
इदं सुकृत्यं समवेत्य मानं संसारपारं सुखमातरन्तः ।
आत्मीयलोकद्वयसाधनेषु क्षमा भवन्तु प्रतिकालमार्य्याः ॥ ६ ॥
मन्ये मदीयोक्तिचयं भवद्भिर्विचारयद्भिः परिबद्धधैर्य्यैः ।
कार्य्येषु रीतिं परिणामयद्भिः फलान्वितेयं परिषत्कृता स्यात् ॥ ७ ॥

करोति यः सर्व्वजनातिरिक्तां सम्भावनामर्थवतीं क्रियाभिः ।
संसत्सु जाते पुरुषाधिकारे न पूरणी तां समुपैति संख्या ॥ ८ ॥
इदं त्वदीयात्मगुणानुरूपं समीरितम्भारविनादरेण ।
तमर्थमादाय विहाय निद्रामालस्यमुद्रां कृतिनो यतध्वम् ॥ ९ ॥
धन्या भवन्तोऽधिसभं समन्तात् समागता भूसुरवृन्दमुख्याः ।
यान् वीक्षमाणा अपि मोदमाना रम्यानवाक्यैरनुमोदयामः ॥ १० ॥
नैतादृशः क्लेशभरः स्वदेशे जातो यतः श्रेयसि नः पुराभूत् ।
अतः स्वमौदार्य्यमुदारभावाः पुरो निधायाशु फलं लभध्वम् ॥ ११ ॥
यथेष्टदेवीं करुणार्द्रचित्तां स्वान्तं नयन्तः सुधियो महान्तः ।
समुन्नतिं तादृशमातनुध्वं यया पुनर्भारतभारतं स्यात् ॥ १२ ॥
यदीदृशेनैव पथा भवन्तः शान्ता महान्तोऽनुपलं व्रजन्तः ।
सञ्चालयेयु र्निजबन्धुवर्गान् फलं तदावश्यमवाप्नुमाशु ॥ १३ ॥
आशास्महे च भवतां शुभधर्म्मभाजां भूतां विभूतिमतुलां निजवंश्यलभ्याम् ।
सुप्ताकाले महिमवृत्तिवशाद्विद्वानौ कामेश्वरी-चरणपङ्कजयोः प्रसादात् ॥१४॥

( ६ )

"पश्य" पश्यामि परां हृद्यान्तां ब्रह्मयोनिं हि ।
पापं विधूय पुण्यं साम्यमुपैष्येऽ यस्याश्च ॥ १ ॥
उत्पत्तिस्थितिसंहृति-कर्त्री त्वं भूतमात्रस्य ।
एकैव ब्रह्मरूपां तां त्वा नित्यां प्रपद्येऽहम् ॥ २ ॥
नित्यं ज्ञानमनन्तं तत्त्वं परमे स्थितं व्योम्नि ।
आनन्दा स्ते भान्ति परं तव स्वरूपं विजानामि ॥ ३ ॥
विद्याविद्येति परं रूपद्वयमाहुरस्मभ्यम् ।
मुनयो विमृश्य सकलतत्त्वं तेऽतो नमस्तुभ्यम् ॥ ४ ॥
इन्द्रस्यापि बोधं पूर्वं या कृतवती देवी ।
हैमवती सोमा मे कामान् दिश्यात् कृपादृष्ट्या ॥ ५ ॥
अदितिर्या सम्भवती प्राणे न च देवतामयी परमा ।
तिष्ठन्तीं तां हि गुहां प्रविश्य जानामि जगदम्बाम् ॥ ६ ॥
यस्यां कलाः समया विलयं यान्तीति श्रूयते पुंसः ।
सैव परा मातासौ दयया धात्रीव नोऽवश्यम् ॥ ७ ॥

श्रीर्ह्रीर्धी रति भक्त्या यां स्तौति परं वेदपुरुषोऽपि ।
परमा हिरण्यकोशे स्थितामुपास्यां सदा वन्दे ॥ ८ ॥

---

## पञ्चदशी ।

### श्रीयुक्तमूलशङ्करशर्म्मणः ।

कुतस्त्वं रे समायातः क्व ते जन्म गन्ता क्व ।
त्वमेतन्मूढ विज्ञातुम्—अरे भज सच्चिदानन्दम् ॥ १ ॥
गतास्ते बन्धवो गुरवस्तथा चेष्टमित्राणि ।
तथैव त्वं तु गन्ताऽसि—अरे भज सच्चिदानन्दम् ॥ २ ॥
न ते माता पिता भ्राता न ते दारा न ते दुहिता ।
न ते पुत्रा न मित्राणि—अरे भज सच्चिदानन्दम् ॥ ३ ॥
न ते वित्तं न चागारं न ते देहो न चेन्द्रियकम् ।
मनो-बुद्धी न ते चित्तम्—अरे भज सच्चिदानन्दम् ॥ ४ ॥
अनित्यास्ते सकलभावा वियुज्यन्ते समायाताः ।
वराकाः कर्मणां वशगाः—अरे भज सच्चिदानन्दम् ॥ ५ ॥
शुभाशुभकर्मफलयोर्निबद्धस्त्वं मनुज बुद्ध्वा ।
परित्यज रे ममाहंत्वम्—अरे भज सच्चिदानन्दम् ॥ ६ ॥
कथं त्वं मूढ संसारे जरा-मरणादिदुःखाढ्ये ।
रतो मनुषे सुखं परमम्—अरे भज सच्चिदानन्दम् ॥ ७ ॥
सुखं चान्विष्यसीह त्वं कथं क्षुद्रेषु विषयेषु ।
अवश्यं ते हि यातारः—अरे भज सच्चिदानन्दम् ॥ ८ ॥
न यावत् स्थूलदेहस्ते वियुक्तः प्राणपरिरम्भात् ।
कुरु प्रिय तावदात्महितम्—अरे भज सच्चिदानन्दम् ॥ ९ ॥
समाचर चित्तशुद्ध्यर्थं भगवता सम्यगुद्घुष्टम् ।
श्रुति-स्मृति-कर्मयोगं त्वम्—अरे भज सच्चिदानन्दम् ॥ १० ॥
विविक्तं सेवमानस्त्वं निरोधार्थं स्ववृत्तीनाम् ।
भव प्रियध्यानयोगस्थः—अरे भज सच्चिदानन्दम् ॥ ११ ॥
परित्यज्यैव सर्वाणि मनोवाक्काय-कर्माणि ।
गुरुश्रुति-वाक्य-परमहंस्त्वम्—अरे भज सच्चिदानन्दम् ॥ १२ ॥

यतो जातानि भूतानि येन जीवन्ति यद्यन्ति ।
तमावाप्यान्तरात्मानम्—अरे भज सच्चिदानन्दम् ॥ १३ ॥
अहं सर्वेश्वरः साक्षात् परं ब्रह्मास्म्यहं नित्यम् ।
विभावय ज्ञाननिष्ठस्त्वम्—अरे भज सच्चिदानन्दम् ॥ १४ ॥
न चाहं नैव चापि त्वं न सर्वं दृश्यजातमिदम् ।
परात्मज्ञानमेकरसम्—अखण्डं सच्चिदानन्दम् ॥ १५ ॥

---

## द्वैतवादवीरभद्रः ।

### श्रीयुक्त श्रीजीवकाव्यव्याकरणतीर्थस्य ।

( ३ )

संस्कृतभारतीप्रथमभागप्रथमसंख्यायां " एते हि द्वैतमतानुसारिणः ( ५६ पृः १० पं ) इत्युपक्रम्य आरोपस्तु बाधित एवेत्यन्तं यदद्वैतवादप्रभाकरे कथितं तदसारं, यतः "असौ वा आदित्यो देवमधु" इत्यादि श्रुतौ सत्यामपि अभेदबोधकविभक्तौ द्यौरेव तिरश्चीनवंश इत्यादिरूपेण श्रुत्यक्षरेण यद्यारोपः प्रतिपाद्यते, किमिति न तत्त्वमसीतिवाक्ये स प्रतिपाद्येत, भेदे सति अभेदज्ञापनस्य तुल्यत्वात्, तत्पदार्थ-त्वंपदार्थयोर्भेदस्य सर्व्वोपनिषद्गम्यतायां द्वैतोक्तिरत्नमालायां प्रतिपादितत्वेन तदपलापासम्भवात् । यत्र चारोपः प्रभाकरकृतापि स्वीकृतस्तत्रापि स्वयं "नात्र लक्षणा" इति कथयता स्वमौग्ध्यमेवाविष्कृतम् । किञ्च तत्त्वमस्यादिवाक्येऽपि लक्षणा सर्व्वैरेवाद्वैतिभिः स्वीक्रियते । इयांस्तु विशेषः तैरद्वैतमतसमर्थनाय अस्माभिश्च द्वैतमतसमर्थनायेति, लक्षणाप्रकारभेदः पुनः प्रसिद्ध एव ।"उपासना मानसी क्रिया ध्यानरूपा साच वस्त्वनपेक्षा ज्ञानञ्च वस्त्वपेक्षं ज्ञानविषयेषु वाक्येषु तथाभूतवस्त्वपेक्षतया ज्ञानस्यान्यथाकल्पनं न कथमपि सम्भवति, ध्यानन्तु वस्त्वनपेक्षत्वेन सम्भवति" इति प्रभाकरकृन्मतं न समीचीनं ध्यानं हि प्रत्ययैकतानता विजातीयप्रत्ययानन्तरितः सजातीयप्रत्ययप्रवाह इति पूर्व्वाचार्य्यग्रन्थः, प्रत्ययश्च निश्चयात्मकज्ञानं तच्चेद् वस्त्वनपेक्षं ज्ञानसामान्यस्य वस्त्वपेक्षत्वमसिद्धमेव ज्ञानविशेषस्य तु वस्त्वपेक्षत्वमिष्टमपि ज्ञानान्तरं वस्त्वनपेक्षत्वं न प्रतिषेधति तस्माद् ये ध्यानं

वस्त्वनपेक्षमिष्यते तेषां ज्ञानमात्रे वस्त्वपेक्षत्वाभ्युपगमो विरुद्धः वस्तुतः
ध्यानज्ञानयोर्द्वयोरेव वस्त्वपेक्षत्वमस्ति धर्म्मधर्म्मिणोः वास्तवसंसर्गापेक्षा तु सर्व्वत्र
ध्याने ज्ञाने च नास्ति तेन ध्यानमिव ज्ञानान्तरमपि अन्यथाभूतं भवति तत्त्वम-
स्यादिवाक्यमुपासनाङ्गतया तदात्मकमन्यथाभूतज्ञानमारोपलक्षणं जनयत् प्रकृतो-
पयोगितामापद्यते । ध्यानं नाम मानसी क्रियेति यदाचार्य्यवचनं तदपि तत्राहा-
र्य्यत्वसूचनाय नतु तस्य ज्ञानसामान्यत्वव्यावर्त्तनाय । अन्यथायोगसूत्रादिवि-
रोधः प्रसज्येत इत्यञ्च उपासनमपि ज्ञानगर्भं तत्र यद्यारोपः प्रवेश्यते उपा-
सनोपयोगिन्येव तत्त्वमस्यादिज्ञाने किमपराद्धमारोपत्वाभ्युपगमेन । नहि
प्रागुपन्यस्तोपासनविधौ गुणभावमेतत्प्रकरणीयज्ञानस्यानङ्गीकृत्य पूर्व्वप्रकरणेन
स्वरसतः सङ्गतिमुपदर्शयितुं शक्यते नच "सर्व्वं खल्विदं ब्रह्म तज्जलानि त्युक्तं
कथं तस्माज्जगदिदं जायते तस्मिन्नेव च लीयतेऽनिति च तेनैवेत्येतद् वक्तव्यम् ।
अनन्तरं च एकस्मिन् भुक्ते विदुषि सर्व्वं जगत् तृप्तं भवति इत्युक्तं तदेकत्वे सदात्म-
नः सर्व्वभूतस्यस्योपपद्यते नात्मभेदे कथञ्च तदेकत्वमिति तदर्थोऽयं षष्ठोऽध्यायः
आरभ्यते" इति श्रीशाङ्करभाष्योक्ता तत्त्वमस्यादिघटितछान्दोग्यषष्ठाध्यायस्य
पूर्व्वप्रकरणेन सुसङ्गतिरिति वाच्यं सर्व्वं खल्विदमित्युपासनविध्यङ्गत्वस्य
तावतापि दुरपह्नवत्वे तदुपक्रियया तदन्तरङ्गताया एव युक्तत्वात् एकस्मिन् भुक्ते
विदुषि इत्याद्युक्तेरयुक्तत्वाच्च तथाहि यद्येकस्मिन् विदुषि भुक्ते आत्मैक्येन जगत्तृप्त-
मद्धा भवेत् एकस्य वैदुष्ये सर्व्ववैदुष्यं सर्वमोक्षश्च प्रसज्येत । तस्माद् उपासनाङ्गा-
दिविद्याप्रशंसेयमुपासनार्थवादभूता सुतरां द्वैतपक्षे युज्यते । अद्वैतपक्षे कथञ्चित्त-
दुपपादनन्तु शास्त्रसङ्गतिविरोधादुपेक्षणीयम् । शास्त्रीयोपक्रमोपसंहारादिलिङ्गैः
शास्त्रस्योपासनतात्पर्य्ये पर्य्यवसिते तदवान्तरप्रकरणानां साक्षात् तदानुगुण्य-
सम्भवे प्रकारान्तरपर्य्यवसायित्वप्रतिपादनं न खलु युज्यते नाप्यवान्तरप्रकरणा-
नुरोधेन शास्त्रस्योपक्रमादीन्यवधारयितुमयेचैवेदं स्फुटीभविष्यति । यच्चोक्तं "तत्त्व-
मस्यादिमहावाक्यप्रकरणे दृष्टान्ततया असत्यसन्धस्य चौरनिदर्शनेन बन्ध उक्तः
सत्यभिसन्धस्य तु मोक्षोऽभिहितः' जीवे ब्रह्माभेदज्ञानञ्चेदारोपितं भवेत् तदा
तस्यापि मिथ्यात्वात् श्रुत्युक्तोयं दृष्टान्तो न कथमपि सामञ्जस्यमियात् । तन्मन्दं
यथाहि पुरुषं सौम्योत हस्तगृहीतमानयन्त्यपहार्षीत् स्तेयमकार्षीत् परशुमस्मै त-
पतेति स यदि तस्य कर्त्ता भवति तत एव अनृतमात्मानं कुरुते सोऽनृताभिसन्धो
ऽनृतेनात्मानमन्तर्द्धाय परशुं तप्तं प्रतिगृह्णाति स दह्यतेऽथ हन्यते । अथ यदि

तस्याकर्त्ता भवति तत एव सत्यमात्मानं कुरुते स सत्याभिसन्धः सत्येनात्मानमन्तर्द्धाय परशुं तप्तं गृह्णाति स न दह्यतेऽथ मुच्यते । स यथा तत्र नादाह्येतैतदात्म्यमिदं सर्व्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इति तद्धास्य विजज्ञाविति विजज्ञाविति"। इति श्रूयते ( छान्दोग्य ६।१६ ) शृणु यथा सौम्य पुरुषं चौर्य्यकर्म्मणि सन्दिह्यमानं निग्रहाय परीक्षणाय चोतापि हस्तगृहीतं बद्धहस्तमानयन्ति राजपुरुषाः। किं कृतवानयं इति पृष्टाश्चाहुरपहार्षीद्धनमस्यायम् । तेचाहुःकिमपहरणमात्रेण बन्धनमर्हति । अन्यथा दत्तेऽपि धने बन्धनप्रसङ्गादित्युक्ताः पुनराहुस्तेयमकार्षीत् चौर्य्येण धनमपहार्षीत् इति । तेष्वेवं वदतसु इतरोऽपह्नुते नाहं तत्कर्त्ता इति । ते चाहुः सन्दिह्यमानाः स्तेयमकार्षीः त्वमस्य धनस्येति । तस्मिंश्चापह्नुवति चाहुः परशुमस्मै तपतेति शोधयत्वात्मानमिति । स यदि तस्य स्तैन्यस्य कर्त्ता भवति बहिश्चापह्नुते स एवम्भूतस्तत एवानृतमन्यथाभूतं सन्तमन्यथात्मानं कुरुते स तथानृताभिसन्धोऽनृतेनात्मानमन्तर्द्धाय व्यवहितं कृत्वा परशुं तप्तं मोहात् प्रतिगृह्णाति सदह्यतेऽथहन्यते राजपुरुषैः स्वकृतेनानृताभिसन्धिदोषेण । अथ यदि तस्य कर्म्मणोऽकर्त्ता भवति तत एव सत्यमात्मानं कुरुते स तथा स्तैन्याकर्त्तृतयात्मानमन्तर्द्धाय परशुं तप्तं प्रतिगृह्णाति सत्याभिसन्धः सन्न दह्यते सत्यव्यवधानादथ मुच्यते च मृषाभियोक्तृभ्यः । तप्तपरशुहस्ततलसंयोगस्य तुल्यत्वेऽपि स्तेयकर्त्रकर्त्रोरनृताभिसन्धो दह्यते न तु सत्याभिसन्धः । स यथा सत्याभिसन्धस्तप्तपरशुग्रहणकर्म्मणि सत्यव्यवहितहस्ततलत्वान्नादाह्यत न हन्यते इत्येतद्देव सद्ब्रह्मसत्याभिसन्धेतरयोः शरीरपातकाले च तुल्यायां सत्सम्पत्तौ विद्वान् सत्सम्पद्य न पुन र्व्याघ्रदेशादि देहग्रहणायावर्त्तते । अविद्वांस्तु विकारानृताभिसन्धः पुनर्व्याघ्रादिभावं देवतादिभावं वा यथा कर्म्म यथा श्रुतं प्रतिपद्यते । यदात्माभिसन्ध्यनभिसन्धिकृते मोक्षबन्धने यच्च मूलं जगतो यदायतनाः यत्प्रतिष्ठाश्च सर्व्वाः प्रजाः यदा किञ्च सर्व्वम् यच्चाव्ययममृतमभयं शिवमद्वितीयं तत्सत्यं स आत्मा एवातः तत्त्वमसि हे श्वेतकेतो" इत्यन्तं श्रीशाङ्करभाष्यं नन्वत्रासत्यानृतविभागः सोऽद्वैतनये व्यवहारिकस्तात्त्विको वा ? नाद्यः गौरोऽहमित्यादिव्यवहारेण देहस्य व्यवहारिकसत्याहंप्रत्ययास्पदतया तेन सत्येनान्तर्हितस्य देहात्ममानिनो बन्धो न स्यात् प्रत्युत मोक्ष एव स्यात् । नान्त्यःएकस्य सत आत्मनः कर्त्तृत्वाद्यभावस्य तन्मते तात्त्विकसत्यतया नाहं तत्कर्त्तेति वचसोऽनृतत्वाभावेन तत एवात्मानमनृतं

कुरुते इति श्रुत्युक्तिरसङ्गता स्यात् । अहं प्रत्ययस्यानृतसम्बन्धात्तयेति चेत् सत्याभिसन्धस्याप्यहंप्रत्ययेनानृताभिसन्धानं स्यात् इति सत्याभिसन्धत्वं तस्य व्याहन्येत न च दृष्टान्ते व्यवहारिकसत्यं दार्ष्टान्तिके च तात्त्विकसत्यमिति देहादावात्मत्वज्ञाने तादृशसत्यासम्बन्धेन बन्ध एव युक्त इति वाच्यं व्यवहारिकसत्यस्य तात्त्विकसत्यापेक्षया दुर्ब्बलत्वेन अनृतमात्मानं कुरुते इति श्रुतिवचनस्यासङ्गतेरपरिहारात्, दृष्टान्तदार्ष्टान्तिकयोः अर्थभेदकल्पने गौरवात् प्रमाणाभावाच्च । न खलु भगवती श्रुतिर्व्यवहारिकतया तात्त्विकतया च सत्यद्वैविध्यं क्वचिदपि दर्शयति, येन तदुपगृहीतसत्यपदमर्थद्वयीं बोधयेत् तात्त्विकार्थम्वा परित्यजेत् । अस्माकं मते तु "न कश्चिद् दोषः सत्यस्यैकविध्यात्, अहं प्रत्ययास्पदं खल्वात्मा सच शरीरेन्द्रियमनोविलक्षणः प्रतिशरीरं भिन्नो नित्यः कर्त्ता च अहमिति प्रत्ययस्यान्यगोचरत्वे कृतहान्यकृताभ्यागमौ प्रसज्येयातां स एव जीवात्मेति व्यपदिश्यते परमात्मा चेश्वरः आत्मत्वं त्वदुभयसाधारणं । एवञ्च तेन यद्यात्मकृतं स्तैन्यं निह्नुते नाहं कर्त्तेति, ततो भवत्येवानृतं तच्च तात्त्विकं तेन चानृताभिसन्धानेन तप्तपरशुस्पर्शदग्धकरतलःस्तेनत्वेन विभाव्यते ।

अथ चेदस्तेनः स्वस्य तात्त्विकमेव स्तेयाकर्त्तृत्वं कथयन् तात्त्विकेन सत्येन दाहाद्रक्ष्यते एवमेवं देहादावनात्मनि आत्मत्वमकर्त्तरि कर्त्तृत्वमभिमन्यमानोऽनृताभिसन्धानेन दह्यते दुःखैः स्वात्मन्यारोपितेश्वरोपासनया देहादीतरमात्मत्वेन योगतः प्रत्यक्षीकुर्व्वंश्च सत्याभिसन्धो न दह्यते न च जीवात्मानं परात्मत्वेनोपासीनस्य भवत्वनृताभिसन्धिः अतो बन्धाख्यो दाहः स्यादिति वाच्यम् । तदुपासनफलं यद्योगप्रत्यक्षं देहादिव्यतिरिक्तजीवात्मविषयकं तस्यानृतबन्धवर्ज्जितत्वेन बन्धासम्भवात् । न खल्वारोपरूपन्मूलकोपासनं वा साक्षान्मोक्षहेतुरिति द्वैतोक्तिरत्नमालायामुक्तं किन्तु जीवात्मसाक्षात्कारद्वारा स चेत्तात्त्विकः सत्यः श्रौतदृष्टान्तदार्ष्टान्तिकयोः सारूप्यं सूपपन्नं किञ्च नवकृत्व उपदिष्टानां तत्त्वमसीतिवाक्यानामुपासनविध्यङ्गार्थकत्वं तच्चाङ्गं जीवे ईश्वरत्वारोप ईश्वरे सर्व्वात्मत्वारोपः ईश्वरजीवात्मनोः साक्षात्यज्ञानमीश्वरस्वरूपज्ञानं जीवस्वरूपज्ञानञ्च एतेषां पञ्चानां प्रकारभेदेनोपदेशस्य नवधोपन्यासः नवमश्चायं जीवस्वरूपज्ञानफलक उपदेशः, यथा देहादिविलक्षणः कर्त्तेति यत्प्रत्यक्षेण साक्षान्मोक्षः । अतएव द्वैतोक्तिरत्नमालायामुक्तं न च देहाद्यतिरिक्तत्वं जगत् स्रष्टृत्वादिकञ्चेति द्विविधरूपमात्मसामान्यं

नास्ति कथं तदुभयरूपेण आत्मसामान्योपासनमितिशङ्क्यम् आत्मत्वसामानाधिकरण्येन तदुभयरूपस्यैव सम्भवादिति स यथा नादह्यते इत्यादिश्रुतेर्जीवस्वरूपप्रतिपादनपरं व्याख्यानन्तु स सत्याभिसन्धो यथा न दह्यते तथा देहादिव्यतिरिक्ते आत्मनि कर्तृत्वं मन्यमानःससत्याभिसन्धतया न दह्यते दुःखैस्तदिदमात्मवस्तु सत्यं नित्यमित्यर्थः नित्य एव सर्व्वेषामात्मा त्वमपि स एवेति प्रथमं तत्त्वमसीतिवाक्यन्तु जगत् स्रष्टृत्वं त्वंपदार्थे सर्व्वात्मत्वञ्च तत्पदार्थे ज्ञापयन्नारोपमुपदिशति तथा चान्तवाक्यीयमारोपधर्म्मिज्ञानमुपासनोपयोगि भवदपि कथमपि नानृतेन सम्बध्यते तस्मात् तप्तपरशुं स्पृशन् द्वैतवादी सत्याभिसन्धतया मुच्यते त्वमेव स्वेच्छया स्पृशन् अनृताभिसन्धो दह्यमानोऽयमद्वैती वराकः परिरक्षणीयः कारुणिकैः ।

यच्चान्यदुक्तं "यत्र यत्र श्रुतौ तथा तथान्यदृष्टोपासनं विधीयते तत्र तत्राल्पीयान् फलविशेषः" इति तच्च आदित्यदृष्ट्योद्गीथस्वरोपासनाया आरोपात्मिकाया मोक्षफलश्रुतेः सप्तविधं सामोपासीत इत्यादिश्रुतौ हिङ्कारादिषु सामत्वपरिकल्पनया आरोपरूपसप्तभक्तिसामोपासनपूर्व्वकेन द्वाविंशेन अमृत्युगोचरविशोकानन्दस्य मोक्षलक्षणस्य लाभदर्शनाच्च, दिङ्मात्रमिदमन्यत्रापि महाफलश्रवणात् उपासनाविशेषे स्वल्पफलश्रुतिस्तु तत्तदुपासनाधिकारिविशेषगोचरणता प्रदर्शनार्थेति । यच्चोक्तं "या मधुविद्यादृष्टान्ततयोपन्यस्यते नासौ दृष्टान्तो ब्रह्मविद्यायां सम्भवति तयोर्वैषम्यात् इत्यादिकं प्रभाकरकृता तदपि तस्य वाक्याडम्बरमात्रम् वैषम्यविरहात् । जीवपरमात्मनोर्भेदबोधकश्रुतीनां द्वैतोक्तिरत्नमालायां बहुशो दर्शितत्वेनाभेदश्रुतीनामारोपपर्य्यवसिताया, एव युक्तत्वात् । भेदश्रुतीनां स्वार्थपरित्यागे चाभेदश्रुतेर्निरपेक्षत्वेन बलीयस्त्वकल्पने च विनिगमनाविरहात् । शास्त्रोपक्रमादिलिङ्गैरभेदश्रुतीनामन्यपरताया विस्तृतं साधितत्वाच्च । यच्चोक्तं प्रभाकरे परन्तु तत्वस्य आरोपितत्वकथनं व्याहतमिति तद्विदुषां हास्यायैव । तत्त्वमित्यारोपयन्तितीतिकारेण द्वैतोक्तिरत्नमालायां अतत्त्वस्य तत्त्वभावज्ञापनमेव प्रकटीकृतम् । अतएव तत्रोक्तं वस्तुतत्त्वं पुनर्द्वैतमेवेति । यच्चाभिहितं अबाधितं तत्त्वं आरोपस्तु बाधित एवेति तत् स्ववचोव्याहतं "यतः तत्त्वस्य आरोपितत्वकथनमिति स्ववचसा तत्त्वमारोपितमित्येव बोध्यते न तु तत्त्वमारोप इति, अबाधितत्वे तत्त्वस्य बाधितत्वे चारोपस्य व्याघाताभावात्तयोरन्योन्याभेदस्य स्वयमङ्गीकृतत्वात् भिन्नयोर्धर्म्मविरोधे कस्तावदनुन्मत्तो व्याघातं प्रतीयात् । अन्यारोपबाधादारोपितस्यापि बाध इति तदेव विवक्षितमिति चेत्र आरोपितस्य

सर्व्वत्र बाधाभावात्—रज्ज्वावारोपितः सर्पः सर्पत्वं वा रज्ज्वावेव बाध्यते न तु सर्पेऽपि, तथाच यस्य यत्तत्त्वं तत्र तद्बाधितमेव अन्यत्रत्वारोपितं बाध्यते। तथाच तत्त्वस्यारोपितस्य च स्वरूपतो नास्ति भेदः, कुतो धर्म्मभेदः सम्भवेत् धर्म्मिभेदेन ज्ञानभेदकृते एव बाधिताबाधितत्त्वे नत्वन्यादृशे—तथाचैक एव धर्म्मः प्रमीयते चारोप्यते चेति कुतो व्याघातः। किञ्चाद्वैतनये तावदारोपस्य ज्ञानात्मकस्य स्वतो बाधासम्भवेन तद्बाधहेतो र्विषयबाधस्यैव वक्तव्यतायामारोपबाधोक्तिरत्यन्तमयुक्तत्वात्। तस्मात्—

व्याहतस्ववचोनिष्ठः परोक्तिव्याहतिं तथा।
धावद्यानस्थितो वृतधावनं भाषते यथा॥

(क्रमशः)

---

## अन्वीक्षणशास्त्रकाराः।

पण्डित वे. वेङ्कटरामशर्म्मणः।

इह किल परमकारुणिका आचार्याः दुःखपङ्कनिमग्नं जगदुद्दिधीर्षवः अभिप्रेतमेवसमर्थनाय विविधान् प्रस्थानभेदानाश्रित्य सांख्ययोग-मीमांसावेदान्त-न्यायवैशेषिकादीनि दर्शनशास्त्राणि विरचयामासुः। एतस्मिन्नन्तरे विद्या च तानुपसङ्गम्यायाचत—"विद्या ह वै ब्राह्मणमाजगाम। असूयकायानृजवे शठाय न मां ब्रूया अवीर्यवती तथा स्या" मिति। ततश्च श्रेयोर्थिनः श्रवणादिपटूननसूयकान् शिष्यवटून् तापत्रयपराहतान् अन्तिकमुपसेदुषो निशाम्य करुणाविष्टचेतस अवगतहेतुभावाः ते महर्षयः तानुपदिदिशुः,अविच्छिन्नसम्प्रदायवीर्यवत्तरं शास्त्रं यथा स्यादिति। तत्र वैशेषिकन्यायशास्त्रयोः उपदेष्टारौ कणभक्षाक्षचरणौ। कणादो वैशेषिकसूत्रकारः। कणाद इति तस्य कापोतीं वृत्तिमनुतिष्ठतः रथ्यानिपतितांस्तण्डुलकणानादाय प्रत्यहं कृताहारनिमित्ता संज्ञा। सोऽयं महेश्वरनियोगप्रसादाधिगम्य वैशेषिकशास्त्रं प्रणिनायेति स्मर्यते। तस्य चेदमुपोद्बलकं वाक्यम्—

"योगाचारविभूत्या यस्तोषयित्वा महेश्वरम्।
चक्रे वैशेषिकं शास्त्रं तस्मै कणभुजे नमः॥" (प्रशस्तपादभाष्यम्)

इति। यद्यपि कविभिः शिष्यप्रशिष्यैश्चानेकप्रकारेण निरूपणात् सम्प्रदायविद्भिर्मतप्रवर्तकैश्च दुराग्रहेण निर्मूलकिंवदन्तीभिः स्वमतमाहात्म्यमात्रप्रस्थापनात्

बहूनां पुरुषाणामेकनाम्ना प्रसिद्धत्वात् च अर्वाचीनानामपि निबन्धकाराणां तथ्ये-नेयत्तया विवादरहितं जीवनचरितं प्रायो नोपलभ्यते किं पुनश्चिरन्तनानां कणादगौतमप्रभृतीनाम् । एतावत्तु ज्ञायते—

वैशेषिकशास्त्रप्रणेता कणादमहर्षिः कश्यपगोत्रे जातः, उलूकर्षेरपत्यमित्यनुमीयते । अत एवास्य वैशेषिकशास्त्रस्य औलूक्यदर्शनमिति नामान्तरम् । उलूकमुनिस्तु विश्वामित्राज्जात इति महाभारतेऽनुशासनपर्वणि प्रतिपादितम् । कणादश्च सप्तविंशतितमे चतुर्युगपरिवर्ते प्रभासक्षेत्रे शिवावतारस्य द्विजोत्तमस्य सोमशर्मणः शिष्यतां गत इति वायुपुराणे निरूपितम् । एवं पद्मपुराणोत्तरखण्डे देवीभागवते च कणादस्य नाम स्मृतमिति तस्य चिरन्तनत्वं सुस्पष्टम् । ब्रह्माभ्यासदूरीकृतप्रमादाय मुनये कणादाय स्वयमीश्वर उलूकरूपधारी प्रत्यक्षीभूय द्रव्यगुणकर्मसामान्यविशेषसमवायलक्षणं पदार्थषट्कमुपदिदेश । तदनु स महर्षिर्लोकानुकम्पया षट्पदार्थरहस्यप्रपञ्चनपराणि सूत्राणि रचयाञ्चकार । तेषु सूत्रेषु प्रशस्तकरदेवो भाष्यं लोकोत्तरवैभवं अभाषिष्ट । तत्र चतस्रो वृत्तयो निर्वृत्ताः । एकां व्योमवतीनाम्नीं वृत्तिं व्योमशिवाचार्यो जुगुम्फ । द्वितीयां तु न्यायकन्दल्यभिधानां श्रीधराचार्यः सन्ददर्भ । तृतीयां किरणावलीनाम्नीं उदयनाचार्यस्ततान । चतुर्थीं तु लीलावतीति ख्यातां श्रीवत्साचार्यो बबन्ध । चतस्रोऽपि वृत्तयो गभीरार्थाः । भाष्यकारस्य नाम प्रशस्तकरदेव इति 'पीटरसन्' महाशयसङ्कलित 'रिपोर्ट' पुस्तके, प्रशस्तदेवाचार्य इति कणादरहस्ये, प्रशस्तपाद इति मुक्तावलीप्रकाशे, प्रशस्ताचार्य इति वैशेषिकसूत्रोपस्कारे, प्रशस्त इति शिवरहस्ये च दृश्यते । अतो मन्ये प्रशस्त इति भाष्यकारस्य मुख्यं नाम पाददेवादिशब्दास्त्वौपचारिका इति । भाष्यकारस्य कस्मिन् काले कस्मिन् देशे आविर्भाव इति न ज्ञायते । परन्तु बोधायनसूत्रे प्रवराध्याये आङ्गिरसगणे गौतमवर्गे औशनससंग्रहे प्रशस्तस्य नाम पठितम्—'औशनसाः दिश्याः प्रशस्ताः सुरूपाक्षा महोदरा विकंहता सुवुद्धा निहता इत्येते औशनसाः । तेषां त्र्यार्षेयः प्रवरो भवति आङ्गिरसगौतमौशनस' इति ।

'प्रशस्तस्याभवन् पञ्चपुत्राः सर्वे तपोधनाः' इति शिवरहस्येऽपि दृश्यते ।

न्यायसूत्रप्रणेतुरक्षपादस्याङ्गिरसगोत्रे उशिजान्महर्षेरुत्पत्तिः मत्स्यपुराणादौ कथिता । तत्रैव अष्टचत्वारिंशत्तमे अध्याये उशिजान्महर्षेः ममतायां बृहस्पतिशापात् दीर्घतपा नाम महर्षिरभूत् । सुरभेरनुग्रहात्स एव गौतमः सञ्जातः

इति प्रतिपादितम्। गोतमश्च वेदव्याससमकालीन इति गम्यते। एवं किल किंवदन्ती प्रचरति—वेदव्यासो गौतमस्य शिष्य आसीत्। तेन च शारीरकशास्त्रे 'एतेन शिष्टाऽपरिग्रहा अपि व्याख्याताः' इत्यनेन सूत्रेण शिष्टापरिग्रहतया गोतमादिमते निराकृते तदवगम्य गौतमो नानेन चक्षुषा तं शिष्यापसदं पश्यामीत्युक्तवान्। तच्छ्रुत्वा वेदव्यासः गुरोः प्रसन्नतायै तच्चरणोपान्तं गत्वा तं तुष्टाव। ततः शिष्यवत्सलो महर्षिर्गौतमः योगबलात्पादे चक्षुरुत्पाद्य तेन चक्षुषा वेदव्यासं दृष्टवान् इति। अत एवाक्षपाद इति तस्यापराख्या प्रचरति। सोऽयं महर्षिर्गौतमः विहारदेशवास्तव्य इत्यनुमीयते। अद्यापि तत्प्रदेशे गौतमाश्रमनाम्ना प्रसिद्धं किञ्चित्स्थानमस्ति।

न्यायभाष्यकारो वात्स्यायनः। 'यदक्षपादप्रतिभो भाष्यं वात्स्यायनो जगौ' इति वचनम्। पक्षिलस्वामीति च व्यपदिष्टोऽयं न ऋषिरिति प्रतीयते। ऋषीणां तथाविधनाम्नः क्वचिदप्यश्रवणात्। वात्स्यायनश्च यदि—

'वात्स्यायनो मल्लनागः कुटिलश्चणकात्मजः।
द्रामिलः पक्षिलस्वामी विष्णुगुप्तोऽङ्गुलश्च सः॥'

इत्यभिधानचिन्तामणिसन्दर्भात्

'वात्स्यायनस्तु कौटिल्यो विष्णुगुप्तो वराणकः।
द्रामिलः पक्षिलस्वामी मल्लनागोऽङ्गुलोऽपि च॥'

इति यादवप्रकाशसन्दर्भाच्च चाणक्य एव भवेत् तदा मौर्यचन्द्रगुप्तार्थे चाणक्योऽर्थशास्त्रं विरचयामास इति दण्डिवाक्यात्, नन्दान् हत्वा कौटिल्यो नन्दराज्ये चन्द्रगुप्तमभिषिषेच इति विष्ण्वादिपुराणवाक्येभ्यः, 'चाणक्येन नरेन्द्रार्थे शासनस्य विधिः कृतः'

'येन शास्त्रं च शस्त्रं च नन्दराजगता च भूः।
अमर्षेणोद्धृतान्याशु तेन शास्त्रमिदं कृतम्॥' (कौटिलीयकार्थशास्त्रम्)

इत्यर्थशास्त्रवचनाच्च, चन्द्रगुप्तसमये न्यायभाष्यमभूदित्यवगम्यते। संवदति चार्थशास्त्रं तत्र तत्र वाक्यशैल्यां न्यायभाष्यकामसूत्रयोः। 'कर्तर्या कुन्तलः शातकर्णिः शातवाहनो महादेवीं मलयवतीं जघान'। इति कामसूत्रे अभिदधानो वात्स्यायनस्तु क्रिस्ताब्दानां १३० तमादुत्तराद्वा च २०९ तमादुत्तराद्भारतखण्डस्य पश्चिमप्रान्तेषु कृतराज्यानुशासनानां शातवाहनानां वंश्येन शातकर्णिना समकालिको वा आहोस्विदुत्तरकालिको वाभवदिति वाढं ज्ञायते

इति महीशूरपुरसंस्कृतग्रन्थावलीप्रसाधकाः श्यामाशास्त्रिणः प्राहुः। अस्य च वात्स्यायन इति स्वगोत्रनिमित्ता संज्ञा। विष्णुगुप्त इति मुख्यं नाम।

"न कुम्भलग्नं शुभमाह सत्यः
न भागभेदाद्यवना वदन्ति।
कस्यांशभेदो न तथास्ति राशेः
अतिप्रसङ्गस्त्विति विष्णुगुप्तः॥"

"आयुर्दायं विष्णुगुप्तोऽपि चैवं
देवस्वामी सिद्धसेनश्च चक्रे" (बृहज्जातकम्)

अस्य श्लोकस्य व्याख्यावसरे भट्टोत्पल आह 'विष्णुगुप्तेनापि चाणक्यापरनाम्ना एवमुक्तं भवति' इति। चतुःषष्ट्यङ्गे ज्योतिःशास्त्रे परं प्रावीण्यमुपागतश्चाणक्य इति मुद्राराक्षसम्।

प्रसिद्धविक्रमादित्यसभामलङ्कुर्वाणेन महाकविना कालिदासेन स्पर्धमानः सुतरां तत्समानकालीनो दिङ्नागनामा कश्चिन्महापण्डित आसीदिति किंवदन्ती प्रवर्तते।

'दिङ्नागानां पथि परिहरन् स्थूलहस्तावलेपान्' (मेघदूते)

इति कालिदासोक्त्या संवदति च। दिङ्नागस्तु बौद्ध आसीदिति अष्टसाहस्रीपरिमितप्रज्ञापारमिताटीकायामुपलभ्यते। उद्योतकराचार्येण तन्मतखण्डनार्थमेव न्यायभाष्यस्योपरि वार्तिकं निर्मितम्। अयं हि न्यायवार्तिकस्यादिमः श्लोकः—

'यदक्षपादः प्रवरो मुनीनां शमाय लोकस्य जगाद शास्त्रम्।
कुतार्किकाध्यान्तनिरासहेतोः करिष्यते तस्य मया निबन्धः॥' इति।

'अथ भगवता अक्षपादेन निःश्रेयसहेतौ शास्त्रे प्रणीते व्युत्पादिते च पक्षिलस्वामिना किमपरमवशिष्यते यदर्थं वार्तिकारम्भ इतिशङ्कां निराचिकीर्षुः सूत्रकारोक्तप्रयोजनानुवादपूर्वकं वार्तिकारम्भप्रयोजनं दर्शयति यदक्षपाद इति। यद्यपि भाष्यकृता कृतव्युत्पादनमेतत्, तथापि दिङ्नागप्रभृतिभिरर्वाचीनैः कुहेतु-

सन्तमसमुत्थापनेनाच्छादितं शास्त्रं न तत्त्वनिर्णयाय पर्याप्तमित्युद्योतकरेण स्वनिबन्धोद्योतेन तदपनीयते इति प्रयोजनवानयमारम्भः' इति न्यायवार्तिकतात्पर्यटीकाकृतो वाचस्पतिमिश्राः ।

न्यायाचार्य इति व्यपदेशभाज उदयनाचार्यस्योदयकर इत्यपि नामान्तरम् । भगवत्पादेन शङ्कराचार्येण बौद्धादौ निराकृते कालवशात्पुनरपि तेषां प्रादुर्भावे जाते उदयनाचार्येण ते निराकृताः । उदयनाचार्यो बौद्धानां पराजयात्परतः कदाचित्पुरुषोत्तमक्षेत्रं गतवान् । तत्र श्रीमन्दिरं प्रविश्य भगवन्मूर्तिं न दृष्टवान् । ततः स्तवादिभिराराध्यापि यदा भगवद्दर्शनं नालभत तदातिनिर्विण्णः

'पुनर्बौद्धे समायाते मदधीना तव स्थितिः

इत्युक्त्वा श्रीमन्दिराद्यदा निर्गन्तुमैच्छत्तदा भगवानपि दर्शनदानेन तमकृतार्थयत् इत्यस्त्यैतिह्यम् । सोऽयमुदयनाचार्यः खण्डनकर्तुर्हर्षमिश्रात् प्राचीनः । अत एव हर्षमिश्रस्य पित्रा श्रीहीरेण सार्धमुदयनाचार्यस्य कान्यकुब्जाधिपतेर्जयन्तचन्द्रस्य सदसि शास्त्रीयविवाद आसीदिति प्रथास्ति ।

---

## यास्कनिरुक्तप्रश्नः ।

### पण्डित वे. वेङ्कटरामशर्मणः ।

अनुमिनुत—

"अतिचिरवाः वेदाः पुराणेभ्यः । अत्र यास्कं शाकपूणिमन्यं वा क्रौष्टुकिं कियद्दूरमनुकूलं पश्यथ । "

प्रश्नोऽयमनितरसाधारणः परिष्कृतप्रियश्च । यदा चाहमनन्तशयनस्थराजकीयसंस्कृतमहापाठशालायां महोपाध्यायभागे अधीती अभूवम् तदा यास्काचार्यस्य निरुक्तग्रन्थः पाठ्यतया क्लृप्तः । तत्र च विषये निर्धारणपरीक्षायां पृष्टोऽयं प्रश्नः अकस्मादद्य स्मृतिपथमारूढः उत्तरस्याऽज्ञाततया नानन्दयति मे मानसम् ।

इह खलु भगवानाचार्यो यास्कः वैदिकान् शब्दान् नामाख्यातोपसर्गरूपेण चतुर्धा विभजन्, विभक्तानां च पदानां निर्वचनरूपेणार्थादिकं वर्णयन्, वर्णितांश्च तानुदाहरणेन समर्थयन्, समर्थितेषु च तेषु पूर्वाचार्याणां नैरुक्तानां मतभेदं प्रकाशयन्, तदुपरि पूर्वपक्षमुद्भावयन्, क्वचित्तान् खण्डयंश्च स्वकीयं निर्वचनसरणिं गमयति ।

स्वपूर्वकालिकांश्चाचार्यानष्टादश नामतो निर्दिशति । तत्र चैकत्र प्रसक्तानुप्रसक्त्या आख्यानविदां मतमुपन्यस्तं दृश्यते । यदि चाख्यानविदः पौराणिका एव भवेयुः तर्ह्यपि न शक्यं वेदपुराणयोः पौर्वापर्यं व्यवस्थापयितुम् । किमुतान्यथा । तस्मादस्य प्रष्टुः कोऽयमभिसन्धिर्नाम इत्यत्र सहृदयाः प्रमाणम् ।

एव लीलाविग्रहेण शयनादिति। तदेवं संक्षेपतश्चतुर्विंशति-तत्त्वानि, तेषां सृष्टिरूपं प्रयोजनं चोक्तम्। तत्र यद् यस्माज् जायते तस्य तद्दापूरणेनैव स्थितिः, ततस्तस्य संहारोऽपि तत्रैव भवति।

यद् यस्माज्जायते तत्त्वं तत् तत्र प्रविलीयते।
लीयन्ते प्रतिलोमानि जायन्ते चोत्तरोत्तरम्॥

इति भारतादिभ्य इति। एते च सृष्टिस्थितिसंहाररूपाः स्थूला एव परिणामाश्चतुर्विंशतितत्त्वानां कूटस्थपुरुषविवेकाय प्रदर्शिताः। (व)

सूक्ष्मा अप्यन्ये प्रतिक्षणपरिणामा एतेषां स्मर्य्यन्ते। तथा।

नित्यदा ह्यङ्गभूतानि भवन्ति न भवन्ति च।
कालेनालक्ष्यवेगेन सूक्ष्मत्वात् तन्न दृश्यते॥ इति।

अतश्च सर्वं जड़वस्तु परमार्थतः सर्वदैवाऽसदुच्यते।

---

(प्रलीयते)॥ इति। नाभ्यादिस्थानभेदतः उत्पत्तिस्तु कल्पभेदेन समाधेया इत्याह,—"कल्पभेदेने"ति। अत्र युक्तिमाह,—"दैनन्दिनप्रलयेष्वे वे"ति। चतुर्विंशतितत्त्वानां सृष्टिकथनमुपसंहरति "तदेवमि"ति। स्थितिमाह,—"तत्र यद् यस्मादि"ति। कारणस्यापूरणेनैव कार्य्यस्य स्थितिर्भवतीत्यर्थः। तदुक्तं योगसूत्रे,—"जात्यन्तरपरिणामः प्रकृत्यापूरादि"ति। प्रलयमाह,—"संहारोऽपीति" यस्मात् कारणाद् यदुत्पद्यते तत्रैव कारणे तल्लीयते इत्यर्थः। तत्र प्रमाणमाह,—"यद् यस्मादि"ति। "प्रतिलोमानि" = विपरीतानि। उत्पत्तिक्रमाद् विपरीत-क्रमेणैव लय इत्यर्थः। चतुर्विंशतितत्त्वानां स्थूलपरिणाममुपसंहरति "एतेचे"ति। (व)

प्रतिक्षणजात सूक्ष्मं परिणाममाह—"सूक्ष्मा अप्यन्ये" इति। "नापरिणम्य क्षण-मप्यवतिष्ठन्ते गुणाः ऋते चितिशक्तेः" इत्यादिसांख्यसिद्धान्तोक्तवाक्यप्रामाण्यात् सिद्धं सर्वेषां प्रतिक्षणपरिणामित्वम्। सर्वेषां भूतभौतिकानां प्रतिक्षणपरिणा-मित्वे स्मृतिवचनं प्रमाणयति,—"नित्यदे"ति "नित्यदा" = सदा। "अङ्ग" = सम्बोधनार्थमव्ययम्। "भवन्ति न भवन्ति च" = उत्पद्यन्ते लीयन्ते च,

ततश्च तस्माद् विरज्यात्मैव परमार्थसत्यो दुःखभीरुभिर्द्रष्टव्यः । तदुक्तमनुगीतायाम्—

अव्यक्तबीजप्रभवो बुद्धिस्कन्धमयो महान् ।
महाहङ्कारविटप इन्द्रियाङ्कुरकोटरः ॥
महाभूतप्रशाखश्च विशेषप्रतिशाखवान् ।
सदापर्णः सदापुष्पः शुभाशुभफलोदयः ॥
आजीवः सर्वभूतानां ब्रह्मवृक्षः सनातनः ।
एतज्ज्ञात्वा च तत्त्वेन ज्ञानेन परमासिना ॥
छित्त्वा चाक्षरतां प्राप्य जहाति मृत्युजन्मनी ॥ (श)

इति श्रीविज्ञानभिक्षुविरचिते सांख्यसारे विवेकप्रतियोगिनां प्रकृत्यादीनां स्वरूपपरिच्छेदः ॥

इति सांख्यसारस्य पूर्वभागः ॥

---

परिणमन्तीत्यर्थः । परिणामे हेतुमाह,—"कालेने"ति । स्थूलदृष्ट्या परिणामाज्ञाने हेतुमाह,—"सूक्ष्मत्वादि"ति ।

एतेन प्रतिक्षणपरिणामित्वेन आत्मभिन्नप्रपञ्चस्यासत्त्वमुच्यते शास्त्रेषु, न तु शशविषाणादिवत् तुच्छत्वेनेति उपपादयति,—"अतश्चे"ति" । "अतः" = सर्वेषां चिद्भिन्नवस्तूनां प्रतिक्षणपरिणामित्वात् । "जड़वस्तु" = चेतनभिन्नं प्रकृत्यादिकम् । "असत्" = कूटस्थनित्यभिन्नं परिणामि । सर्वेषां विषयाणां जड़वस्तूनां परिणामित्वज्ञानेन विषयवैराग्यरूपं फलं जायते इत्याह,—"ततश्चे"ति । "ततश्च" = परमार्थतः सर्ववस्तूनामसत्त्ववचनाच्च । "तस्मात्" = परिणामिनः विषयाद्, जड़वस्तुनः । "विरज्य" = वैराग्यं प्राप्य । विषयवैराग्याद् आत्मज्ञानेच्छा जायते, ततश्च श्रवणाद्यनुष्ठानाद् आत्मसाक्षात्कारो भवति इत्याह,—"आत्मैवे"ति । उक्तवाक्यं प्रमाणयति, = "तदुक्तमनुगीतायामि"ति । अनुगीतावाक्यमाह,—"अव्यक्ते"त्यादि । एतेन प्रकृत्यादीनां बीजस्कन्धादिरूपणेन उच्छेद्यत्वं, ज्ञानस्य असिरूपत्वकल्पनेन तन्नाशकत्वं, जन्ममृत्युनाशेन नित्यमुक्तात्मस्वरूपावस्थितिलक्षणमोक्षात्मकफलञ्च उक्तम । (श)

इति श्रीरमेशचन्द्रदेवशर्मकृते सांख्यसारविवेकप्रदीपे तृतीयः परिच्छेदः ।

# सांख्यसार:

## उत्तरभागे प्रथमपरिच्छेदः ।

अथ शिष्यैः सुखेनैव ग्रहीतुं पद्यमालया । विवेकस्यानुयोग्यात्मा पुरुषाख्यो निरूप्यते ॥ १ ॥ तत्र सामान्यतः सिद्धो जानेऽहमिति धीबलात् । द्रष्टाऽतो नित्यविभ्वादि-धर्मैरेव स साध्यते ॥२॥ भोक्ता नित्यस्तदर्थत्वात् तत्कर्मोत्यादितत्वतः ।

---

पूर्वभागे परमपुरुषार्थभूतमोक्षसाधनाय प्रवृत्तस्य सांख्यशास्त्रस्य प्रमेयजातं संक्षेपेण उक्तम्, तत्र च प्रकृत्यादिभ्यः विवेकेन पुरुषविज्ञानमेव मोक्षसाधनतया अभ्यर्हितमित्यभिहितम् । इदानीं विवेकाख्यभेदज्ञानस्य अनुयोगिनं पुरुषं सुखग्रहाय पद्यमालया निरूपयितुं प्रतिजानीते,—"अथे"ति । "अथ" = सामान्यतः सांख्यशास्त्रप्रमेयकथनानन्तरम् । "विवेकस्य" = भेदज्ञानस्य । "अनुयोगी" = स्वरूपसम्बन्धेन भेदाधिकरणम् । "निरूप्यते" = प्रमाणादिभिः विचार्य्य निर्णीयते ॥ १

अहमितिप्रतीतिविषयतया सामान्यतः आत्मनः प्रत्यक्षप्रमाणसिद्धत्वात् तत्र प्रमाणापेक्षा नास्तीति तस्य नित्यत्वविभुत्वादिधर्मा एव प्रमाणतः साधनीयाः इत्याह,—"तत्रे"ति । "तत्र" = आत्मनिरूपणविषये । "सामान्यतः" = देहाद्य-व्यतिरेकेण अहंरूपेण । "जानेऽहमितिधीबलात्" = अहं जानामीतिमानस-प्रत्यक्षज्ञानबलात्, तादृशज्ञानजनकमानसप्रत्यक्षप्रमाणादित्यर्थः । "द्रष्टा" = ज्ञाता, आत्मा इति यावत् । "सिद्धः" = प्रत्यक्षप्रमाणेन निश्चितः । "अतः" = द्रष्टरि बुद्ध्यादिसाक्षिणि आत्मनि प्रमाणान्तरापेक्षाभावात् । "सः" = द्रष्टा आत्मा । "नित्यविभ्वादिधर्मैः" = नित्यत्वविभुत्वादिधर्मविशिष्टतया । भिक्षुनये आत्मनः विशेषगुणशून्यत्वेन निर्गुणत्वेऽपि सामान्यनित्यत्वादिधर्मस्याङ्गीकारात् तद्वत्तया आत्मसाधनं नानुपपन्नम्, मिश्रादिनये तु आत्मनः नित्यत्वादिकस्य परिणामित्वाद्य-भावरूपतया अभावस्य च अधिकरणात्मकत्वेन तादृशधर्मोपपत्तावपि नात्मनो निर्धर्म्मकत्वहानिः ॥ २

आत्मनो नित्यत्वे प्रमाणं दर्शयति "भोक्ते"ति । भोक्ता नित्य इति प्रतिज्ञा, अत्र हेतुः = "अविशेषतः सर्वेषां महदादिविकाराणां तदर्थत्वादि"ति ।

महदादिविकाराणां सर्वेषामविशेषतः ॥ ३ ॥ अपि चादृष्टसंस्काराधारत्वाद् बीजरूपतः। धीरनादिरतोऽस्याश्च सिद्धा भोक्तुरनादिता ॥ ४ ॥ स्वस्वामिभावानादित्वमृते भोक्तृव्यवस्थितेः। स्वभुक्तवृत्तिसंस्कार-वत्त्वं स्वत्वं तु बुद्धिषु ॥ ५ ॥ स्वाम्यं स्वनिष्ठसंस्कार हेतुवृत्तेश्च भोक्तरि। अतश्च घटते स्वत्व नाशे कैवल्यमात्मनः ॥ ६ ॥

---

"अविशेषतः" = स्थूलसूक्ष्मरूपतः। "तदर्थत्वात्" = भोक्तात्मार्थत्वात्। नित्यपरिणामशीलानां महदादीनां भोक्तृत्वादिति भावः। महदादीनामात्मार्थत्वे प्रमाणमाह,—"तत्कर्मोत्पादितत्वतः" इति = आत्मकर्म्मणा अर्ज्जितत्वादित्यर्थः, यत् यत्कर्म्मार्ज्जितं तत् तदर्थं यथा मत्कर्म्मार्ज्जितशस्यादिकं मदर्थमितिव्याप्तिः ॥ ३

ननु प्रलये महदादिपरिणामाभावेन उक्तप्रमाणात् तद्भोक्तुस्तदानीं सत्त्वं न सिध्यतीति असिद्धमात्मनो नित्यत्वमित्यत आह "अपिचे"ति। प्रलये स्थूलबुद्ध्यादिरूपपरिणामाभावेऽपि अदृष्टसंस्काराधारतया सूक्ष्मात्मिका अनादिः बुद्ध्यादिस्तिष्ठत्येवेति सिद्धं तद्भोक्तुरात्मनोनित्यतेत्यर्थः। "बीजरूपतः" = सूक्ष्मरूपेण। "धीः" = बुद्धिः। "अतः = बुद्धेः बीजरूपेण सत्त्वात्। "अस्याः" = बुद्धेः। "अनादिता" = प्रागभावरहितता नित्यतेति यावत् ॥ ४

भोक्तुरनादित्वं विनापि धियः अनादित्वसम्भवात् कथं ततः आत्मनोऽनादित्वं सिद्ध्यतीत्याह "स्वस्वामिभावे"ति। "स्वस्वामिभावस्य" = स्वत्वस्वामित्वरूपधर्म्मस्य। "अनादित्वं" = नित्यतां। "ऋते" = विना। "भोक्तृव्यवस्थितेः" = भोक्तृत्वव्यवस्थायाः असम्भवात्। नहि बुद्धौ आत्मनिष्ठस्वामितानिरूपितसत्त्वस्य अनिश्चये आत्मनि 'अस्या बुद्धेः अयम् भोक्ता' इत्यादिरूपा व्यवस्था कर्त्तुं शक्या। अतः स्वस्वामिभावस्य नित्यत्वात् भोक्तुः स्वामिनः अनादिता सिद्धेत्यर्थः। बुद्धिषु सत्त्वं लक्षयति "स्वभुक्ते"ति। "स्व" शब्देन बुद्धिः परामृश्यते। स्वभुक्तवृत्तिजन्यसंस्कारवत्त्वं स्वत्वमित्यर्थः ॥ ५

स्वामित्वं लक्षयति—"स्वाम्यमि"ति। "स्व" पदेन भोक्ता पुरुष उच्यते, आत्मनि, स्वप्रतिबिम्बितसंस्कारजनकवृत्तिप्रकाशकत्वं स्वामित्वमित्यर्थः। अत्र प्रकाशकत्वमितिपदाध्याहारेण व्याख्या कार्य्या। कैवल्यसिद्धिमप्यत्रानुकूलयति,—"अतश्चे"ति। "अतः" ॥ पूर्वोक्तरूपस्वस्वामिभावाङ्गीकारात्। "स्वत्वनाशे" =

भोक्तृत्वानादिभावस्य विनाशे हेत्वसम्भवात्। न नाशो भोक्तुरस्तीति भोक्ता नित्यो हि सिद्ध्यति ॥ ७ ॥ जन्यो ज्ञानप्रकाशोऽस्य नित्यत्वे तु न युज्यते। न ह्यप्रकाशे कुत्राऽपि प्रकाशोत्पत्तिरीक्ष्यते ॥ ८ ॥ कार्य्ये प्रकाशाख्यगुणेऽवयवानां हि तद्गुणः। कारणं तेन नानित्यः प्रकाशो नित्यवस्तुनि ॥ ९ ॥ प्रकाशाश्रयसंयोगात् प्रकाशभ्रम इन्धने। आदर्शे चावृतेर्भङ्गात् प्रकाशोत्पत्तिविभ्रमः ॥ १० ॥ तस्मा-

---

विवेकसाक्षात्कारात् बुद्धेः प्रतिलोमपरिणामेन लयात् तद्धर्मसंस्कारादेः विनाशे ॥ ६

अनादेरपि भोक्तुः प्रागभावस्येव विनाशसम्भवात् कैवल्यस्यासिद्धिमाशङ्क्य आत्मनो नाशाभावमुपपादयति,—'भोक्तृत्वे'ति। अनादेः प्रागभावस्य नाशदर्शने सत्यपि अनादिभावस्य नाशहेतोरदर्शनात् तथाभूतस्यात्मनो नाशाशङ्का नास्तीत्येवेत्यर्थः। आत्मनः नित्यत्वोपपादनमुपसंहरति,—"भोक्ते"ति ॥ ७

आत्मनोनित्यज्ञानस्वरूपतां दर्शयितुं नैयायिकादिभिरङ्गीकृतं मनःसंयोगादिजन्यं ज्ञानाख्यजन्यप्रकाशं खण्डयति,—"जन्य" इति। "अस्य"=आत्मनः। नित्यस्य आत्मनः जन्यः प्रकाशो न सम्भवति इत्यर्थः। अत्र हेतुमाह,—"नह्यो"ति। आत्मप्रकाशस्य जन्यत्वे आत्मनः स्वरूपतः अप्रकाशात्मकता अङ्गीकार्य्या तच्चायुक्तं, अप्रकाशस्वरूपे कुत्रापि प्रकाशोत्पत्तेरदर्शनादित्यर्थः ॥ ८

नन्वेवं प्रदीपादौ अनुभूयमानोजन्यप्रकाशः कथमुपपद्यते इत्यतः आह,—"कार्य्ये" इति। तत्र हि दीपप्रकाशो दीपद्रव्येण सहैव जायते, तत्र प्रदीपप्रकाशे दीपावयवानां प्रकाशगुणः कारणं, अनित्यस्य दीपस्य सावयवत्वात् तदवयवगुणानां दीपप्रकाशजनकता उपपद्यते, नित्यस्यात्मनस्तु तथावयवाद्यसम्भवात् न तत्र अनित्यः प्रकाश उत्पत्तुमर्हति इत्यर्थः। "तेन"=नित्ये वस्तुनि अनित्यप्रकाशस्योत्पत्त्यसम्भवेन ॥ ९

ननु अप्रकाशे इन्धने वह्निसंयोगात् प्रकाशस्य उत्पत्तिर्दृश्यते. तत्कथमुच्यते अप्रकाशे प्रकाशस्य उत्पत्तिर्न भवतीति, इत्यत आह,—"प्रकाशाश्रये"ति। प्रकाशाश्रयस्य वह्नेः संयोगाद् इन्धने प्रकाशभ्रमः, नतु इन्धने प्रकाशस्य उत्पत्तिरस्ति, तच्च प्रकाशाश्रयस्य वह्नेरेव प्रकाशः। अप्रकाशे दर्पणादौ प्रकाशोत्पत्तिज्ञानस्यापि भ्रमरूपतां दर्शयति,—"आदर्श" इति। "आदर्श"=दर्पणादौ,

नित्यात्मनो ज्ञानं नित्यं वाच्यं तथा सति । लाघवाज् ज्ञानमेवात्र निराधार: प्रकल्पते ॥ ११ ॥ अनाश्रिततया द्रव्य संयोगादेश्च तन्मतम् । अतो जानेऽह-मित्यादि-बुद्धिरप्युपपद्यते ॥ १२ ॥ पिण्डेऽहन्धीर्हि मूढानां भुवैवाऽनादिदोषत: । सयोगात्तत्र पिण्डे तु ज्ञानवत्त्वमति: प्रमा ॥ १३ ॥ सन्तु वाऽऽधेयताख्यत्व-जन्म-

---

"आवृतिभङ्गात्" = घर्षणादिना आवरणस्य तिरोभावात् । "प्रकाशोत्पत्ति-विभ्रम:" = सत एव प्रकाशस्य यत: अभिव्यक्तिर्भवति अत: प्रकाशोत्पत्तिज्ञानं भ्रम एव ॥ १०

आत्मज्ञानस्य नित्यत्वमुपसंहरति—"तस्मादि"ति । "तस्मात्" = नित्ये अप्रकाशि जन्यप्रकाशस्य असम्भवात् । 'नित्यात्मनोज्ञानमिति' वनस्य वृक्ष इतिवद् अभेदेऽपि भेदविवक्षया षष्ठी । "वाच्यम्" = सिद्धान्ततया अङ्गीकार्य्यम् । उक्तस्य नित्यज्ञानस्य आत्मना अभेदम् उपपादयति,—"तथा सती"ति । "तथा सति" = ज्ञानस्य नित्यत्वे सति । "लाघवात्" = आत्मनि जन्यज्ञानाङ्गीकारे तत्र आत्ममनस्तत्संयोगानां हेतुता कल्पनीया, तदपेक्षया एकस्य नित्यज्ञानस्य कल्पने, कल्पनाया लघुत्वात् । "निराधार:" = निराश्रय: । एतेन आत्माभिन्नस्य ज्ञानस्य नैयायिकादिसम्मतगुणत्वप्रतिषेधेन द्रव्यत्वं सूचितम् ॥ ११

आत्मरूपज्ञानस्य वैशेषिकपरिभाषया गुणकर्म्मरूपतानिरासपूर्वकं द्रव्यत्वं साधयति,—"अनाश्रितताये"ति । "अनाश्रितताया" = अवृत्तित्वेन, असमवेत-तयेति यावत् । तथा, "संयोगादेश्च" = प्रकृत्यादिसंयोगरूपगुणशालित्वाच्च । गुणादयोहि द्रव्याश्रिता:, अगुणाश्च, अत: अनाश्रितत्वात् संयोगादिगुणवत्त्वाच्च आत्मरूपज्ञानं न गुणात्मकं कर्म्मादिरूपं वा, अपितु द्रव्यमेव । एतेन वैशेषिकमतसिद्धं ज्ञानस्य गुणत्वम्, भाट्टमतसिद्धं कर्म्मत्वं च निरस्तम् । ज्ञानात्मनोरभेदे 'अहं जाने' इत्यादिप्रतीतिरपि प्रमाणमित्याह,—"अत:" इति । "अत:" = ज्ञानात्मनोरभेदात् । "जाने" इति कर्त्तृविहिततिङन्तवाच्यवृत्ति-प्रतिविम्बावच्छिन्नेन ज्ञानेन अहमर्थस्य कर्त्तुरात्मन: अभेद: बुध्यते, अहंप्रतीति-सिद्धस्यात्मन: ज्ञानेन भेदे इयं प्रतीतिरनुपपन्ना स्यात्, अतस्तयोरभेद: इत्यर्थ: ॥१२

अहं शब्देन देहेन्द्रियादिसङ्घात एवाभिधीयते 'अहं स्थूल:' इत्यादिप्रत्ययात्,

नाशादिबुद्धयः। श्रोत्रस्य नभसीवाऽर्थज्ञानस्यज्ञानमात्रके ॥ १४ ॥ तस्माल्लाघवतर्केण बाधकाभावतस्तथा। श्रुत्यादिभिश्च नित्यात्मा चिद्रूपेणैव सिद्ध्यति ॥ १५ ॥ तज्ज्ञानं विभु नित्यत्वाद् देहव्यापितयाऽपि च। मध्यत्वे नाशिता हि स्यादणुत्वे-

---

तत्कथम् 'अहं जाने इत्यनेन' ज्ञानात्मनोरभेदः वक्तुं शक्यते इत्याशङ्कायां देहादिपिण्डे अहन्त्वबुद्धेर्भ्रान्तित्वं दर्शयति,—"पिण्डेऽहंधीरि"ति। "मूढानाम्"=अज्ञानाम्। "अनादिदोषतः"=अनादिमिथ्याज्ञानसंस्कारात्। ननु देहादिपिण्डे अहन्त्वप्रतीतिर्भ्रमश्चेत् तत्र जन्यज्ञानवत्त्वप्रत्ययस्य कथं प्रमात्वव्यवहारः इत्यत आह,—"संयोगादि"ति। देहात्मनोः संयोगात् देहे जन्यज्ञानवत्ताप्रतीतेः प्रमात्वव्यवहारः इत्यर्थः॥ १३

तादृशात्मसंयोगेन ज्ञानवत्ताप्रमायाः प्रमाणासिद्धत्वं शङ्कमानान् प्रति ज्ञानस्य अनाधेयनित्यविभुस्वरूपत्वेऽपि प्रकारान्तरेण घटादिज्ञानानाम् आधेयत्वादिकमुपपादयति,—'तत्तु वेति"। यथा—नभसः नित्यत्वानाधेयत्वेऽपि तदभिन्नस्य कर्णशष्कुल्याद्यवच्छिन्नस्य श्रोत्रस्य 'देहे श्रोत्रं वर्त्तते' 'क्षुद्रमिदं श्रोत्रम्' 'श्रोत्रं जायते' 'श्रोत्रं नश्यति' इत्यादिरूपा आधेयतादिविशिष्टबुद्धिविषयता भवति, एवं ज्ञानस्य नित्यविभुत्वेऽपि तस्मिन् घटाद्याकारवृत्त्यवच्छेदात् घटादिविषयस्य 'घटं जानामि' 'घटज्ञानं जातं' 'घटज्ञानं नष्टम्' इत्यादिरूपा आधेयताल्पताजन्मनाशादिविशिष्टबुद्धय उपपद्यन्ते इत्यर्थः॥ १४

आत्मनश्चिद्रूपत्वोपपादनमुपसंहरति,—"तस्मादि"ति। "तस्मात्"=उक्तयुक्तिगणात्। "लाघवतर्केण"=आत्मनो जन्यज्ञानाश्रयताकल्पनापेक्षया नित्यज्ञानरूपताकल्पने लाघवात्, तदाश्रिततर्केण। "बाधकाभावतः"=आत्मनः ज्ञानरूपत्वे बाधकप्रमाणाभावात्। श्रुतिस्मृतयोऽप्यत्रानुकूला इत्याह,—"श्रुत्यादिभिरि"ति। "सत्यं ज्ञानमनन्तं ब्रह्म" "प्रज्ञानं ब्रह्म—" इत्याद्यसंख्याः श्रुतयः, तथा "ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः। तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितमि"त्यादयः स्मृतयः प्रमाणत्वेन ग्राह्याः॥१५

आत्मरूपज्ञानस्य विभुत्वमुपपादयति,—"तज्ज्ञानमि"ति। "तज्ज्ञानं"=आत्मरूपं ज्ञानम्। "विभु"=सर्वमूर्त्तसंयोगि। अत्र हेतुः,—"नित्यत्वादि"त्यादि=व्यापकत्वे सति नित्यत्वादित्यर्थः। देहादिव्यापितयेति विशेषणाभावे परमाणौ

वाऽल्पदेशता ॥ १६ ॥ विभुत्वेऽपि स्वधीवृत्तेरेव साक्षान्निरीक्षणात्। न सर्वत्र सदा सर्व-भानं ज्ञाने प्रसज्यते ॥ १७ ॥ अर्थभानं चितावर्थ-प्रतिबिम्बो मतो बुधैः। वृत्तेरेव चितौ साक्षात् प्रतिबिम्बनयोग्यता ॥ १८ ॥ अतोऽसङ्गेऽपि कूटस्थ-चैतन्ये विभुनि ध्रुवे। वृत्तिद्वारकमेवास्य भानं फलबलान्मतम् ॥१९॥ अन्वयव्यतिरेकाभ्यां

---

व्यभिचारः स्यादतः उक्तं "देहव्यापितयापि चे"ति। मध्यपरिमाणत्वेऽणुपरिमाणत्वे वा बाधकमाह,—"मध्यत्वे" इति। मध्यपरिमाणत्वे सावयवतया विनाशित्वम्, अणुपरिमाणत्वे च 'शिरसि मे वेदना पादे मे सुखमि'त्यादिरूपसकलशरीरव्यापिबोधः न स्यादित्यर्थः ॥ १६

ज्ञानात्मकस्य आत्मनो विभुत्वे तत्र सदा सर्व्वत्र सकलवस्तूनां भानं कथं नस्यादित्यत आह,—"विभुत्वेऽपी"ति। "स्वधीवृत्तेः" = आत्मस्वत्वविशिष्टबुद्धिवृत्तेः। "साक्षात् निरीक्षणात्" = द्वारान्तरम् अनन्तर्भाव्य औदासीन्येन प्रतिबिम्बरूपेण ग्रहणात्। एतदुक्तं भवति —आत्मनः सर्व्वमूर्त्तसंयोगित्वेऽपि तादृशः संयोगो न वस्तुभानप्रयोजकः, सर्व्वत्र तमोगुणावरणस्य विद्यमानत्वात्, यस्य तु अर्थस्य बुद्धिवृत्तिद्वारेण साक्षाद् वा आत्मनि प्रतिबिम्बनं तत्रैव तमसामावरणस्य भङ्गात् प्रकाशोत्पत्तिरतो न सदा सर्व्वत्र प्रकाशापत्तिः ॥ १७

स्वबुद्धिवृत्तेः साक्षादीक्षणद्वारेण वाह्यार्थानां कुत्रचित् कादाचित्कं भानमुक्तम्, तत्र हेतुप्रदर्शनार्थम् अर्थभानं निरूप्यते,—"अर्थभानमिति"। वृत्तिं विना प्रतिबिम्बस्यासम्भावनामाह,—"वृत्तेरेवे"ति ॥ १८

अर्थभानस्य वृत्तिद्वारकत्वमेव प्रदर्शयति,—"अत"इति। "अतः" = चैतन्ये बुद्धिवृत्तेरेव साक्षात् प्रतिबिम्बनयोग्यत्वात्। आत्मनः वृत्त्यभावे हेतुः—"कूटस्थे"ति = कूटवत् परिणामरहिते इत्यर्थः। कादाचित्कप्रकाशाभावे हेतुः—"विभुनि" इति। "फलबलात्" = कदाचित् कुत्रचित् अर्थप्रकाशरूपफलदर्शनादित्यर्थः ॥१९

आत्मनः कूटस्थत्वं प्रतिपादयितुं नैयायिकादीनामात्मधर्मत्वेनाभिमताः कामादयः बुद्धेरेवेति प्रतिपादयति,—"अन्वयव्यतिरेकाभ्यामि"ति। तत्सत्त्वे तत्सत्त्वमन्वयः, तदसत्त्वे तदसत्त्वं व्यतिरेकः, बुद्धिवृत्तिसत्त्वे जाग्रदादौ कामादिदर्शनात् तदसत्त्वे च समाधिसुषुप्त्यादौ तदभावात्, कामादयो बुद्धिवृत्तिजन्याः,

हानिकल्पतयाऽखिलः । बुद्ध्यैकाधिकरण्येन कामादिर्धीषु नात्मसु ॥ २० ॥ अतोऽन्तःस्थविकाराणां स्वस्वबुद्धिव्यवस्थितेः । कूटस्थ एव सर्वोऽपि चिदाकाशगणः समः ॥ २१ ॥ नित्यशुद्धो नित्यबुद्धो नित्यमुक्तो निरञ्जनः । स्वप्रकाशो निराधारः प्रदीपः सर्ववस्तुषु ॥ २२ ॥ नन्वेवमेकतैवाऽस्तु लाघवादात्मनां खवत् । धीष्वेव सुखदुःखादि-वैधर्म्यादिति चेन्न तत् ॥ २३ ॥ भोगाभोगादिवैधर्म्यैकरूपेऽपि-

---

अतः बुद्धिहृत्त्या सामानाधिकरण्यानुभवाच्च कामादिधर्म्माः बुद्धेरेव, न तु आत्मनः, सुषुप्त्यादौ आत्मनोऽनुवृत्तावपि तेषां व्यतिरेकात् । "धीषु" = बुद्धिषु । कामादिरित्यादिशब्देन कामः, संकल्पः, विचिकित्सा, इच्छा, अनिच्छा, ह्रीः, धीः भीः इत्यादयः बुद्धिधर्म्माः संगृहीताः ॥ २०

आत्मनः कूटस्थत्वमुपपादयति,—"अत"इति । "अतः" = कामादीनामन्तःकरणधर्म्मत्वात् । "अन्तःस्थविकाराणां" = बुद्धिपरिणामरूपकामसंकल्पादीनाम् । "समः" = विरुद्धधर्म्माभाववान् । कामादिविकाराणाम् अन्तःकरणनिष्ठत्वाद् आत्मनः अविकारितया कूटस्थत्वमित्यर्थः ॥ २१

नित्यशुद्धत्वादिकमात्मस्वरूपम् उपसंहरति "नित्ये"ति । "नित्यशुद्धः" = गुणासङ्गी, "नित्यबुद्धः" = नित्यचैतन्यात्मकः, "नित्यमुक्तः" = नित्यनिर्दुःखः, "निरञ्जनः" = अविद्यादिमलशून्यः, "स्वप्रकाशः" = अन्यानपेक्षप्रकाशरूपः, "निराधारः" = स्वव्यतिरिक्ताधारशून्यः, 'स्वमहिम्नि प्रतिष्ठितः' इति श्रुतेः । "प्रदीपः सर्ववस्तुषु" = सकलवस्तुभासकः ॥ २२

अद्वैतवादसम्मितम् आत्मैकत्वमाशङ्कते, "नन्वि"ति । "एवं" = आत्मभेदकतयाभिमतसुखदुःखादिविरुद्धधर्म्माणां बुद्धिनिष्ठत्वेन आत्मनि अवर्त्तमानतया तेषाम् उपाधिधर्म्मत्वेन आत्मभेदासाधकत्वे सति । "खवत्" = आकाशवत् । यथा घटपटाद्युपाधिभेदेऽपि नाकाशस्य नानात्वमेवं बुद्धिधर्म्मसुखादिभेदेऽपि नात्मना नानात्वं भवितुमर्हति । एकत्वाङ्गीकारे लाघवमपि भवतीत्याह,—"लाघवादि"ति । अद्वैतमतं निषेधति,—"न तदि"ति = आत्मैकत्वं न युक्तमित्यर्थः ॥ २३

सिद्धान्ती आत्मभेदसिद्धौ हेतुमाह "भोगाभोगादीति" । "चिद्गणे" =

चिद्‌गणे। श्रुतिस्मृतिभ्यामुक्तेन भेदसिद्धेः परस्परम् ॥२४॥ सुखादिप्रतिबिम्बात्मा भोगोऽप्यस्य न वस्तुतः। तथाऽप्यस्य चितौ भावाभावौ स्यातां हि भेदकौ ॥२५॥ औपाधिकौ यथा श्याम-रागौ स्फटिकभेदकौ। खदृष्टान्तस्य विषमो वैधर्म्याश्रितोऽम्बरे ॥ २६ ॥

इति श्रीविज्ञानभिक्षुविरचिते सांख्यसारे पुरुषस्वरूपपरिच्छेदः।

---

आत्मसमूहे। "एकरूपे" =तुल्यरूपे सत्यपि। "श्रुति-स्मृतिभ्यामुक्तेन" ='अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' 'तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति' 'आत्मानं द्विविधं प्राहुः परापरविभेदतः। परस्तु निर्गुणः प्रोक्तो ह्यहंकारयुतोऽपरः॥' इत्यादिश्रुतिस्मृत्युक्तेन भोगाभोगादिवैधर्म्येण आत्मनां परस्परभेदसिद्धेः तदेकत्वं न युक्तमित्यर्थः। एतद्विस्तरस्तु "जन्मादिव्यवस्थातः पुरुषबहुत्वमि"त्यादिसांख्यसूत्रभाष्यादौ द्रष्टव्यः ॥ २४

बुद्धिपरिणामात्मकस्य सुखदुःखादिरूपभोगस्य वस्तुतः बुद्धिनिष्ठत्वेन आत्मनि तद्भोगस्य प्रतिबिम्बात्मकतया न ततः आत्मभेदः सम्भवति इत्याशङ्कते,—"सुखादी"ति। "अस्य" =आत्मनः, "न वस्तुतः" =आत्मनि न स्वरूपतः सन्। प्रतिबिम्बरूपभोगादीनां सत्त्वासत्त्वमेव भेदकमङ्गीकरोति,—"तथापीति"। "तथापि" = भोगस्य प्रतिबिम्बरूपत्वेऽपि ॥ २५

औपाधिकधर्म्माणामपि भेदकत्वे दृष्टान्तमाह,—"औपाधिकाविति"। यथा जवानीलोत्पलादिसान्निध्यात् शुभ्रस्फटिकयोः प्रतिबिम्बभूते लौहित्यं श्यामत्वं च तयोः भेदके तद्वदित्यर्थः। आकाशदृष्टान्तं विघटयति,—"खदृष्टान्तस्ये"ति। आकाशे वैधर्म्याभावात् न तद्भेदः इत्यर्थः ॥ २६

इति श्रीरमेशचन्द्रदेवशर्म्मकृते सांख्यसारविवेकप्रदीपे
उत्तरभागे प्रथमः परिच्छेदः।

---

# सांख्यसार:

## अथ: द्वितीय: परिच्छेद: ।

अथात्मानात्मवैधर्म्यं गुणदोषात्मके तयो: । वक्ष्ये विस्तरतो येन विवेकोऽतिस्फुटोभवेत् ॥ १ ॥ सामान्यात्मघनाकाशे सान्निध्येरितशक्तिभि: । जायते लीयते भूत्वा भूयोऽयं जगदम्बुद: ॥ २ ॥ त्रिगुणात्मकशक्तीनां परिणामैरतस्थिति: । आधारविधया विश्वोपादानमविकारत: ॥ ३ ॥ यथाऽऽधारतया तोयं धरोपादानमिष्यते । स्वस्थपार्थिवतन्मात्र-द्वारेणैवं चितिर्मता ॥ ४ ॥ अतो जगदुपादानमपि

---

पूर्व्वाध्याये पुरुषस्वरूपमुक्तम्,—इदानीं विवेकस्फुटीकरणाय आत्मानात्मवैधर्म्यं विस्तरत: प्रतिपादयितुं प्रतिजानीते—"अथे"ति । आत्मधर्म्मा: गुणात्मकतया उपादेया:, अनात्मधर्म्मा दोषात्मकतया हेया: । "तयो:" = आत्मानात्मनो: ।१

चैतन्यसमष्टिरूपात्माकाशे जगद्रूपमेघस्य प्रकृतिपुरुषसंयोगजन्यशक्त्या पुन:-पुनराविर्भावतिरोभावावाह,—"सामान्यात्मे"ति । २

आत्मन: अधिष्ठानोपादानकारणतामाह,—"त्रिगुणात्मके"ति । "अत:" = आत्माकाशे जगत: आविर्भाव-तिरोभावाभ्याम् । "त्रिगुणात्मकशक्तीनां परिणामै:" = सत्त्वरजस्तमोगुणात्मकप्रधानस्य परिणामै: । एतेन आत्मन: अपरिणामित्वमुक्तम् । "अविकारत:" = आत्मन: कूटस्थतया स्वत: विकाराभावात् । "आधारविधया" = अधिष्ठानरूपत:, आश्रयदानद्वारेणेत्यर्थ: । "विश्वोपादानम्" = अधिष्ठानतया जगत: उपादानकारणम् । प्रधानं तु परिणामितया कारणम् । ३

अधिष्ठानरूपोपादानकारणत्वे दृष्टान्तमाह,—"यथे"ति । यथा स्वस्मिन् स्थितानां पार्थिवतन्मात्राणां धारणद्वारा जलस्य पृथिव्युपादानत्वम् एवं पुरुषस्य जगदुपादानत्वमित्यर्थ: । ४

आत्मन उपादानकारणत्वे घटाद्युपादानमृदादिवद् विकारित्वं प्राप्तम् इत्या-

ब्रह्माऽविकारतः । कूटस्थनित्यपर्य्याय-परमार्थसदुच्यते ॥ ५ ॥ स्वार्थत्वात् स्वानुभूत्या च सिद्धत्वात् परमार्थसत् । स्वतः स्थित्या स्वतः सिद्ध्या लोकैः सन्निति-होर्य्यते ॥ ६ ॥ प्रतिक्षणविकारिण तैस्तैरूपैरपायतः । प्रकृत्यादिरसत् सर्वो जड़ार्थोऽब्धौ तरङ्गवत् ॥ ७ ॥ यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै । परिणामादिसम्भूतां तद्वस्त्वित्यादिकस्मृतिः ॥ ८ ॥ परार्थाधीनसत्त्वाच्च परदृष्ट्या

---

शङ्क्य अविकारिण अधिष्ठानत्वेनास्य अपरिणामित्वरूपं परमार्थसत्त्वमुपपादयति,—"अत" इति । "अतः=आत्मनोऽधिष्ठानमात्रत्वात् । "जगदुपादानमपि"=इत्यनेन विकारसम्भावना उक्ता । "कूटस्थे"त्यादिना आत्मनोऽविकारित्वरूपं पारमार्थिकसत्त्वमुक्तम्, न तु अद्वैतिनामिव भ्रमाधिष्ठानत्वमिति तात्पर्य्यम् । ५

आत्मनः परमार्थसत्त्वमुपपादति,—"स्वार्थत्वादि"ति । "स्वार्थत्वात्"=अनन्यशेषत्वात् । स्वानुभूत्या सिद्धत्वात्"=स्वातिरिक्तज्ञानान्तराविषयत्वेन स्वयंप्रकाशत्वेन सिद्धत्वात् । "स्वतः स्थित्या"= स्वस्थितौ अधिकरणाद्यपेक्षाविरहात् । 'स्वतः सिद्ध्या"=स्वसिद्धौ प्रमाणान्तरापेक्षाविरहात् । "ईर्य्यते"=कथ्यते । ६

आत्मनः परमार्थसत्त्वमुपपाद्य प्रकृत्यादीनां परिणामित्वरूपमसत्त्वमुपपादयति,—"प्रतिक्षणविकारिणे"ति । "चलस्वभावा हि गुणाः""सर्व्वे भावाः प्रतिक्षणपरिणामिनः ऋते चितिशक्ते"रिति च सांख्यसिद्धान्ताद् आत्मभिन्नस्य सर्वस्य वस्तुजातस्य प्रतिक्षणमन्यथाभावाद् असत्त्वम्, नतु अद्वैतिनामिव मिथ्यात्वमित्यर्थः अत्र दृष्टान्तः,—"अब्धौ तरङ्गवदि"ति ।

असत्त्वशब्दस्य अद्वैतिसम्मतमिथ्यात्वरूपार्थस्य परित्यागेन परिणामित्वरूपार्थस्वीकारे विष्णुपुराणादिवाक्यं प्रमाणयति,—"यत्त्वि"ति । "तद्वस्तु नृप तच्च किम्" इति श्लोकस्य तुर्य्यः पादः । यद् वस्तु कदाचिदपि परिणामेन अन्यथात्वं न गच्छति तदेव वस्तु परमार्थसत्, आत्मव्यतिरिक्तं तादृशं अपरिणामिवस्तु नास्ति, अतएव तथा परिणामिनः प्रधानादेः वस्तुजातस्य असत्त्वमित्यर्थः । ८

प्रधानादीनां परिणामित्वरूपमसत्त्वमुपपादयति,—"परार्थाधीने"ति । "परार्थाधीनसत्त्वात्"=परस्य स्वभिन्नस्य आत्मनः, अर्थस्य=भोगापवर्गलक्षणप्रयोजनस्य, अधीनं=प्रयोज्यं सत्त्वं यस्य तस्य भावः,तत्त्वात् । आत्मार्थत्वात् प्रधानादीनां तदर्था-

च सिद्धितः । परतः सन्नसन्नेव तत्परापेक्षया मतः ॥ ९ ॥ सतोऽस्तित्वं तु नासत्ता नास्तित्वे सत्यता कुतः । इति गारुड़तश्चैवं सदसत्त्वव्यवस्थितिः ॥ १० ॥ अतो न सन्नाऽसदिदं जगत् सदसदात्मकम् । असद्विषयकत्वाच्च तस्य धीस्तात्त्विको भ्रमः ॥ ११ ॥ जगद्वृत्तस्य चैतन्य सारोऽसारस्तथेतरत् । प्रपञ्चस्य स्थिरांशो

---

धीनसत्त्व, ततश्च स्वतः असत्त्वमित्यर्थः । असत्त्वे अपरं हेतुमाह,—"परदृष्ट्ये"ति । परदृष्ट्या सिद्धितः"=प्रधानादीनां स्वतः जड़त्वेन पौरुषेयज्ञानेनैव तेषां निश्चयादित्यर्थः । अपरमपि हेतुमाह,—"परापेक्षये"ति । आत्माश्रयेण अवस्थितेश्चेत्यर्थः "परतः सन्"=पराधीनसत्त्वेन स्वाधीनसत्त्वविरहितः, प्रधानादिरिति शेषः ; "तत्"=प्रधानादिकं, सामान्यतः क्लीवत्वम् । "मतः" इत्यनेनास्यार्थस्य पूर्वाचार्य्यसम्मतत्वं दर्शितम् । ९

इममर्थं पुराणवाक्यतः प्रमाणयति—"सतोऽस्तित्वमि"ति ।"सतः"=आत्मनः, "अस्तित्वं"=अपरिणामित्वरूपसत्त्वं वर्त्तते इति शेषः, "नासत्ता"=नतु परिणामरूपासत्त्वम् । अत्र हेतुः,—"नास्तित्वे" इति । "नास्तित्वे"=अन्यथाभावे, परिणामे इति यावत् । "सत्यता कुतः"=सदसतोर्विरोधात् सत्यता न सम्भवतीत्यर्थः । "गारुड़तः"=गरुड़पुराणवाक्यात् । "एवं"=परिणामित्वापरिणामित्वादिरूपेण । "सदसत्त्वव्यवस्थितिः"=आत्मा सन्, प्रधानादिकमसत् इति निश्चयात् । १०

अद्वैतिनामभिमतं जगतः सदसद्भ्यामनिर्वचनीयत्वमन्यथा उपपादयति= "अतः" इति । "अतः"=परिणामितया कूटस्थनित्यतारूपपारमार्थिकसत्त्वविरहात्, तथा अस्तिताश्रयतया सत्त्वात् जगतः । "न सत्"=कूटस्थनित्यताविरहात् तादृशसत्ताभाववत् । "नासत्"=अस्तिताश्रयणात् परिणामिसत्तावत् । सदसदात्मकम्"=परिणामिसत्तावत् पारमार्थिकसत्ताभाववच्च । जगद्विषयकज्ञानस्य भ्रमत्वमुपपादयति "असद्विषयकत्वाच्चे"ति =जगद्विषयकज्ञानस्य अनित्यविषयकत्वेन पारमार्थिकसद्विषयकत्वाभावात् मिथ्यात्वमित्यर्थः । ११

चैतन्यात्मकस्य आत्मनः उपादानाय उत्कर्षं वक्तुं चेतनाचेतनात्मकं जगत् वृत्त-

हि चितिरेवाऽविकारतः ॥ १२ ॥ तदन्यदखिलं तुच्छमसारत्वादुदीर्य्यते। तथाऽनृतमसच्चापि तदपेक्षास्थिरत्वतः ॥ १३ ॥ एवं विधैवात्मसत्ता अन्यासत्ता च दर्शिता। वाशिष्ठादौ विस्तरतो यथा लेशात्तदुच्यते ॥ १४ ॥ स्वप्नो जाग्रत्यसद्रूपः स्वप्ने जाग्रदसद्वपुः। मृतिर्जन्मन्यसद्रूपा मृतौ जन्माऽप्यसन्मयम् ॥१५॥ जगन्मयी भ्रान्तिरिति न कदाचन विद्यते। विद्यते तु कदाचिच्च जलबुद्बुदवत् स्थितम् ॥ १६ ॥ आत्मैवास्ति परं सत्यं नाऽन्याः संसारदृष्टयः। शुक्तिकारजतं यद्वद् यथा मरुमरीचिका ॥ १७ ॥ अस्ति सर्वगतं शान्तं परमात्मघनं शुचि। अचिन्त्यचिन्मात्रवपुः परमाकाशमाततम् ॥ १८ ॥ तत् सर्वगं सर्वशक्ति सर्वं

---

त्वेन निरूप्य तत्र चैतन्यस्य स्थिरत्वेन सारत्वं, अचेतनस्य च क्षयित्वेन असारत्वमाह—"जगद्वृत्तस्ये"ति। चैतन्यस्य सारत्वे हेतुः,—"प्रपञ्चस्ये"ति। १२

प्रकृत्यादीनां तुच्छत्वमाह,—"तदन्यदि"ति।"तदन्यत्" =आत्मभिन्नम्। एवम् अनृतत्वम् असत्त्वं च उपपादयति,—"तथे"ति। अत्र हेतुः,—"तदपेक्षये"ति। १३

वाशिष्ठादौ उक्तयोः आत्मानात्मनोः सत्त्वासत्त्वयोरप्येवमेवाभिप्रायः इत्याह,—एवंविधैवेति। "एवंविधा" =स्थिरत्वास्थिरत्वादिरूपा, स्थिरत्वरूपा आत्मसत्ता, अस्थिरत्वरूपा अन्याऽसत्ता। नतु अद्वैतिनामभिमतबाधाबाधादिरूपेत्यर्थः। १४

इतः पञ्चविंशश्लोकं यावत् वाशिष्ठवाक्यं संक्षेपादुदाक्रियते,—"स्वप्न" इति। अत्र असत्त्वं न बाधितत्वं अपि तु अन्यथाभावः। स्वाप्नपदार्थां जाग्रति न भासन्ते, तथा—जाग्रत्पदार्था अपि स्वप्ने न भासन्ते, अतः उभयोः परस्परकालासत्त्वम् अविशिष्टम्, इत्यतः उभयोरपि असत्त्वम्, एवं जन्ममरणयोरपि बोध्यम्। १५

जगतः क्षणिकतया तत्र स्थिरताबुद्धिरूपभ्रान्तिरनादिकालप्रवृत्तत्वमाह,—"जगन्मयी"ति। जगतः स्थिरत्वमेवास्तु इत्यतः आह,—"विद्यते" इति। गुणानां चलस्वभावत्वेन जलबुद्बुदवद् अस्थिरत्वमेव जगतः तत्त्वम्, नचास्य स्थितिर्विद्यते, इत्यर्थः। १६

आत्मनः एव परमार्थसत्त्वं तदन्यस्य शुक्तिकारजतादिवदस्थिरत्वमाह—"आत्मैवे"ति। १७

आत्मनः सदा सर्वत्र सत्त्वमाह,—"अस्ती"ति। "आततम्" =व्यापकम् ॥ १८

सर्वात्मकं स्वयम् । यत्र यत्र यथोदेति तथाऽऽस्ते तत्र तत्र वै ॥ १९ ॥ आविर्भावतिरोभावमयास्त्रिभुवनोर्मयः । स्फुरन्त्यतितते यस्मिन् मराविव मरीचयः ॥ २० ॥ सतीवाऽप्यसती ताप-नद्येव लहरी चला । मनसेवेन्द्रजालश्रीर्जागती प्रवितन्यते ॥ २१ ॥ ब्रह्मणा तन्यते विश्वं मनसैव स्वयम्भुवा । मनोमयमतो विश्वं यन्नाम परिदृश्यते ॥ २२ ॥ योऽह्यज्ञमतिर्मूढोरूढो न वितते पदे । वज्रसारमिदं तस्य जगदस्त्यसदेव सत् ॥ २३ ॥ अव्युत्पन्नस्य कनके कानके कटके यथा कटकज्ञप्तिरेवास्ति न मनागपि हेमधीः ॥ २४ ॥ तथाऽज्ञस्य पुरागारनगनागेन्द्र-

आत्मनः सवगतत्वेऽपि चैतन्यस्य सर्वत्रोपलब्धेरभावम् उपपादयितुमाह,—"तत्सर्वगमि"ति । आत्मनः सर्वगत्वेऽपि बुद्धौ प्रतिविम्बोदये एव चैतन्योपलब्धिर्नान्यत्रेत्यर्थः । १९

तस्मिन् आत्मनि अधिष्ठाने सागरे ऊर्मीणामिव मरौ मरीचिजलानामिव च, प्रधानादीनाम् आविर्भावतिरोभावावाह "आविर्भावे"ति । "अतितते"= सर्वव्यापिनि विभौ आत्मनि ॥ २०

यदि जगतः सत्त्वं नास्ति तदा कथं सतीव भाति तत्राह,—"सतीवे"ति । "तापो" =मरुमरीचिः, तत्र कल्पितनद्याः चला लहरीव (नद्येवेति सन्धिरार्षः) । इह=ब्रह्मणि, जागती इन्द्रजालश्रीः असत्यपि सतीव मनसा "प्रवितन्यते" = प्रकाश्यते । सदा परिणामितया असती अपि अविद्यया सदातनत्वेन प्रतीयते इत्यर्थः ॥ २१

स्वयम्भुवः ब्रह्मणः संकल्पात् जगदुत्पत्तेस्तस्य मनोमयत्वमाह,—"ब्रह्मणे"ति । सङ्कल्पोऽत्र प्रकृतेः पुरुषसंयोगेन परिणामोन्मुखता । अनादिवासनावशतः प्रकृतितादात्म्यापन्नत्वाद् असौ ब्रह्मा इति व्यपदिश्यते ॥ २२

अनात्मज्ञस्य जगतः स्थिरताभ्रान्तिः दृढा भवतीत्याह,—"य"इति । "वितते पदे" =ब्रह्मणि, आत्मनि इति यावत् । "वज्रसारं" =स्थिरम् । "असदेव सत्" =परिणामित्वेन परमार्थतः असदपि सद्रूपमित्यर्थः ॥ २३

कारणस्वरूपमविजानतः पुरुषस्य यथा कार्य्यज्ञानमेव भवति नतु कारणविज्ञानमेवं अधिष्ठानकारणमात्मचैतन्यमविदुषः परिणामभूत-कार्य्यज्ञानमेव भवतीत्याह,—"अव्युत्पन्नस्ये"ति श्लोकद्वयेन । "कनके" =कारणभूतसुवर्णे । "अव्युत्पन्नस्य" =अज्ञस्य । "कानके कटके" =कनकनिर्मिते कटके । "कटकज्ञप्तिः" =कार्य्यभूतकटकज्ञानं, "न मनागपि हेमधीः" = न ईषदपि कारणभूतसुवर्णज्ञानम् ॥ २४

दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह,—"तथेति" । "अज्ञस्य" = अधिष्ठानकारण-

भासुरा इयं दृश्यदृगेवास्ति न त्वन्या परमार्थदृक् ॥ २५ ॥ इत्यातिवाक्यैर्वाशिष्ठे नात्यन्तासत्यतोदिता । जगतोऽपरवाक्यैर्हि सत्कार्य्यं प्राकृतं मतम् ॥ २६ ॥ नामरूपविनिर्मुक्तं यस्मिन् सन्तिष्ठते जगत् । तमाहुः प्रकृतिं केचिन्मायामेकेऽपरे त्वणून् ॥ २७ ॥ सुषुप्तावस्थया चक्रपद्मरेखा शिलोदरे । यथा स्थिता चितेरन्तस्तथेयं जगदावली ॥ २८ ॥ प्रकृतिव्रततिर्व्योम्नि जाता ब्रह्माण्डसत्फला । इत्यादिवाक्यैः साङ्ख्रीयसत्कार्य्याद्युपवर्णनात् ॥ २९ ॥

इति श्रीविज्ञानभिक्षुविरचिते सांख्यसारे आत्मानात्मनोः सत्यत्वासत्यत्ववैधर्म्म्यपरिच्छेदः ।

---

भूतचैतन्यसामान्यमविजानतः । "दृश्यदृक्" = परिणामिदृश्यपदार्थज्ञानम् । "परमार्थदृक्" = यथार्थात्मस्वरूपज्ञानम् ॥ २५

ननु एषु वाशिष्ठवाक्येषु—जगतः ब्रह्मविवर्त्तत्वमुक्त्वा स्वप्नशुक्तिरजतमरुमरीचिकादिदृष्टान्तेन जगतः अत्यन्तमिथ्यात्वमेवोक्तम्, तत्कथमेतानि वाक्यानि जगतः परिणामरूपमिथ्यात्वसाधकतया उपन्यस्यन्ते इत्याशङ्क्य एषां वाक्यानां त्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वं नार्थः अपितु, वाशिष्ठोक्तवाक्यान्तरैरेकवाक्यतया प्रकृतिपरिणामित्वरूपासत्वमेवार्थं इत्याह,—"इत्यादिवाक्यैरि"ति "अत्यन्तासत्यता" = त्रैकालिकनिषेध प्रतियोगिता ।"अपरवाक्यै" = अग्रतः समुद्धृतैः "नामरूपे"त्यादिवाक्यैः । "प्राकृतं" = प्रकृतिपरिणामभूतम् । "सत्कार्य्यम्" = कारणेषु सूक्ष्मरूपेण अवस्थितं कार्य्यजातम् ॥ २६

वाशिष्ठवाक्यमुद्धृत्य प्रकृतिपरिणामरूपं जगत्कार्य्यं दर्शयति,—"नामरूपे" ति । नामरूपविनिर्मुक्तं = नामरूपशून्यम्, 'अशब्दमस्पर्शमरूपमि'त्यादिस्मृतेः प्रधानम् । "तस्मिन्" = प्रधाने । "केचित्" = सांख्याः योगाश्च । "एके" = वेदान्तिनः । "अपरे" = वैशेषिकनैयायिकाः ॥ २७

अधिष्ठानभूते आत्मसामान्ये तादात्म्यापन्नं लीनं जगत् दर्शयति,—"सुषुप्तावस्थयेति"ति । "सुषुप्तावस्थया" = टङ्कच्छेदात् प्राग् अनभिव्यक्तया अवस्थया इत्यर्थः ॥ २८

प्रकृतिरूपलतायाः फलात्मकं परिणामिजगत् दर्शयति,—"प्रकृतिव्रततिरि"ति । "इत्यादिवाक्यैः" = योगवाशिष्ठोक्तवचनैः । "साङ्ख्रीयसत्कार्य्याद्युपवर्णनादि"त्यस्य "नात्यन्तासत्यतोक्ते"ति प्राक्तनेन सम्बन्धः ॥ २९

इति श्रीरमेशचन्द्रदेवशर्म्मकृते सांख्यसारविवेकप्रदीपे उत्तरभागे द्वितीयः परिच्छेदः ॥

—*—

## तृतीयोऽङ्कः।

### प्रथमं दृश्यं—समुद्रतीरम्।

( ततः प्रविशन्ति जयदेवः, पद्मावती, पराशरश्च। )

जयदेवः।—योऽसौ सुदूरनिलयोऽपि समीपचारी,—
नालोकितोऽपि नयनेन विलोक्यमानः।
तस्यैव पुण्यनगरीममरालयाभां
धन्यां तदीयकृपया किल प्रापिताः स्मः॥

पराशरः।—अस्माभिरेतदचिरादभिनन्दनीयं
श्रीशे कृपाजलनिधौ तु न चित्रमेतत्।
योऽसौ सदैव दयते निखिलस्य सोऽय-
मस्मानपीह दयते,—वद को विशेषः॥

जयदेवः।—प्रक्षाल्य पादतलमेष विभोर्नगर्य्या
हर्षोत्तरङ्गनिकरैर्गगनं विचुम्बन्।
नृत्यन् मुदा नदति धीरमथाम्बुराशि-
र्भक्तो नु नामविलसन्मधुपानमत्तः।
वायुश्चापि प्रवहति वहन् विष्णुपादाब्जरेणुं
गात्रं स्वर्गादविरलसुधाधारयेवाभिषिञ्चन्।
भास्वत्तापे पिककलरुते नूतनत्वं च कान्ति
स्निग्धं सर्वं किमपि परमं सौख्यमत्रातनोति॥

पराशरः।—श्रीभगवतो महामहिम्नो वसत्या पवित्रीकृतेऽत्र सर्वमेवैतदुपपद्यते।

जयदेवः।—तस्यैव पूजार्थं पुष्पदामेव यत् काव्यं मया प्रारब्धमासीत्, तदपि ह्यो निशायां समाप्तिमगच्छत्। वयमपि पुरुषोत्तमपुरीमायाताः। यद् यथाकालं किल काव्यस्य मे समाप्तिर्जाता। अनेनैव भगवानुपश्लोकयितव्यः!

पराशरः।—अपि समाप्तं गीतगोविन्दम्? तत् सखे! न कथमियच्चिरं कथितं त्वया? अद्य कृत्स्नं ते काव्यं श्रोष्यामि, न श्रावयसि चेत् तदा सज्जो-ऽस्मि कलहाय।

जयदेवः ।—( विहस्य ) अलं सन्नाहेन । अयमहं वाचयामि, निशामय । योऽयमंशो ह्यो निशायां पत्रमारोपितस्तमेव वाचयामि । ( इति पुस्तकमुद्घाट्य ) द्वादशसर्गीयेयं गीतिः । श्रीभगवतो राधिकां प्रत्युक्तिरियम् । आकर्णय । ( इति वाचयति । )

"किशलयशयनतले कुरु कामिनि !
चरणनलिनविनिवेशम् ।
तव पदपल्लव—वैरिपराभव-
मिदमनुभवतु सुवेशम् ॥"

( नेपथ्ये गीयते । )

"किशलयशयनतले कुरु कामिनि !
चरणनलिनविनिवेशम् ।
तव पदपल्लववैरिपराभव-
मिदमनुभवतु सुवेशम् ॥"

जयदेवः ।—अये कथमिदम् ! अहो नु खलु भोः, इतः पूर्वमत्र कस्यापि श्रवणविवरमनुपगतामपि मद्रचितां गीतिकां को नामायं गायति ? तदाश्चर्यमिव मे प्रतिभाति ।

पराशरः । - सखे ! न किमप्याश्चर्यम् । योऽयं श्रुतिधर इति श्रूयते, तादृशः कोऽपि भवेत् । श्रवणमात्रमेव गीतिकां कण्ठे निधाय गायति । तदितःपरमपि वाचय यावदवधारयामि ।

जयदेवः ।—भवत्वेवं क्रियते । ( इति वाचयति । )

"करकमलेन करोमि चरणमह-
मागमितासि विदूरम् ।
क्षणमुपकुरु शयनोपरि मामिव
नूपुरमनुगतिशूरम् ॥"

( ततो गायन् प्रविशति बालकवेशो भगवान् नारायणः । )

"करकमलेन करोमि चरणमह-
मागमितासि विदूरम् ।

क्षणमुपकुरु शयनोपरि मामिव
नूपुर-मनुगतिशूरम् ॥
वदनसुधानिधिगलितममृतमिव
रचय वचनमनुकूलम् ।
विरहमिवापनयामि पयोधर-
रोधकमुरसि दुकूलम् ॥
प्रियपरिरम्भणरभसवलितमिव
पुलकितमतिदुरवापम् ।
मदुरसि कुचकलसं विनिवेशय
शोषय मनसिजतापम् ॥
अधरसुधारसमुपनय भामिनि !
जीवय मृतमिव दासम् ।
त्वयि विनिहितमनसं विरहानल-
दग्धवपुषमविलासम् ॥
शशिमुखि ! मुखरय मणिरसनागुण-
मनुगुणकण्ठनिनादम् ।
श्रुतियुगले पिकरुतविकले मम
शमय चिरादवसादम् ॥
मामतिविफलरुषा विकलीकृत-
मवलोकितुमधुनेदम् ।
लज्जितमिव नयनं तव विरमति
सृजसि वृथा रतिखेदम् ॥
श्रीजयदेवभणितमिदमनुपद-
निगदितमधुरिपुमोदम् ।
जनयतु रसिकजनेषु मनोरम-
रतिरसभावविनोदम् ॥"
( इति निष्क्रान्तः । )

जयदेवः ।—( उद्भ्रान्त इव ) सखे ! नायं श्रुतिधरः,—यः अश्रुतामपि गीतिकां चिराभ्यस्तामिव गायति । विह्वलीभवति मे मनः । तत् किं पुरातनमिदं काव्यम् ? अन्यथा वा कथमयं बालको जानातु ? हा दैव ! किमिदं जातम् ? अहङ्कारी किलाहं पुरातनस्य बालानामपि विदितस्यापि काव्यस्य पुनर्लेखनेन कविमात्मानममन्ये । चूर्णीकृतो दर्पहारिणा मे दर्पः । अविद्यमानापि विद्यमानतामारोपिता मे कवित्वप्रतिभा विलीना किल पुरुषोत्तमसागरसिकतासु । हा हन्त ! हा भगवन् ! मोघश्रमोऽस्मि, अकिञ्चनोऽस्मि ।

पराशरः ।—सखे ! न खलु तथ्यमवधारयितुं शक्नोमि, यदनेनापि "श्रीजयदेवभणित"मित्यादिपदं गीतम् ।

जयदेवः ।—परिहासः—परिहासः । धूर्त्तस्य शठताचतुरस्य नन्दसूनोरेवायं परिहासः । जयदेवनामधारिणो बहवः सन्ति क्षितितले, नायमेक एव मन्दभाग्यः । को नामासौ जयदेवः,—यद्रचिता गीतिका बालकानामपि कण्ठेषु विराजते ? अहो धन्योऽसौ, श्लाघ्योऽसौ । तदलमितःपरं परकीयस्याप्यात्मीयीकृतस्य पुस्तकस्य भारवहनेन । हताशस्य मे दुराशया सहैव, चिराय निमज्जत्वेतत् सागरसलिलेषु । दीर्णं भवतु मे स्फीतं वक्षः । अवनतिं गच्छतु गर्वोच्छ्रितं शिरः । ( इति निक्षिप्य विलोकयन् ) आः शान्तिः शान्तिः शान्तिः ।

पराशरः ।—कथं निक्षिप्तमेव ?

जयदेवः ।—अथ किम् ? इदानीं स्वस्थोऽस्मि । अयमकिञ्चनो जयदेवः पुरुषोत्तममुपसर्पति ।

( आकाशे पठ्यते । )

अकिञ्चनो नासि प्रणीतमेतत्
काव्यं त्वयैवेदमलं विलप्य ।
विष्णुः स्वयं त्वत्कवितात्विमुग्धो
जगावचेता नच बालकोऽसौ ॥

पराशरः ।—श्रुतं सखे ? इत्थं जगत्पतिः स
मयापि दृष्टस्तव साहचर्यात् ।

त्वमेव धन्यो,—न च पारितोऽसौ
त्रातुं,—बलीयान् किल तत्प्रबन्धः ॥

तत्सखे! किमिदमनुष्ठितं त्वया त्वत् काव्यं सहसैव सागरोरसि निक्षिपता? उन्मोच्छितं चिराय गीतगोविन्दस्य नामापि पृथिव्याः ।

जयदेवः ।—सुप्तोऽस्मि? मत्तोऽस्मि? विचेतनोऽस्मि?
कच्चित् पिशाचैरथवास्मि विष्टः?
तथ्या किमेषा गगनस्य वाणी?
काव्यं प्रणष्टं रचितं मया किम्?
अहोबत,—मन्दारमाला मम सा प्रणष्टा
यया विभुं पूजयितुं किलैच्छम् ।
दीनोऽपचित्या उपचारहीनः
कथं त्वया माधव! वञ्चितोऽयम्?

पराशरः ।—स्वयमेव अविचिन्त्यैव कुठारेण मूलमाहत्य किमिति व्याकुलीभवसि?

जयदेवः ।—सखे! अलं भग्नहृदयं मामुपालभ्य । करुणापात्रं किलाहम् ।

पराशरः ।—तत् पर्य्यवस्थापयात्मानम् । श्रूयते किल सागरपतितं वस्तु पुनस्तत्तरङ्गैरेव तीरं नीयत इति । तदपेक्षसे यावन्निरूपयामः ।

जयदेवः ।—रत्नाकरोऽसि जलधे! कमलानिवास
ग्रन्थेन मे वद किमस्ति प्रयोजनं ते ।
प्रत्यर्पयाशु कृपया मम तद्धि रत्नं
नोचेत्तदीयसलिलेऽहमसून् जहामि ॥

पराशर! पराशर!
मत्तोऽयं जलधिः समुन्नततरैर्बाहा तरङ्गैर्महान्
कामीव प्रणयप्रबन्धचतुरो वेलां मुदालिङ्गति ।
कोऽहं का मम प्रार्थनेति वद कः श्रोतात्र भीमोद्यमे
प्राप्तिस्तस्य पुनर्नचास्ति किल भोः सम्भावना काचन ॥

( ततः करेण गीतगोविन्दं गृहीत्वा सलिलादुत्तिष्ठति समुद्रः । )

समुद्रः ।—काव्यं गृहाण विप्रर्षे ! न क्लिन्नं सलिलेन मे ।
यत्नेन रचितञ्चापि कौस्तुभाधिकरत्नवत् ॥
विष्णोरतिप्रियं विद्धि काव्यं विरचितं त्वया ।
धरायाञ्च चिरायैतदमरं त्वां करिष्यति ॥
( जयदेवो गृह्णाति, समुद्रश्चान्तर्द्धत्ते । )

पराशरः ।—सखे ! अलमतःपरं विलम्बेन । स्वेच्छया सागरजले निक्षिप्तमपि काव्यं प्रत्यर्पितं विधिना । तदेहि पुरुषोत्तममेव उपसरामः ।

जयदेवः ।—यथा ते रोचते । नाहं किञ्चन अवधारयामि । तद् गच्छामतः ।

( इति निष्क्रान्ताः सर्वे । )

( ततः कियच्चिरेण प्रविशन्तौ दीर्घशिखचन्द्रचूडौ । )

दीर्घशिखः ।—अनेनैव पथा—नूनमनेनैव पथा ते गतवन्तः । चन्द्रचूड ! त्वरस्व । पुनर्दुर्लभो भविष्यति । त्वरस्व ।

चन्द्रचूडः ।—यथाज्ञापयसि । ( इति निष्क्रान्तौ । )

---

द्वितीयं दृश्यम्—पुरुषोत्तमायतनम् ।

( ततः प्रविशति गृहीतपूजोपकरणो भूदेवः । )

भूदेवः ।—निशावसानसमये दृष्टो मया शोभनः स्वप्नः,—यथा भगवान् पुरुषोत्तमो मां कथयति,—"कश्चन महापुरुषः श्वो मन्मन्दिरमायाता । तादृशः साधुश्चिरमत्र नायातः, न च पुनरचिरादागमिष्यति । मादृश एवासौ मन्तव्य" इति । को नामासौ भवेत् ? बहवो यात्रिकाः समागच्छन्ति, तेषु कथं वासौ निश्चेतुं शक्यः ? भवतु, पुरुषोत्तम एव निश्चयं जनयिष्यति । तन्नूनं भविष्यति साफल्यमद्य नयनयोः । ( इति श्रीमन्दिरद्वारमुद्घाट्य पूजोपकरणानि विन्यस्य श्रीमूर्त्तिं प्रणम्य ) कथं द्वारदेशे कण्ठशब्द इव । को नाम आगच्छति ? भवतु । प्रत्युद्गच्छामि ।

( ततः प्रविशन्ति जयदेवः, पद्मावती, पराशरश्च । )

जयदेवः ।—सखे एते भगवच्चरणसन्निहिता वयम् ।

भूदेवः ।—आर्य्याः ! इतः इतः ।

जयदेवः ।—भद्र ! दूरादागता वयम् । अकिञ्चनः सदारमित्रो ब्राह्मणोऽस्मि । तद् दर्शयित्वा भगवन्तं यथा तस्य कृपालवमपि लभेमहि, तथा कर्त्तुमर्हसि ।

भूदेवः ।—अयमग्रतो भगवान् ! उपसर्पन्तु भवन्तः ।

( सर्वे भगवन्तं प्रणम्य बद्धाञ्जलयः पठन्ति । )

"प्रलयपयोधिजले धृतवानसि वेदं विहितवहित्रचरित्रमखेदम्
केशव ! धृतमीनशरीर ! जय जगदीश ! हरे !
क्षितिरतिविपुलतरे तव तिष्ठति पृष्ठे धरणिधरणकिणचक्रगरिष्ठे
केशव ! धृतकच्छपरूप ! जय जगदीश ! हरे !
वसति दशनशिखरे धरणी तव लग्ना शशिनि कलङ्ककलेव निमग्ना
केशव ! धृतशूकररूप ! जय जगदीश ! हरे !
तव करकमलवरे नखमद्भुतशृङ्गं दलितहिरण्यकशिपुतनुभृङ्गम्
केशव ! धृतनरहरिरूप ! जय जगदीश ! हरे !
छलयसि विक्रमणे बलिमद्भुतवामन ! पदनखनीरजनितजनपावन !
केशव ! धृतवामनरूप ! जय जगदीश ! हरे !
क्षत्रियरुधिरमये जगदपगतपापं स्नपयसि पयसि शमितभवतापम्
केशव ! धृतभृगुपतिरूप ! जय जगदीश ! हरे !
वितरसि दिक्षु रणे दिक्पतिकमनीयं दशमुखमौलिबलिं रमणीयम्
केशव ! धृतरामशरीर ! जय जगदीश ! हरे !
निन्दसि यज्ञविधेरहह श्रुतिजातं सदयहृदय ! दर्शितपशुघातम्
केशव ! धृतबुद्धशरीर ! जय जगदीश ! हरे !
म्लेच्छनिवहनिधने कलयसि करवालं धूमकेतुमिव किमपि करालम्
केशव ! धृतकल्कीशरीर ! जय जगदीश ! हरे !
श्रीजयदेवकवेरिदमुदितमुदारं शृणु शुभदं सुखदं भवसारम्
केशव ! धृतदशविधरूप ! जय जगदीश ! हरे !

जयदेवः ।—दीनोऽस्मि विष्णो ! न च मेऽस्ति किञ्चिद्
　　　　　　यथा सपर्यां ननु ते करोमि ।
　　गीतावली त्वत्पदयोर्विसृष्टा
　　　　　　तुष्टिं तवैषा विदधातु नाथ !

( इति पुस्तकं श्रीपदयोर्निवेशयति । )

भूदेवः ।—भद्र ! अभिनवमेतत् पुस्तकेन भगवदाराधनम् । तत् किं नामेदं पुस्तकम् ?

जयदेवः ।—प्रभोरेव लीलामधिकृत्य रचितमिदं गीतगोविन्दाभिधं काव्यम् ।

भूदेवः ।—यत् स्तोत्रं भवद्भिः पठितं तत् किमेतस्यैव ?

जयदेवः ।—एतस्यैवेत्यवगन्तुमर्हति महाभागः ।

भूदेवः ।—नेदृशी रचनाचातुरी पुरा दृष्टा श्रुता वा । श्रवणतर्पणः किल ते सुधास्यन्दी वचनविन्यासः ।

जयदेवः ।—गुणैकग्राहिणः किल सज्जनाः ।

भूदेवः ।—भद्र ! यदि नान्यथा मन्यसे, तदा मातरमिमां नामधेयतो ज्ञातुमिच्छामि ।　　　　( जयदेवो विचारयति । )

भूदेवः ।—अपि पद्मावतीशब्दभागियं जननी ?

जयदेवः ।—सुष्ठु निरूपितं भद्रेण ।

भूदेवः ।—यदहमपि पुरुषोत्तमस्यातिप्रियं श्रीमन्तं जयदेवगोस्वामिनमालपामीति मन्ये । भद्र ! कच्चिदवितथमुत्प्रेक्षितं मया ?

जयदेवः ।—तथ्या हि भवदुत्प्रेक्षा । अयमधमो जयदेव एव ।

भूदेवः ।—भद्र ! नार्हस्यात्मानमवधीरयितुम् । तदम्ब ! अपि विस्मृतासि ते तनयमिमम् ।

पद्मावती ।—कथं भवन्तमपि विस्मरामि ?

भूदेवः ।—क्व नाम ते पितरौ ?

पद्मावती ।—गृहे ।

भूदेवः ।—अपि कुशलिनौ तौ ?　　　　( पद्मावती शिरश्चालयति )

# SAMSKRITA BHARATI SUPPLEMENT.

OR

# A quarterly English Magazine

OF

## LITERATURE, SCIENCE AND ARTS.

The Editors will in no way be responsible for the views and opinions of the contributors.

Place of Printing—Benares.

Publisher—Manager of the 'Mahamandal Press.'

Office—Burdwan, Bengal.

Annual subscription (inclusive of postage) in advance for

Samskrita Bharati Supplement ... Re. 1—8 As.

Do. Do. Do. for

Samskrita Bharati ... Rs. 3—8 As.

Do. Do. Do. Do. for

both the parts ... Rs. 5.

## MOTTOS:

(RENDERED FROM SANSKRIT.)

Even a Chandala, if he is a devotee of Hari (God), is superior to a man of the twice-born caste (Brahmin); and even a man of the twice-born caste (Brahmin), if he is destitute of devotion to Hari (God), is inferior to a Chandaa —Mahanirvantantram.

This (man) is our relative, that (man) is an alien—this is the calculation of the mean-minded; the noble-minded, on the contrary, look upon the whole world as their kith and kin.—Hitopadesa.

A hero in deed leads those who are skilled (only) in speech-craft. The heroes in speech serve the energetic and persevering to their delight.—Mahabharatam, Santiparvan.

Having shaken off sorrow practise fortitude now. Let there be firmness and courage in tracing her (Sita's) whereabouts. Resolute men do not waver even in very difficult tasks in this world.—Ramayanam, Aranyakandam.

Dear to me (i. e. God) is the man who looks upon praise and dispraise in the same light, who is taciturn, who is satisfied with whatever he gets, who (as a recluse) has no fixed abode, who is of a firm disposition, and who has pious faith—Bhagavadgita, chapter XII.

A person can be reckoned great amongst us, neither by years nor by gray hair, neither by wealth nor by friends and relations, but by adeptness in Vedic lore—such was the injunction of the sages—Manusamhita, Chapter II.

Even a boy-king must not be slighted as a man; for, he is a great Divinity in the form of a human being.—Manusamhita, Chapter VII.

## RULES.

(a) Persons desirous of subscribing to this journal should write clearly their names and addresses to the Manager. *All remittances are to be made to him at Burdwan, Bengal.*

(b) Rules as to the publication of advertisements in this journal are to be ascertained from the Manager.

(c) Articles on various subjects excepting religion and modern politics, will be published in this journal. Articles containing reflections on individuals, sects, castes, tribes, communities, creeds, and religious beliefs, will be rejected.

(d) All articles, books and journals etc., are to be forwarded to *Babu Uma Charan Banerjee, M. A, Burdwan, Bengal.*

(e) There will be no acknowledgment of receipt of rejected contributions, They will be returned if the writers want them back, on giving necessary postal stamps.

(f) Writers of articles and commentators should take special care to see that the language of the articles and commentaries *be especially easy, accurate and lucid.*

(g) Results of research concerning the antiquities of India, carried on by well-qualified European and Indian scholars, will be embodied.

(h) Fables, stories, tales, anecdotes, short poems, biographical notices, news etc., will be published.

(i) Good English translation of famous Sanskrit, Pali, Bengali, Hindi works etc., or portions thereof, will occasionally be published.

(j) Gentlemen seeking answers to letters are requested to enclose necessary postal stamps.

## PATRONS AND THE ADVISORY BOARD.

## ADVISORY BOARD AND CONTRIBUTORS.

1. Mahamahopadhyaya Srijut Haraprasad Sastri, M. A., C. I. E., Formerly Principal, Sanskrit College, Calcutta,
2. Mr. Byomkesh Chakrabarti, M. A., Barrister-at-law, Calcutta.
3. Rai Bahadur Joges Chandra Ray Vidyanidhi, M. A, F. R. A. S. Ex-Professor, Ravenshaw College, Cuttack.
4. Srijut Ramnarayan Dutt, B. A., formerly Principal, Burdwan Raj College.
5. Professor J. N. Das Gupta, M. A., Bar-at-law, Presidency College Calcutta.
6. Professor D. N. Mullik, M. A. D. Sc., Do. Calcutta.
7. Srijut Sarada Ranjan Roy, Vidyavinod, M. A., Principal, Vidyasagar College, Calcutta.
8. Professor Lalitkumar Banerjee, Vidyaratna, M. A., Bangabasi College, Calcutta.
9. „ Tulshi Das Kar, M. A., Medical College, Calcutta.
10. „ Satyendra Nath Bhadra, M. A., Dacca,
11. Principal Sj. M. R. Roy S. K. Yegnarayan Aiyar Avl. M. A. Selam College, Madras,
12. Sj. P. P. Subrahmanya Sastri, B. A. (Oxon), M. A. (Madras), Superintendent, Samskrit schools and Colleges, Madras,

---

BURDWAN, BENGAL.
*Dated the*..........................1920.

DEAR SIR,

With a view to popularising the study of the Sanskrit Literature, especially its vedic, Philosophic and pouranic Branches—the splendid monuments of Hindu glory—we have started a Quarterly Sanskrit Magazine with an English Supplement. By god's grace and with the help and co-operation of several educated gentlemen we were able to start the paper, on the 3rd year of its existence, in January, 1920. We have not yet met with a hearty response to our appeal. But the response though feeble, is steadily gaining in strength, and we are determined not to lose heart; we hope that the nobleness of the cause will soon draw our learned countrymen to our ranks, and that they will put forth their best efforts to make this novel venture a success. This idea leads us confidently to expect that you will actively afford us material help and co-operation :— Literary contributions esp. rare manuscripts, learned philosophic disquisitions, work of research in various fields, interesting biographhical notices short stories etc, whether in English or Sanskrit would be particularly welcome from learned scholars. Practical encouragement in various ways is solicited of the well-to-do members of the Indian Aristocracy and Gentry who take special interest in the advancement of Sanskrit learning.

If pecuniary help be forth-coming, we are ready to distribute *gratis* 1,000 copies of Sanskrit Bharati and another thousand of the English Supplement amongst the poorer tols, High Schools, Public Libraries etc. all over India.

Yours very truly,
Kamal Krishna Bose, M.A., B.L.,
Prafulla Charan Banerji, B.A.,
Surendra Mohan Kavya-Vyakaran-Puran-Tirtha.

---

Bound Volumes for 1918 and 1919 may be had at the following rates ( inclusive of postage )

SAMSKRITA BHARATI

| | | | | | |
|---|---|---|---|---|---|
| With the English supplement | Rs. | 5 | as. | 6 |
| Samskrita Bharati | Rs. | 3 | as. | 12 |
| Samskrita Bharati supplement | Re. | 1 | as. | 10 |

Special improvements in this Magazine for the year 1921 will, God willing, be :—

(a) Studies in Ancient Biography of India.

(b) Articles involving work of research, investigation in Indian History, Economics &c.,

(c) Disquisitions on Vedanta and other systems of Indian philosophy.

Prafulla Charan Banerjee.
*Manager*
SAMSKRITA BHARATI OFFICE.

# SAMSKRITA BHARATI SUPPLEMENT.

VOL. 3. October-December 1920. No. 4.


## THE POSITION OF THE NON-ARYANS IN THE AGE OF THE RAMAYANAM.

( Continued from Page 83, Vol. III.)

By Professor Bama Charan Banerji, M. A,

### THE CREMATION OF VALI.

One of the most painful functions performed by the Vanaras is that of cremating the corpse of their king, Vali. The whole thing is done under the direct supervision of Rama and his brother and associate, Lakshmana. Shugriva is asked by Lakshman to collect dry fuel and celestial sandal; Angada brings together garlands, various clothes, ghee, oil and perfumes and Tara repairs to Kiskindhya and returns with a splendid *Shibika* (palanquin)—furnished with good seats and beautified with figures of birds and trees and covered all over with flowers and lotus-wreaths. The dead body is then covered with various garlands and clothes and ornaments and placed on the bier. The funeral procession is in all ways worthy of the royal corpse and is headed by the Vanaras who march in a file at the front. Behind them is the bier borne by strong men and behind that are the wives of Vali, weeping piteously and following the corpse of their lord to its final resting-place. Thus the procession marches on until they reach a mountain-stream. On its banks they erect a pyre and Shugriva and Angada take the corpse out of the bier and place it upon the pyre. Then they duly set fire to it with all solemn rites.

ततोऽग्निं विधिवद्दत्त्वा सोऽपसव्यं चकार ह ।
पितरं दीर्घमध्वानं प्रस्थितं व्याकुलेन्द्रियः ॥
संस्कृत्य वालिनं तन्तु विधिवत् प्लवगर्षभाः ।
आजग्मुरुदकङ्कर्तुं नदीं शुभजलां शिवाम् ॥

Then overwhelmed with grief, and setting fire with due rites, he circumambulated his father, bound for a long journey. The foremost of the Vanaras, having burnt Vali's corpse according to proper rites, went to a beautiful and sacred river, whose water is auspicious to perform the ceremoney of (sprinkling) water.

### CONTRACTION OF FRIENDSHIP.

It has ever been a characteristic of primitive peoples to invest even the commonest deeds with an air of sanctity. Thus we find that the Vanaras regard the formation of friendship as quite a solemn and sacred

affair—I should say, almost a religious rite. It must be done in the presence of the god of fire—the god who plays the most prominent part in the lives and deeds of primitive men. He must be the witness to testify to the solemn and indissoluble character of the contract.

The demon Danu,[8] on his death-bed, advises Rama to make friends with Shugriva, who will help him in recovering his stolen wife, before blazing fire.

वयस्यं तं कुरु क्षिप्रमितो गत्वाद्य राघव ।

अद्रोहाय समागम्य दीप्यमाने विभावसौ ॥

O Raghava, leave this place to-day and make him your friend, without delay, for love, before blazing fire.

Agreeably to the advice of Danu, Rama repairs to the Rishyamuka hill and contracts friendship with the Vanara—lord Shugriva. Shugriva offers his hand to Rama in token of friendship and the latter presses it with all warmth and even embraces the former.

रोचते यदि मे सख्यं बाहुरेष प्रसारितः ।

गृह्यतां पाणिना पाणिर्मर्यादा बध्यतां ध्रुवा ॥

एतत्तु वचनं श्रुत्वा सुग्रीवस्य सुभाषितम् ।

संहृष्टमना हस्तं पीडयामास पाणिना ।

हृष्टः सौहार्दमालम्ब्य पर्यष्वजत पीडितम् ॥

If friendship with me commends itself to you, here is my hand spread for you; press it with your hand. Hearing the gently-uttered speech of Shugriva, Rama, with a gladdened heart, pressed the hand with his own. And making friends with him, Rama, well-pleased, warmly embraced Shugriba.

Then Hanumat lights a sacred fire which is worshipped with flowers and round which they both go several times, always keeping the fire to their right.

दीप्यमानं ततो वह्निं पुष्पैरभ्यर्च्य सत्कृतम् ।

तयोर्मध्ये तु सुप्रीतो निदधौ सुसमाहितः ॥

ततोऽग्निं दीप्यमानं तौ चक्रतुश्च प्रदक्षिणम् ।

सुग्रीवो राघवश्चैव वयस्यत्वमुपागतौ ॥

Then worshipping the burning fire with flowers, he, exceedingly delighted, placed it between them (Rama and Shugriva). Then those two went round the fire and thus Shugriva and Rama contracted friendship with each other.

MANNER OF SHOWING RESPECT TO SUPERIORS :—

Every nation has got its peculiar manner of showing respect to superiors. The Indian falls prostrate upon the ground before a superior and takes the dust of his feet. The Vanaras have a similar custom amongst them. Thus we find that Shugriva, seeing Rama pierce the seven trees with an arrow, falls down prostrate at his feet.

स मूर्द्धा न्यपतद्भूमौ प्रलम्बीकृतभूषणः ।

He bowed down his head on the earth, with his ornaments hanging down.

The people of Kiskindhya, when they see their new king, Shugriva, enter the capital, prostrate themselves on the ground before him.

ततः प्रकृतयः सर्व्वा दृष्ट्वा हरिगणेश्वरम् ।

प्रणम्य मूर्द्धा पतिता वसुधायां समाहिताः ॥

Seeing the lord of the Vanaras, the subjects lay prostrate upon the ground and bowed their heads unto him.

So too Angada, when he enters the harem to inform Shugriva of Lakshmana's advent, touches the feet of the King and of his mother and Ruma.

संगृह्य पादौ पितुरुग्रतेजा जग्राह मातुः पुनरेव पादौ ।

पादौ रुमायाश्च निपीडयित्वा निवेदयामास ततस्तदर्थम् ॥

Angada of great strength first touched the feet of his uncle and then those of his mother once more and then touching the feet of Ruma laid before them everything in full.

Again, when Shugriva accompanies Lakshmana to the place where Rama was, he alights from his शिबिका or carriage as soon as he beholds Rama and bows down his head at the feet of the latter.

पादयोः पतितं मूर्द्धा तमुत्थाप्य हरीश्वरम्

Raising the lord of the Vanaras, fallen at his feet with bent head.

DRINKING.

The habit of drinking is not unknown to the Vanaras. Indeed they

are greatly addicted to it. When Angada enters the harem to inform Shugriva of the arrival of the angered Lakshmana, the latter is not in a condition to receive any visitor, being overpowered by excessive drinking. He is intoxicated by liquor and overpowered by lust.

बभूव मदमत्तश्च मदनेन च मोहितः ॥
मदविह्वलताम्राक्षो व्याकुलः स्रग्विभूषणः ।

Under the influence of liquor, with red eyes, agitated and adorned with garlands.

This habit of drinking is also shared by the common people. Thus we find that in the Kiskindhyakandam, the Vanaras are spoken of as drinking honey and मैरेय wine.

पिबन्तो मधु मैरेयं भीमवेगाः प्लवङ्गमाः ।

The Vanaras of great speed, taking honey and *maireya* wine.

Nor is this confined to men alone; women too, come in for their share. When Tara, at the request of Shugriva, goes to receive Lakshmana and appease his anger, she is प्रस्खलन्ती मदविह्वलाक्षी प्रलम्बकाञ्चीगुण-हेमसूत्रा—unsteady in her gait, with eyes wild with wine, and with the golden wires of her girdle hanging down (round her hips.)

As also पानयोगाच्च निवृत्तलज्जा or with her modesty removed by the influence of liquor

In this connexion we must remember that in ancient times it was not thought disreputable for ladies of rank and position to drink. Thus we find that in Malavikagnimitra Kalidasa describes the Queen as being given to drinking.

SVASTYAYANAM.

The practice of performing religious rites and ceremonies for the safety of a man in anticipation of future evil is also known to the Vanaras. Even to-day the pious Hindu performs the religious ceremony known as Svastyayanam for the health and welfare of a man whenever there is any apprehension of danger to his person. Similarly we find Tara performing the Svastyayana ceremony for the welfare of her lord, Vali. She tries hard to dissuade Vali from accepting the challenge of Shugriba once again, as she apprehends danger will befall him in a second contest with the latter. But Vali pays no heed to her entreaties and persuasions and goes forth out of the city to quell the insolent enemy. The devoted and loving wife cannot think of anything else to do than to offer up prayers to the Almighty for the welfare and safety of her husband.

Desirous of her lord's triumph in the fight, she performs the Svastyayana ceremony.

ततः स्वस्त्ययनं कृत्वा मन्त्रविद्विजयैषिणी ।

Then she, versed in mantras, wishing victory to her lord and having performed Svastyayanam &c.

### Approaching the King with उपायनम्.

It has ever been a custom among the peoples of India to approach the king with some presents. The king to them partakes of the Divine nature, is a portion of the Divine Self and must be propitiated. None should approach the king without something to offer him and that something must be the best thing one possesses. We find that this custom is known to the Vanaras and that they appear before their king with presents of roots and fruits and herbs. The various Vanara tribes when they go to Kiskindhya under Shugriva's orders, gather roots and fruits and herbs on the way and offer them to Shugriva, their king.

ते गृहीत्वौषधीः सर्व्वाः फलमूलञ्च वानराः ।
तं प्रतिग्राहयामासु र्व्वचनञ्चेदमब्रुवन् ॥
एवं श्रुत्वा ततो हृष्टः सुग्रीवः प्लवगाधिपः ।
प्रतिजग्राह च प्रीतस्तेषां सर्व्वमुपायनम् ॥

Taking all the herbs, roots and fruits the Vanaras presented them to Shugriva and uttered these words................Hearing this, the king of the Vanaras, Shugriva, being well-pleased, accepted their presents.

### Polygamy.

Oriental monarchs have always had a strong fascination for a harem-ful of beauties and the kings of Kiskindhya are no exceptions. Vali had several wives although he loves most to dally with the fascinating person of Tara. All these ladies leave their harem and repair to the scene of fight where Vali lies mortally wounded, to have a farewell look at their beloved husband.

इमाः पश्यावरा बह्वी भार्य्यास्ते वानरेश्वर ॥
तस्या विलपितं श्रुत्वा वानर्य्यः सर्वतश्च ताः ।
परिगृह्याङ्गदं दीना दुःखार्त्ताः प्रतिचुक्रुशुः ॥

O lord of the Vanaras, behold, these are your other wives, who are many in number, Hearing her lamentation, the others, overpowered

with grief and misery, embraced Angada and piteously bemoaned ( their lot ).

ततः प्रविहिताः सर्व्वा वानर्य्योऽस्य वशानुगाः ।
चुक्रुशुर्वीरवीरेति भूयः क्रोशन्ति ताः प्रियम् ॥
ताराप्रभृतयः सर्व्वा वानर्य्यो हतबान्धवाः ।
अनुजग्मुश्च भर्त्तारं क्रोशन्त्यः करुणस्वराः ॥

Then all his wives bemoaned their lord, exclaiming again and again, "O hero", "O hero". Tara and all the other Vanara-women, having lost their lord, bewailed in piteous accents and followed (the corpse of) their departed husband.

It may not be out of place here to say a few words about the Vanaras' conception of love. Love to them is a purely sensual affair; it has nothing spiritual or supersensual in it.

So far as the relation between man and woman is concerned, one would be struck by the connexion between Vali and Ruma, the wife of Shugriva, after Shugriva's exile and that between Shugriva and Tara, after the demise of Vali. We find that after Shugriva is banished, his wife Ruma takes her place in the harem of Vali amongst his wives. This is quite evident from Shugriva's lament to Rama as also from the rebuke administered to Vali by Rama.

तेनाहमपविद्धश्च हृतदारश्च राघव ।

By him (Vali) have I been abandoned, and robbed of my wife.

We also find that after the death of Vali, his wife Tara becomes the queen of Shugriva.

प्राप्तवन्तमभिप्रेतान् सर्व्वानेव मनोरथान् ।
स्वाञ्च पत्नीमभिप्रेतां ताराञ्चापि समीप्सिताम् ॥

Having accomplished all his desires and purposes, and having obtained his own wished-for wife as also Tara, much to be desired.

Tara herself tells Lakshmana that through the grace of Rama, Shugriva has become her lord.

रामप्रसादात् कीर्त्तिञ्च कपिराज्यञ्च शाश्वतम् ।
प्राप्तवानिह सुग्रीवो रुमां माञ्च परन्तप ॥

O ye the scourge of your foes, through the grace of Rama, Shugriva has here won fame and the everlasting kingdom of the Vanaras, and Ruma and myself.

It is quite evident that the acceptance by a Vanara as his own wife of the widow of a deceased brother was sanctioned by law and custom and that when Shugriba, after the death of Vali, makes Tara his wife, he does nothing wrong. But Vali surely is guilty of a sinful act when he treats Ruma as his wife, after the expulsion of Shugriva from the realm. And for this he is severely rebuked by Rama, who tells him that the proper punishment for one who enjoys his younger brother's wife is death.

Nor was it anything but sinful on the part of Shugriva to accept as his own wife the wife of his elder brother Vali, when Vali was supposed to be dead but was really alive. We learn from Angada that an elder brother's wife was given the veneration due unto the mother and that he who treated as his own wife the wife of an elder brother during the life-time of the latter, committed a heinous crime.

भ्रातुर्ज्येष्ठस्य यो भार्य्यां जीवतो महिषीं प्रियाम् ।
धर्म्मेण मातरम् यस्तु स्वीकरोति जुगुप्सितः ॥
कथं स धर्म्मं जानीते ... ...

How can that man, who, sinful as he is, accepts as his own wife the beloved queen of his elder brother who is alive, mother in the eye of *dharma*, be said to be acquainted with religion?

(To be continued).

## METHODS TO BE FOLLOWED (IN THE STUDY OF THE SOCIOLOGICAL AND HUMANISTIC SCIENCES IN A MODERN INDIAN UNIVERSITY.)

By Professor Radhakamal Mukherjee M. A. P. R. S.

The watchword of a modern University in India should be a new, extended, corrected historical comparative method in the study of the humanistic and sociological sciences. In the so-called genetic and comparative studies in the West, the human and social experiments of the Asiatic peoples have been misconceived and misinterpreted. In the crude imitations of the old English Universities that we have here, students and professors alike deal exclusively with the judgments of value and validity of the Western civilisation which, to them, as well as to the University, represent the "scientific" and final judgments of man and his varied experiments in art, or religion, or social arrangement and construction. The Western social and humanistic sciences and the second-hand products of these in the Indian Universities can give only partial and intermediate generalisations because they are based on an insufficient analysis and an incomplete collection and classification of data. A new Indian University ought to extend the history of culture—philosophical, scientific and artistic—by pointing out the contribution of India to the growth and development of civilisation, and build anew the sociological and humanistic sciences by collecting and compa-

ting the provisional generalisations derived from the study of both western and eastern facts and norms. In different fields—philosophy, art, economics, sociology—universal generalisations will then be reached which will subsume the intermediate principles and formulæ of limited scope and validity, applicable to particular cultural regions and regional cultures. From the broad and general principles of universal scope and validity it would be possible to descend again by the deductive method, to the concrete domain of particulars and limiting conditions and formulate experiments adapted to the needs and opportunities of particular cultures and regions for reconstruction and progress. But this work is not possible unless the faculties and academies which are still being produced under the hasty and superficial judgments which Macaulay pronounced on the methods and policy of Indian education are completely reorganised and reconstituted. If this work can be done, it will for ever render impossible the narrow sectional view of human history which ignores the lives and life-values, the experience and the wisdom of the Asiatic races and which, in India, turns these humanities and social sciences into barren abstractions which have shunned the actual facts and conditions of Indian life as irrelevant or disturbing factors. For the West it will make it possible to utilise the communal and synthetic genius of the Indian civilisation for the coming social reconstruction in the West and for India it will rescue us from the evils of commercialism, industrialism, officialism, clericalism and the tyranny of examination alike in the new education which will train individuals by social studies and social action.

In my opening extension lecture at this University, in which I endeavoured to formulate the scheme of a new and independent school of Indian economics, I pointed out the fundamental differences between Eastern and Western social structures in the following words :—

"Both industrial and political constitution which has developed in the West has shown remarkable mechanical efficiency under the monistic theory of social grouping under dominating central organs such as the militaristic or capitalistic types of organisation. But the principle of social grouping which has produced the centralised organisation of trusts and cartels, socialistic states and Germanic empires for exploitation has also exhibited explosive and devastating forces in the form of supermen and monarchs dominating to their advantage every field of industry, social, and political life.

And now there arises as an imperative need, a new pluralistic principle of social grouping based not on the dominance *ab extra* of a centralised power which separates itself as an individual entity from the subordinate social organisations and uses them for its own advantage, but on the recognition of the divine right of the original and primary constituent

bodies and individuals to find their satisfaction through concerted action, and this can only be promoted if the central organ has for its only objective the co-ordination and correlation of these elemental bodies and no particularist interests of its own to promote.

In the East, in social, political, and industrial organisation, the principle of social grouping has recognised the free and independent interests of the constituent primary bodies resulting not in the concentration of power in a central organ, but in a decentralised polity, and the diffusion of industry, of wealth, of population, and of social functions and activities. Thus the life of the social organism has not been sacrificed to the soul-killing ideal of mere mechanical and administrative efficiency. This principle of social organisation has created multiple communal groups for the development of individual personality and not one vast machine called the state or the industrial system in which the individual is perpetually liable to be reduced to a mere automaton. The East does not rear the fabric of an omnipotent state or a socialistic democracy, but develops intermediate social groups like the family as the unit in economic life, guilds and castes as industrial groups the varnas and Asrams as ethico-religious groupings, the panchayats, the village communities and the five assemblies in political composition. In religion India has gone beyond an intellectual and barren monotheism to a pluralism that sees God in the infinite manifestations of nature and of human relationship. The pluralistic principle of social constitution feeds itself on this characteristic attitude of mind. In social organisation India has not established dominating central organs such as the absolutist and monopolistic types of social grouping which can satisfy only a bare and materialistic ideal of mechanical and administrative efficiency. India establishes and perpetuates multiple forms of social grouping, to which the individual is tied by organic and spiritual bonds, and which, like a concrete polytheism in the conception of Biswarupa and Biswadeba, satisfy the totality of human interests and needs, and are conducive to the development of the complete and concrete personality.

"This principle of social organisation has to be rehabilitated in order to check the destructive tendencies of the absolutist and militaristic ideal that has threatened to swallow up all vital and growing forms of social constitution. This rehabilitation is necessary even in the interests of the West itself."

At the end of the course of lectures recently delivered by me at Lahore as special lecturer in Indian economics I urged that there is no doubt that the fundamental social institutions of the West, such as the state and private property as well as the economic organisation will be built

anew as a result of the war. The omnipotent socialistic state obtruding its arms into the domains of private and personal life, and accepting the criterion that it is the majority who must after all rule, and the minority will be obliged to submit with the best grace possible ; the power of the financial and capitalistic interests in spite of the advancement in political democracy ; a capitalistic system of industry creating an enormous disparity of wealth in society and maintaining and perpetuating an industrial oligarchy ; the evils of poverty and unemployment, overcrowding and slums ; the divorce of life from nature and from nature's standards ; the loss of human sympathies and private affections ; the lust for power——power in war by the state derived from command of the seas by the navy, and of the lands by the army ——and power in wealth in the individual ; instead of intellectual power and intrinsic wealth, the wealth of art, literature and religion for a nation, and of character and spirituality for the individual ; the evils of financialism, and militarism will rebound from these into worse evils——the literal struggle for existence and class conflict in society as the modes of social progress——all these which have their appropriate theologies in a machine politics, a monetary economics and a mechanical biology of the West will give place in the natural, scientific, and democratic civilisation of the future to healthier social institutions which will emphasise man's return to a freer, nobler life, a return to human instincts and natural feelings, and to standards and norms derived from nature The Indian economic scheme which, by utilising the communal habits and institutions for purposes of mechanical and technical efficiency, will be able to withstand the inroads of industrialism, will supply valuable material for the reconstruction of economic life that is in immediate prospect in the West. These materials will represent the human and social experiments of the race which has wisely limited the rights of the state and of the private property, institutions which are the embodiment of the appropriative and exploitative impulses of the West, and has also wisely promoted creativeness at the expense of the appropriateness that has become too much the characteristic of western civilisation in industry and politics, both in internal and external relations, and has now thrown the world into the most dreadful confusion that the human race has ever experienced. Communalism, the science of economics based on this economic scheme, will not only furnish new data of human and economic construction, and organisation, but will also help in the formulation of broad and general principles of economics by collating and comparing the judgments of value and validity of the western and eastern cultures, universal science in which the Indian consciousness like every other regional consciousness, in the zones of cultural

distribution, will contribute enduring and characteristic truths which are but conscious formulations of those aspects of the universe-idea revealed to this group-mind from its angle of vision, and deeply embedded in its unconscious and sub-conscious strata. The economics of communalism contributing to the formulation of universal economics ought to be also the prelude to the new schools of sociological and humanistic sciences, schools of anthropology, sociology and politics, of comparative law and comparative jurisprudence, which will subsume the intermediate generalisations and formulæ of the sciences that go by these names in the West in principles of universal scope and validity derived from a corrected and extended historico-comparative method that is first applied to the study of economics.

The University, selective and productive, must give its help in the reconstruction of our economic and social life, the remaking of our homes and villages, the planning of clean cities, noble social structures and happy families. Western education, with its exaggerated emphasis on the principle of division, has created barren specialisms in arts and sciences and has created the unfortunate breach between the academy and the press and the platform, between the laboratory and the workshop, between the workshop and the garden, and between the art school and the slums The new education will reunite the energies which are now being dissipated here and there in these separate and even conflicting fields of thought and action, and bringing about a co-ordination of social studies and social action, guide and inspire the harmonious blending of the communalism of India with the competition of the West in new, clean, beautiful noble Indian cities and villages, of electricity, hygiene, art and religion, of which the new university will be the inner soul, builder, and inspirer. Witness the physical degeneration and the unemployment, the declining birth-rate of our middle classes, our disintegrated agriculture, our deteriorated arts and crafts, our deserted villages and unclean cities, the disintegration of our communal system and the abject poverty of our labourers The university must understand the deep issues of our life, grip our vital problems, and discerning and selecting what is best in eastern and in western cultures, formulate social aims and civic policies to check the disintegration and ruin of our old civilisation. The University militant should guide and inspire new social and human experiments, use specialised training and capacity for civic betterment and social welfare. Nothing is more demanded of our Universities than the reunion of regional and social studies and regional and social initiatives and experiments in new and ever-expanding fields of collective thought and action. Six decades of an education, meant to satisfy administrative and professional needs for a microscopic minority, which has kept itself aloof from the vital problems

of the life of the nation have passed ; the future demands that education should be regional, communal, national, and keep steadfastly before itself the practical ends of social and civic welfare and progress.

## STRAY NOTES.

By a Professor.

No constitution however strong can ever last long without the sympathetic co-operation of its different limbs and organs, and indeed the strength of any constitution depends on the strength of these bonds of sympathy and union existing among its different members. In the animal bodies, the brain is the overlord and the nerves are carrying out its commands to the various limbs and organs and are carr ying to the brain the appeals of the different organs and limbs. Brain matures plans as to how to get food and thereby nourishment. Hands with the help of the legs gather and cook food and send them to the mouths. The stomach digests food and in its turn sends nourishment to the brain, hands, legs and the other organs and limbs. Thus it is only by the co-operation of the different limbs and organs that the animal structure is sustained. If any of the organs be defective or diseased and fail to carry out its function properly, the whole system suffers, and stoppage of action of a single vital organ means death of the whole system. As the animal structure where the different organs and limbs are not in their natural working order, is soon invalidated, so the society where there is no sincere co-operation among its various castes, creeds and callings soon comes to grief.

Vaisyas may think that as they are earning wealth by trade, commerce and agriculture, and as the Kshatriyas or ruling classes are but sucking their blood like nightmare and parading the streets with gorgeous weapons and equipments, they must withhold all taxes and starve out the Kshatriyas, but they will sorely feel the need of these Kshatriyas when their fields are overrun and factories invaded by relentless hordes of foreign invaders. Similarly ruling classes destroying trade, industry and agriculture of the people by levying tax upon tax and by enforcing many and mainfold restrictions and disabilities will in no distant date share the fate of the householder underfeeding his milch cows.

If Vaisyas ill pay the labouring classes or Sudras, starve them and cause their degeneration and decay, they will have to rue their mistake very soon for insufficiency of healthy and able-bodied labourers and if Sudras or labouring classes on the other hand demand impossible wages and strike work in case the capitalists fail to meet their demands and thereby destroy the business and the capital, they will have to repent of their error for widespread unemployment. No society can prosper without the heartfelt co-operation of the different classes constituting it.

